माध्यमिककक्षायाः पाठ्यक्रमः

# संस्कृतव्याकरणम् - २४६

## पुस्तकम् - १




**राष्ट्रीय-मुक्त-विद्यालयी-शिक्षा-संस्थानम्**

ए-२४-२५, संस्थागतक्षेत्रम् , विभागः - ६२

नोएडा - २०१ ३०९ (उत्तरप्रदेशः)

जालपुटकूटम् - www.nios.ac.in निर्मूल्यः दूरभाषः - १८००१८०९३९३

**National Institute of Open Schooling**

A-२४-२५, Institutional Area, Sector – ६२

NOADA – २०१ ३०९ (UP)

# माध्यमिककक्षा - संस्कृतव्याकरणम् (२४६)

## मन्त्रणामण्डलम्


**आचार्यः चन्द्रभूषणशर्मा**
अध्यक्षः
राष्ट्रीय-मुक्त-विद्यालयी-शिक्षा-संस्थानम्
नोएडा, उत्तरप्रदेशः - २०१ ३०९

**श्री संजय-कुमार-सिन्हा**
निदेशकः (शैक्षिक)
रा.मु.वि.शि.संस्थानम्
नोएडा, उत्तरप्रदेशः - २०१ ३०९

**डॉ. सन्ध्या-कुमारः**
उपनिदेशकः (शैक्षिक)
रा.मु.वि.शि.संस्थानम्
नोएडा, उत्तरप्रदेशः - २०१ ३०९


## पाठ्यविषय-निर्मिति-समितिः


**प्रो. डॉ. अर्कनाथ-चौधरी (समितेः अध्यक्षः)**
उप-कुलपतिः
श्रीसोमनाथ-संस्कृत-विश्वविद्यालयः
वेरावल -३६२२६६ (गुर्जरप्रदेशः)

**डॉ. नीरजकुमारभार्गवः (समितेः उपाध्यक्षः)**
सहायकप्राध्यापकः (संस्कृताध्ययनविभागः)
रामकृष्ण-मिशन-विवेकानन्द-विश्वविद्यालयः
बेलुड-मठः, हावडा - ७११ २०२ (प.वङ्गम्)

**डॉ. हरि-राम-मिश्रः**
सहायकप्राध्यापकः (संस्कृतविभागः)
जवाहरलाल-नेहरू-विश्वविद्यालयः
नवदेहली

**स्वामी वेदतत्त्वानन्दः**
प्राचार्यः
रामकृष्ण-मठ-विवेकानन्द-वेद-विद्यालयः
बेलुड-मठः, मण्डलम् - हावडा - ७११ २०२ (प.वङ्गम्)

**डॉ. विजेन्द्र-सिंहः**
वरिष्ठ-प्राध्यापकः (संस्कृतम्)
शिक्षानिदेशालयः, केन्द्रसर्वकारः, देहली

**श्रीमान् मलय-पोडे**
सहायकप्राध्यापकः (W.B.E.S) (संस्कृतविभागः)
राणीबाँध-सर्वकारीय-महाविद्यालयः
स्थानम् - राणीबाँध, मण्डलम् - बाँकुडा - ७२२१३५ (प.वङ्गम्)

**श्रीमान् सुमन्त-चौधुरी**
सहायकप्राध्यापकः (संस्कृतविभागः)
सबं-सजनीकान्त-महाविद्यालयः
पत्रालयः - लुटुनिया, रक्षालयः - सबं
मण्डलम् - पश्चिममेदिनीपुरम् - ७२१ १६६ (प.वङ्गम्)

**डॉ. राम-नारायण-मीणा**
सहायक-निदेशकः (शैक्षिक)
राष्ट्रीय-मुक्त-विद्यालयी-शिक्षा-संस्थानम्
नोएडा, उत्तरप्रदेशः - २०१ ३०९


## पाठ्यक्रम-समन्वयकः


**डॉ. राम-नारायण-मीणा**
सहायक-निदेशकः (शैक्षिक)
राष्ट्रीय-मुक्त-विद्यालयी-शिक्षा-संस्थानम्
नोएडा, उत्तरप्रदेशः - २०१ ३०९

# पाठ्यविषयसामग्री-निर्मिति-समितिः

## संपादकमण्डलम्

**डॉ. नीरजकुमारभार्गवः**
सहायकप्राध्यापकः (संस्कृताध्ययनविभागः)
रामकृष्ण-मिशन-विवेकानन्द-विश्वविद्यालयः
बेलुड-मठः, हावडा - ७११ २०२ (प.वङ्गम्)

**स्वामी वेदतत्त्वानन्दः**
प्राचार्यः
रामकृष्ण-मठ-विवेकानन्द-वेद-विद्यालयः
बेलुड-मठः, मण्डलम् - हावडा - ७११ २०२ (प.वङ्गम्)

## पाठलेखकाः

**(पाठः १-९)**
**स्वामी वेदतत्त्वानन्दः**
प्राचार्यः
रामकृष्ण-मठ-विवेकानन्द-वेद-विद्यालयः
बेलुड-मठः, हावडा - ७११ २०२ (प.वङ्गम्)

**(पाठः १०-१४)**
**श्रीमान् जयदेवदिण्डा**
अनुसन्धाता (संस्कृताध्ययनविभागः)
रामकृष्ण-मिशन-विवेकानन्द-विश्वविद्यालयः
मण्डलम् - हावडा - ७११ २०२ (प.वङ्गम्)

**(पाठः १५-१८)**
**श्रीमान् सुमन्त-चौधुरी**
सहायकप्राध्यापकः (संस्कृतविभागः)
सबं-सजनीकान्त-महाविद्यालयः
पत्रालयः - लुटुनिया, रक्षालयः - सबं
मण्डलम् - पश्चिममेदिनीपुरम् - ७२१ १६६ (प.वङ्गम्)

**(पाठः १९-२५)**
**डॉ. नीरजकुमारभार्गवः**
सहायकप्राध्यापकः (संस्कृताध्ययनविभागः)
रामकृष्ण-मिशन-विवेकानन्द-विश्वविद्यालयः
बेलुड-मठः, हावडा - ७११ २०२ (प.वङ्गम्)

**(पाठः २६-२९)**
**श्रीमान् राहुलगाजिः**
अनुसन्धाता (संस्कृतविभागः)
यादवपुरविश्वविद्यालयः
कलिकाता - ७०० ०३२ (प.वङ्गम्)

## रेखाचित्राङ्कनं मुखपृष्ठचित्रणं च

**स्वामी हररूपानन्दः**
रामकृष्ण-मिशन्
बेलुड-मठः
मण्डलम् - हावडा - ७११ २०२ (प.वङ्गम्)

## अध्यक्षीयः सन्देशः

प्रिय विद्यार्थिन्

'भारतीयज्ञानपरम्परा' इति पाठ्यक्रमस्य अध्ययनाय अध्येत्रे हार्दं स्वागतं व्याह्रियते।

भारतम् अति प्राचीनम् अति विशालं च। भारतस्य वाङ्मयमपि तथैव प्राचीनं प्रशस्यतरं सुमहत् च। सृष्टिकर्ता भगवान् एव भारतीयानां सकलविद्यानाम् उत्स इति सिद्धान्तः शास्त्रेषु। भारतस्य सुज्ञाते अल्पज्ञाते अज्ञाते च इतिहासे वाग्विनिमयस्य माध्यमं संस्कृतमिति सुविदितं समेषाम्। प्रदीर्घे अस्मिन् भारतेतिहासे यानि शास्त्राणि समुद्भूतानि, यत् चिन्तनं प्रावर्तत, ये भावाः प्रकटिताः तत्सर्वमपि संस्कृतभाषाभाण्डारे निबद्धमस्ति। अस्य भाण्डारस्य आकारः कियान्, तलः कियान् गभीरः, मूल्यं कियद् अधिकम् इति निर्धारणे न कोऽपि समर्थः। पुरा किं किं पठन्ति स्म भारतीया इति एकेन श्लोकेन कथञ्चित् संक्षिप्य प्रकट्यते -

अङ्गानि वेदाश्चत्वारो मीमांसा न्यायविस्तरः।

पुराणं धर्मशास्त्रं च विद्या ह्येताश्चतुर्दश।। (वायुपुराणम् ६१.७८)

अस्मिन् श्लोके चतुर्दश विद्यास्थानानि कथ्यन्ते। चत्वारो वेदाः (उपवेदाः च) षड् वेदाङ्गानि मीमांसा (पूर्वोत्तरमीमांसे) न्यायः (आन्वीक्षिकी) पुराणम् (अष्टादश मुख्यानि पुराणानि, उपपुराणानि च) धर्मशास्त्रम् (स्मृतिः) इति चतुर्दश विद्यास्थानानि कथ्यन्ते। इतोऽपि काव्यादीनि बहूनि शास्त्राणि सन्ति। एतासां विद्यानाम् उत्सः प्रवाहः प्रदानं प्रगतिः प्रवृद्धिः च महता कालेन जाता। समाजस्य कल्याणाय भारतस्य पाठदानपरम्परायां गुरुकुलेषु आध्यात्मिका मनोवैज्ञानिका शरीरारोग्यविषया राजनीतिः दण्डनीतिः काव्यानि काव्यशास्त्राणि अन्यानि च बहूनि शास्त्राणि पाठ्यन्ते पठ्यन्ते स्म।

एतासाम् विद्यानां शिक्षणाय बटुः पितृगृहं त्यक्त्वा गुरुकुलेषु ब्रह्मचर्याश्रमं यापयति स्म। एतासु निष्पाणो भवति स्म। एतासु विद्यासु निष्णाता जना अद्यापि केचित् सन्ति। नैसर्गिकपरिवर्तनानि परदेशीयानि आक्रमणानि स्वदेशीया विप्लवाः इत्यादिभिः बहुभिः कारणैः एता विद्या यथापूर्वं न पाठ्यन्ते भारते। अपिच ये केऽपि पठन्ति तेषां पाठ्यक्रमः परीक्षा प्रमाणपत्रम् इत्यादिकम् आधुनिकशिक्षणपद्धत्या क्वचित् राज्येषु भवति, बहुत्र नैव भवति। अतः एतेषां प्राचीनशास्त्राणाम् अध्ययनं परीक्षणं प्रमाणीकरणं च भवतु इति धिया अयं पाठ्यक्रमः राष्ट्रियमुक्तविद्यालयीशिक्षासंस्थानेन प्रारब्धः। जनहिताकारि यद् यावद् यथा च ज्ञानं एतेषु शास्त्रेषु निहितं निभृतम् चास्ति तद् जनानां पुरस्तात् प्रकटितं भवतु इति लक्ष्यम्। तेन सर्वेऽत्र सुखिनः सन्तु, सर्वे सन्तु निरामयाः, सर्वे भद्रदृष्टिसम्पना भूत्वा भद्राणि पश्यन्तु, मा कश्चिद् दुःखम् आप्नुयात्, मा कश्चिद् दुःखदाने प्रवर्तेत इति अत्यन्तम् उदारम् उद्देश्यम् 'भारतीयज्ञानपरम्परा' इति नामकस्य अस्य पाठ्यक्रमस्य प्रकल्पने वर्तते। विज्ञानं शरीरारोग्यं चिन्तयति। कलाविषया मनोविज्ञानम् आध्यात्मिकविज्ञानं मनोरञ्जनं च चिन्तयन्ति। विज्ञानं साधनस्वरूपं सुखोपभोगः साध्यं चास्ति। अतः विज्ञानादपि कलाशाखायाः श्रेष्ठत्वं निःसन्देहमस्ति। जनः कलाम् उपयुज्य विज्ञानात् सुखम् नाप्नोति। अपि तु विज्ञानम् उपयुज्य कलातः सुखमाप्नोति। नात्र व्यतिक्रमः परिलक्ष्यते।

अयं संस्कृतव्याकरणस्य पाठ्यक्रमः छात्रानुकूलो ज्ञानवर्धको लक्ष्यसाधकः पुरुषार्थसाधकश्च अस्ति इति विश्वसिमि।

अस्य पाठ्यक्रमस्य निर्माणे ये हिताभिलाषिणो विद्वांसः उपदेष्टारः पाठलेखकाः त्रुटिसंशोधकाः टङ्कायोजकाः च साक्षात् परोक्षरूपेण वा साहाय्यं कृतवन्तः, तेभ्यः संस्थानपक्षतो हार्दिकं कार्तज्ञ्यं व्याह्रियते। रामकृष्णमिशन्-विवेकानन्द-विश्वविद्यालयस्य कुलपतिवर्याः श्रीमन्तः स्वामिन आत्मप्रियानन्दाः विशेषतो धन्यवादार्हा येषाम् आनुकूल्यं प्रेरणां च विना कार्यस्यास्य परिसमाप्तिः दुष्करा एव।

अस्य पाठ्यक्रमस्य अध्येतारो धन्या भवन्तु, सफला भवन्तु, विद्वांसो भवन्तु, सज्जना भवन्तु, देशभक्ता भवन्तु, समाजसेवका भवन्तु इति अति हार्दा सदिच्छा अस्माकम्।

आचार्यः चन्द्रभूषणशर्मा
अध्यक्षः
राष्ट्रीय-मुक्त-विद्यालयी-शिक्षा-संस्थानम्

## निदेशकीया वाक्

प्रिय अध्येतः

'भारतीयज्ञानपरम्परा' इति पाठ्यक्रमं पठितुम् उत्साहिभ्यो भारतीयज्ञानपरम्पराया अनुरागिभ्य उपासकेभ्यश्च हार्दिकं स्वागतं विज्ञाप्यते। परमहर्षविषयः अयं यद् गुरुकुलेषु अधीयाना विषया अस्माकं राष्ट्रीय-मुक्त-विद्यालयी-शिक्षा-संस्थानस्य पाठ्यक्रमेऽपि समाविष्टा भवन्ति। आ बहोः कालाद् विद्यमानः अन्तरायो दूरीभवेदिति आशासे। हिन्दुजैनबौद्धानां धर्मिकम् आध्यात्मिकं काव्यादिकं च वाङ्मयं प्रायः सर्वमपि संस्कृते निबद्धमस्ति। एतेषां शतस्य कोटीनां मनुजानां प्रियाणाम् विषयाणाम् भूमिकायै प्रस्तुत्यै प्रवेशयोग्यतायै प्ररोचनायै च माध्यमिकस्तरे उच्चमाध्यमिकस्तरे च केचिद् विषयाः पाठ्यत्वेन योज्यन्ते। यथा आंग्ल-हिन्द्यादिभाषाज्ञानं विना तत्तद्भाषया लिखिता माध्यमिकस्तरीया ग्रन्थाः पठितुं बोद्धुं च न शक्यन्ते तद्वत् अत्रापि प्रारम्भिकं संस्कृतं न जानाति चेत् इमं पाठ्यक्रमं बोद्धुं न पारयेत्। अतः प्रारम्भिकं संस्कृतं विद्वान् छात्रः अत्र अस्य पाठ्यक्रमस्य अध्ययने अधिकारित्वेन इति गण्यते।

गुरुकुलेषु अधीयानाः छात्रा अष्टमकक्षां यावत् कामं स्वपरम्परानुसारम् अध्ययनं करोतु। नवमदशमकक्षयोः तु एकादशद्वादशकक्षयोः च भारतीयज्ञानपरम्परा इति पाठ्यक्रमस्य निष्ठया नियमितम् अध्ययनं करोतु। अस्य पाठ्यक्रमस्य अध्येता उच्चशिक्षायै योग्यो भविष्यति।

संस्कृतस्य विभिन्नेषु शास्त्रेषु कृतभूरिपरिश्रमाः विद्वांसः प्राध्यापकाः शिक्षकाः शिक्षाविदः च अस्य पाठ्यक्रमस्य प्रारूपरचनायाम् विषयनिर्धारणे विषयपरिमाणनिर्धारणे विषयप्रकटनभाषास्तरनिर्णये विषयपाठलेखने च संलग्नाः। अतः अस्य पाठ्यक्रमस्य स्तरः उन्नत एव इति किम् उ वक्तव्यम्।

संस्कृतव्याकरणस्य एषा स्वाध्यायसामग्री भवतां कृते पर्याप्ता सुबोधा रुचिरा आनन्दरसस्यन्दिनी सौभाग्यदायिनी धर्मार्थकाममोक्षोपयोगिनी च स्यादिति आशास्महे। अस्य पाठ्यक्रमस्य प्रधानं लक्ष्यं यद् भारतीयज्ञानपरम्परायाः शैक्षणिकक्षेत्रेषु विशिष्टं योग्यं च स्थानं स्वीकृतिः गवेषणा च स्यादिति। तल्लक्ष्यम् पाठ्यक्रमेणानेन सेत्स्यति इति दृढविश्वासिनो वयम्।

अध्येता अध्ययनकाले यदि मन्येत यद् अस्मिन् अध्ययनसम्भारे पाठनिचये यत्र संशोधनं परिवर्तनं परिवर्धनं संस्कारः च अपेक्ष्यन्ते, तेषां समेषां प्रस्तावानां वयं स्वागतं कर्तुं सिद्धाः स्मः। अमुं पाठ्यक्रमम् इतोऽपि अधिकम् प्रभाविनम् उपयोगिनं सरलं च विधातुं भवद्भिः सह वयं सदा प्रयत्नपरा एव।

अध्येतॄणां समेषामपि अध्ययने साफल्याय जीवने च साफल्याय कृतकृत्यायै च आशीर्वचः अस्माकम्।

किं बाहुना विस्तरेण। अस्माकं गौरववाणीं जगति विरलाम् सर्वविद्याया लक्ष्यभूताम् एव उद्धरामि -

सर्वेऽत्र सुखिनः सन्तु सर्वे सन्तु निरामयाः।
सर्वे भद्राणि पश्यन्तु मा कश्चिद् दुःखभाग् भवेत्।।
दुर्जनः सज्जनो भूयात् सज्जनः शान्तिमाप्नुयात्।
शान्तो मुच्येत बन्धेभ्यो मुक्तश्चान्यान् विमोचयेत्।।
स्वस्त्यस्तु विश्वस्य खलः प्रसीदतां ध्यायन्तु भूतानि शिवं मिथो धिया।
मनश्च भद्रं भजतादधोक्षजे आवेश्यतां नो मतिरप्यहैतुकी।।

श्री संजय-कुमार-सिन्हा
निदेशकः (शैक्षिकम्)
राष्ट्रीय-मुक्त-विद्यालयी-शिक्षा-संस्थानम्

## समन्वयकीयानि वचांसि

प्रिय जिज्ञासो

ॐ सह नाववतु। सह नौ भुनक्तु। सह वीर्यं करवावहै। तेजस्विनावधीतमस्तु। मा विद्विषावहै॥ ॐ शान्तिः शान्तिः शान्तिः॥

परम्पराम् अवलम्ब्य इयं प्रार्थना यद् अस्माकम् अध्ययनं विघ्नरहितं भवतु। अज्ञाननाशकं तेजस्वि भवतु। विद्वेषभावनानाशकं भवतु। विद्यालाभेन सर्वविधतापानां शान्तिः भवतु इति।

भारतीयज्ञानपरम्परा इति पाठ्यक्रमस्य अङ्गभूतोऽयं पाठ्यविषयः। अस्य माध्यमिककक्षायाः कृते निर्धारणमस्ति। एतत्पाठ्यक्रमस्य पाठनिचयात्मिकाम् इमाम् अध्ययनसामग्रीम् भवते ददद् अहं परमं हर्षम् अनुभवामि। सरलं संस्कृतं जानन् यः कोऽपि अस्य अध्ययने समर्थो गण्यते।

संस्कृतव्याकरणस्य अध्ययनं सोपानक्रमेण भवति। अतः सोपानस्य प्रति पर्व आरोहणं क्रमेणैव कर्तव्यमिति इत्यतः पाणिनीयाम् अष्टाध्यायीं विद्वांसः भिन्नक्रमेणापि व्याख्यातवन्तः। सोऽयं प्रक्रियाक्रमः। तं क्रमम् अवलम्ब्य निर्मिता इयं सामग्री सोपनपर्वक्रमेणैव आयोजिता अस्ति। माध्यमिककक्षायां एकः भागः उच्चमाध्यमिककक्षायां च अवशिष्टः भागः वर्तते। एतेन पाणिनीयतन्त्रे प्रवेशाय छात्रस्य योग्यता कल्प्यते। एतत्सामग्री पाणिनीयतन्त्रस्य सश्रद्धम् अध्ययने प्रवेशाय प्ररोचनाय च। अनया आकरग्रन्था न गतार्था न वा हेयाः अपि तु गभीरतया अध्येयाः।

समग्रोऽपि पाठ्यविषयः त्रिषु पुस्तकेषु कल्पितोऽस्ति। अस्य अध्ययनेन व्याकरणस्य मूलभूतं ज्ञानं छात्रस्य भवेत्। सूत्राणि सूत्रव्याख्या, उदाहरणानि, उदाहरणेषु सूत्रस्य प्रवृत्तिः, रूपनिष्पत्तिश्च इति लक्ष्यलक्षणात्मकोऽयं व्याकरणप्रपञ्चः अत्र वर्तते।

अध्येता पाठान् सम्यक् पठित्वा पाठगतानां प्रश्नानाम् उत्तराणि स्वयं विचार्य अन्ते प्रदत्तानाम् उत्तराणां दर्शनं कुर्यात्, तैः उत्तरैः स्वस्य उत्तरं च मेलयेद्। प्रतिपत्रं प्रदत्ते रिक्तभागे स्वस्य टिप्पणीं रचयेद्। पाठान्ते प्रदत्तानाम् उत्तराणि निर्माय परीक्षायै सन्नद्धो भवतु।

पाठ्यक्रमस्य सविस्तरं विवेचनं प्रश्नपत्रस्य पारूपम् प्रश्नपत्रस्य प्रतिमा तदुत्तराणि च पुस्तकस्य अन्ते द्रष्टव्यानि। अध्ययनारम्भात् प्राक् नूनमेव अध्येता तत्र दत्तान् बिन्दून् अवलोकयेत्। तेन अध्ययनस्य दिशा गतिः च सुष्ठु स्याताम्।

अध्ययनसम्भारे क्वापि काठिन्यम् अनुभूयते चेत् अध्ययनकेन्द्रं यथाकालं गत्वा समस्यासमाधानाय आचार्यं पश्यतु। राष्ट्रियमुक्तविद्यालयीशिक्षासंस्थानेन सह ई-पत्रद्वारा सम्पर्कं वा करोतु। जालपुटे अपि संपर्कव्यवस्था वर्तत एव। जालपुटकूटः www.nios.ac.in इति अस्ति।

पाठ्यविषयोऽयं भवतः ज्ञानं वर्धयतात् , परीक्षासु साफल्यम् आवहतात् , रुचिं वर्धयतात् , मनोरथान् पूरयतात् इति कामये।

अज्ञानान्धकारस्य नाशाय ज्ञानज्योतिषः दर्शनाय च इयं मे हार्दिकी प्रार्थना -

ॐ असतो मा सद् गमय। तमसो मा ज्योतिर्गमय। मृत्योर्मामृतं गमय॥ ॐ शान्ति: शान्ति: शान्ति:॥

भवत्कल्याणकामी

राम-नारायण-मीणा

पाठ्यक्रमसमन्वयकः (शैक्षिकम्)

राष्ट्रीय-मुक्त-विद्यालयी-शिक्षा-संस्थानम्

## पुस्तकम्- १

### सञ्ज्ञापरिभाषम्

१. व्याकरणपरिचयः

२. संज्ञाप्रकरणम् - 1

३. संज्ञाप्रकरणम् - 2

४. संज्ञाप्रकरणम् - 3

५. परिभाषाप्रकरणम्

### सन्धिप्रकरणम्

६. अच्सन्धौ यण्-अयवायावादिसन्धिः

७. अच्सन्धौ एकादेशः प्रकृतिभाश्च

८. हल्सन्धौ रुत्व-श्चुत्वादिसन्धिः

९. हल्सन्धौ अनुस्वारसन्धिः विसर्गसन्धिश्च

## पुस्तकम्- २

### सुबन्तप्रकरणम्

१०. अजन्तपुंलिङ्गे अदन्तशब्दरूपाणि

११. अजन्तपुंलिङ्गे अदन्तशब्दानां सर्वनाम्नां च रूपाणि

१२. अजन्तपुंलिङ्गे इकारादिशब्दानां रूपाणि

१३. अजन्तस्त्रीलिङ्गे रमानदीशब्दरूपाणि

१४. अजन्तनपुंसकलिङ्गम्

१५. हलन्तप्रकरणे लिह्-दुह् इत्यादिशब्दानां रूपाणि

१६. हलन्तप्रकरणे इदम् राजन् इत्यादिशब्दानां रूपाणि

१७. हलन्तप्रकरणे तत् इत्यादिशब्दानां रूपाणि

१८. हलन्तप्रकरणे महत् इत्यादिशब्दानां रूपाणि

## पुस्तकम्- ३

### कारकविभक्त्यर्थप्रकरणम्

१९. कारकसामान्यपरिचयः, प्रथमाकारकविभक्तिः

२०. द्वितीयाकारकविभक्तिः -1

२१. द्वितीयाकारकविभक्तिः - 2

२२. कारकविभक्तौ तृतीया, चतुर्थी च

२३. कारकविभक्तौ पञ्चमी षष्ठी सप्तमी च

### उपपदविभक्त्यर्थप्रकरणम्

२४. उपपदविभक्तौ द्वितीया, तृतीया, चतुर्थी, पञ्चमी च

२५. उपपदविभक्तौ षष्ठी, सप्तमी च

### कृदन्तप्रकरणम्

२६. कृत्यप्रकरणम्

२७. पूर्वकृदन्तप्रकरणम्-1

२८. पूर्वकृदन्तप्रकरणम्-2

२९. उत्तरकृदन्तप्रकरणम्

# संस्कृतव्याकरणम्

# माध्यमिककक्षा

## प्रथमं स्वाध्यायसोपानम्

| क्रमः | विषयसूची | पृष्ठसंख्या |
|---|---|---|
| | **संज्ञापरिभाषम्** | |
| १. | व्याकरणपरिचयः | १ |
| २. | संज्ञाप्रकरणम् - १ | २१ |
| ३. | संज्ञाप्रकरणम् - २ | ४१ |
| ४. | संज्ञाप्रकरणम् - ३ | ६१ |
| ५. | परिभाषाप्रकरणम् | ८५ |
| | **सन्धिप्रकरणम्** | |
| ६. | अच्सन्धौ यण्-अयवायावादिसन्धिः | ११४ |
| ७. | अच्सन्धौ एकादेशः प्रकृतिभाश्च | १३१ |
| ८. | हल्सन्धौ रुत्व-श्चुत्वादिसन्धिः | १५८ |
| ९. | हल्सन्धौ अनुस्वारसन्धिः विसर्गसन्धिश्च | १८२ |
| | सूत्रसूची | १९८ |

# संस्कृतव्याकरणम्

## पाणिनिव्याकरणस्य भूमिका

पाणिनीयव्याकरणस्य अध्ययने भवद्भ्यः स्वागतम्। अहो भाग्यम् यद् व्याकरणाध्ययने प्रवृत्तिः जाता। व्याकरणं भाषायाः संस्कारं करोति। भाषा किं करोति, भाषायाः महिमा इति विषये किञ्चित् प्रस्तूयते।

मानवस्य भावप्रकटनस्य माध्यमं हि भाषा। एकेन जनेन भाषया भावः प्रकटितः चेत् अपरः जनः तदा एव बोद्धुं शक्नोति यदि सः अपि ताम् भाषां जानाति। अतः बहुषु जनेषु साधारणा काचिद् भाषा नूनम् आवश्यकी। अन्यथा वाग्विनिमयस्य विरामः स्यात्। पुरा प्राचीनैः ग्रन्थरूपेण विषयाः प्रकटिताः। अद्य तान् विषयान् वयं तदा एव बोद्धुं शक्नुमः यदि वयं तां भाषां जानीमः। एकप्रदेशे प्रयुक्ता भाषा सुदूरप्रदेशे तदा एव बोद्धुं शक्या यदि तत्रत्याः जनाः तां भाषां जानन्ति। अतः तादृशी भाषा आवश्यकी - १) या पुरा यथा आसीत् तथैव अद्यापि अस्ति। २) या प्रदेशभेदेन परिवर्तिता नास्ति। ३) या शुद्धा अस्ति। ४) या सकलभावप्रकटने समर्था अस्ति। ५) आगामिकाले नूतनशब्दान् स्रष्टुं निर्मातुम् आदातुं च शक्नोति। ६) यस्याः व्याकरणं सुस्पष्टं सुदृढम् च अस्ति। ७) यस्यां शब्दानां विपुलता अस्ति। ८) या सरला सुबोधा अस्ति। ९) यस्यां सकलध्वनिप्रकटने पर्याप्ता वर्णाः सन्ति। १०) या यथा लिख्यते तथैव पठ्यते, यथा उच्चार्यते तथैव लिख्यते।

ईदृशी जगति एका एव भाषा विराजते। सा च संस्कृतभाषा। अस्याः भाषायाः व्याकरणम् अत्र पाठ्यः विषयः। अहो भाग्यम् अस्माकं यद् जगति सर्वश्रेष्ठायाः भाषायाः व्याकरणं वयं पाठामः। कार्यं यावत् श्रेष्ठं तावत् तस्मिन् कष्टम् अपि अधिकम् भवति। हिमालयस्य सर्वोच्चशिखरस्य आरोहणं यदि यः कोऽपि सामान्यः जनः कर्तुं शक्नुयात् तर्हि तत् स्तुत्यं कार्यम् इति कोऽपि न वदेत्। केचिद् विशिष्टाः एव शिखरारोहणं कुर्वन्ति। अतः यः करोति तस्य गौरवगाथा गीयते। अतः श्रेष्ठं कार्यं सदैव दुष्करं भवति एव। संस्कृतस्य व्याकरणं पठामि इति गौरवबोधं कृत्वा बद्धपरिकरः कृतसंकल्पः भवतु छात्रः।

भाषायाः ये पणाः उक्ताः तेषां साधनाय किमपि शास्त्रम् आवश्यकम्। तदेव शास्त्रं व्याकरणं नाम। व्याकरणं शुद्धशब्दानां निर्माणं करोति। वाक्ये प्रयुक्तानां शब्दानां परस्परं कस्य केन कः सम्बन्धः इति निश्चिनोति। एकेन प्रकटितं भावम् अपरः जनः सन्देहं विना अवगच्छेत् इति व्यवस्थां करोति।

**व्याकरणाध्यनकाले अत्र आवधानं देयम् -**

बहुत्र शास्त्रेषु मूलस्य ग्रन्थस्य कण्ठपाठः नापि आवश्यकः स्यात्। परन्तु व्याकरणस्य रूपाणि साधनीयानि चेत् सूत्रोल्लेखपुरःसरं रूपाणि साध्यन्ते। सूत्रं हि लक्षणम् उच्यते। तत् लक्षणं यस्य शब्दस्वरूपस्य संस्कारं करोति तत् शब्दस्वरूपं तस्य लक्ष्यम् उच्यते। अतः व्याकरणस्य छात्रेण लक्षणं तल्लक्ष्यं च सुष्ठु बोध्यम्। लक्षणस्य अर्थं जानाति चेदेव लक्ष्यस्य संस्कारं कर्तुं प्रभवति। अतः लक्षणम् अर्थः लक्ष्यम् एतत् त्रितयम् निष्ठया ज्ञेयमेव। अयमेव व्याकरणाध्ययनस्य पन्थाः। स एव खलु वैद्यः यो रोगं जानाति, औषधं च जानाति, औषधस्य प्रयोगं च जानाति। एषु एकमपि न जानाति चेत् कीदृशः स वैद्यः। एवमेव स एव खलु वैयाकरणः यः लक्षणं जानाति, अर्थं जानाति, लक्ष्यं च जानाति, लक्षणेन लक्ष्यस्य संस्कारं च करोतीति। अतः लक्षणानाम् अर्थात् सूत्राणां कण्ठपाठः अनिवार्यः एव।

१

# व्याकरणपरिचयः

## प्रस्तावना

संस्कृतभाषायाः व्याकरणानि बहूनि सन्ति। तेषु पाणिनीयं व्याकरणम् अन्यतमम्। इदं व्याकरणं पाणिनिमुनिः विरचितवान्। इदं व्याकरणम् अन्यानि सर्वाणि व्याकरणानि अतिशेते। लौकिकसंस्कृतस्य वैदिकसंस्कृतस्य च व्याकरणम् अस्मिन् पाणिनीयव्याकरणे अस्ति। अतः इदं सर्वव्यापि व्याकरणम् भवति।

व्याकरणस्य आरम्भः कदा कथं च अभवत् इति जिज्ञासा समुचिता एव। अपि च व्याकरणशब्दस्य अर्थः कः। व्याकरणं किं करोति। व्याकरणं स्वकार्यं कथं करोति। देशे विदेशे वैज्ञानिकाः सूत्राणि दृष्ट्वा अभिभूताः आश्चर्यान्विताः च कुतः भवन्ति। तेषां पाणिनिसूत्राणां वैशिष्ट्यं किम्। एवंविधाः नैके विषयाः अस्मिन् प्रथमे पाठे आलोचिताः सन्ति। अतः अवधानेन पठतु।



## उद्देश्यानि

इमं पाठं पठित्वा भवान् -

- व्याकरणस्य आरम्भः कुतः जातः इति जानीयात्।
- व्याकरणस्य आचार्याणाम् ग्रन्थानां च परम्परां परिचिनुयात्।
- व्याकरणशब्दस्य अर्थं वक्तुं शक्ष्यति।
- संज्ञां, संज्ञायाः उपयोगितां, संज्ञायाः भेदान् च बोद्धुं शक्नुयात्।
- पाणिनिमुनिः सूत्रेण कथं संज्ञां करोति इति अवगच्छेत्।
- वर्णप्रकटनस्य धातुप्रकटनस्य च उपायान् ज्ञास्यति।
- संज्ञाः ज्ञात्वा पाणिनीयव्याकरणम् प्रवेष्टुम् पारयेत्।
- पाणिनीयव्याकरणे प्रयुक्ताः काश्चन संज्ञाः ज्ञातुम् प्रभवेत्।
- लघुसूत्रस्य अर्थः कथं महान् भवति इति जानीयात्।



## १.१) व्याकरणस्य परम्परा

### १.१.१) व्याकरणस्य आरम्भः

पुरा बृहस्पतिः इन्द्राय शब्दपारायणम् प्रोक्तवान्। इन्द्रस्य अध्ययनकालः आसीत् दिव्यं वर्षसहस्रम्। तथापि शब्दपारायणस्य अध्ययनं न समाप्तम्। एतावान् महान् विस्तरः शब्दपारायणस्य। तथा आह पतञ्जलिः -

**बृहस्पतिः इन्द्राय दिव्यं वर्षसहस्रं प्रतिपदोक्तानां शब्दानां शब्दपारायणं प्रोवाच नान्तं जगाम। बृहस्पतिश्च प्रवक्ता इन्द्रश्च अध्येता, दिव्यं वर्षसहस्रम् अध्ययनकालः, न चान्तं जगाम इति।**

देवाः शब्दपारायणं ज्ञातुम् इच्छन्ति। परन्तु एतावान् महान् कालः आवश्यकः। तदा देवाः इन्द्रं प्रार्थितवन्तः यत् कमपि उपायम् आविष्कुरु इति। तदा इन्द्रः सर्वप्रथमम् एकैकस्य शब्दस्य प्रकृतिप्रत्ययेषु विभाजनं कृतवान्। इत्थं विभाजनस्य फलं यत् अल्पेन कालेन अल्पेन प्रयासेन च शब्दपारायणम् अर्थात् शब्दज्ञानं, शब्दव्याकरणं ज्ञातुम् शक्यम् अभवत्। इत्थं संस्कृतभाषायाः व्याकरणस्य आरम्भः जातः। तथाहि श्रुतिः -

**वाग्वै परावागव्याकृतावदत्। ते देवा इदमब्रुवन् इमां नो वाचं व्याकुर्विति ... तामिन्द्रो मध्यतोऽवक्रम्य व्याकरोत्। ... तामखण्डां वाचं मध्ये विच्छिद्य प्रकृतिप्रत्ययविभागं सर्वत्राकरोत्।** (तैत्तिरीयसंहिता)

इत्थं व्याकरणस्य आरम्भः जातः। अत एव इन्द्रः संस्कृतभाषायाः आदिः संस्कर्ता अस्ति। प्रकृतिप्रत्ययरूपेण विभाजनं, ततः परं प्रकृतिप्रत्ययोः मेलनेन शब्दस्य निर्माणम् इति प्रक्रिया एव संस्कारः कथ्यते। एवं संस्कारः यद्भाषायाः कृतः सा संस्कृतभाषा कथ्यते। अर्थात् संस्कारसम्पन्ना भाषा हि संस्कृतम् इति।

### १.१.२) व्याकरणस्य आचार्याः ग्रन्थाः च

इन्द्रस्य आविष्कारानन्तरं नैके ग्रन्थाः प्रणीताः विद्वद्भिः। नैके आचार्याः इन्द्रकृतस्य उपायस्य विस्तारं कृतवन्तः। इन्द्रः कस्माद् अधीतवान्, कान् पाठितवान् इति विषये ऋक्तन्त्रे व्याकरणस्य परम्परा इत्थं प्रकटिता -

**ब्रह्मा बृहस्पतये प्रोवाच, बृहस्पतिः इन्द्राय, इन्द्रो भरद्वाजाय, भरद्वाज ऋषिभ्यः, ऋषयः ब्राह्मणेभ्यः, तं खलु इमम् अक्षरसमाम्नायम् इत्याचक्षते।** (ऋक्तन्त्रप्रातिशाख्यम् १.४)

एतेन सिध्यति यद् व्यारकरणस्य प्रथमाचार्यः ब्रह्मा, द्वितीयाचार्यः बृहस्पतिः, तृतीयाचार्यः इन्द्रः, चतुर्थः भरद्वाजः, पञ्चमाः ऋषयः इति। एवं व्याकरणस्य परम्परायाम् पाणिनिः अन्यतमः।

महामुनिः पाणिनिः विश्वविख्यातस्य अष्टाध्यायीनामकग्रन्थस्य लेखकः। तस्य पिता पणिः, माता दाक्षी, गुरुः उपवर्षः। स प्रयागे अक्षयवटस्य अधः तीव्रं तपः कृतवान्। तस्य तपसा महेश्वरः प्रसन्नः



सन् आविर्भूय चतुर्दशवारं ढक्कां नादितवान्। अयमेव ढक्कानादः चतुर्दशसूत्री, अक्षरसमाम्नायः, माहेश्वरसूत्राणि इति कथ्यते। एतानि सूत्राणि अवलम्ब्य महर्षिः पाणिनिः अष्टाध्यायी नाम ग्रन्थं रचितवान्। अस्मिन् सूत्राणि सन्ति। अष्टौ अध्यायाः सन्ति। प्रति अध्यायं चत्वारः पादाः सन्ति।

सूत्राणाम् अर्थं विशदीकर्तुम् कात्यायनः मुनिः वार्तिकानि प्रणीतवान्। तेषु वार्तिकेषु पाणिनिना उक्तस्य, अनुक्तस्य, दुरुक्तस्य च चिन्ता अस्ति।

गच्छता कालेन पाणिनिव्याकरणे विभिन्नेषु स्थलेषु नैके पूर्वपक्षाः समुद्भूताः। तेषां समेषां समाधानाय शेषावतारः भगवान् पतञ्जलिः महाभाष्यं नाम ग्रन्थं प्रणीतवान्। पतञ्जलेः माता गोणिका, देशश्च गोनर्दः। महाभाष्ये पतञ्जलिः मुनिः पाणिनेः सूत्राणाम् अपिच कात्यायनस्य वार्तिकानां च व्याख्यानं कृतवान्। महाभाष्ये विषयप्रतिपादनशैली अत्यन्तं सरला परन्तु विषयः अतीव गभीरः अस्ति।

पाणिनिः कात्यायनः पतञ्जलिः इति मुनित्रयम्। त्रयाणाम् अवदानेन सम्पन्नं व्याकरणम् एव त्रिमुनिव्याकरणम् इति प्रथितम्।

पाणिनीयव्याकरणस्य व्याख्यानस्य अध्यनस्य अध्यापनस्य च प्रकारद्वयम् - सूत्रक्रमः प्रक्रियाक्रमः चेति।

**सूत्रक्रमः -**

पाणिनिः येन क्रमेण सूत्राणि विरचितवान् तेन एव क्रमेण व्याख्यानम् अध्ययनम् अध्यापनं वा भवति चेत् स सूत्रक्रमः उच्यते। सूत्रक्रमेण ये ग्रन्थाः लिखिताः सन्ति तेषु केषाञ्चिद् स्वल्पः परिचयः अधस्तात् उपन्यस्यते।

पतञ्जलिविरचितस्य महाभाष्यस्यापि तात्पर्यं बोधयितुम् प्रदीपः नाम टीकां कैय्यटः लिखितवान्। उद्योतः नाम प्रदीपस्यापि टीका नागेशभट्टेन लिखिता।

पाणिनिसूत्रेषु काशिकानामकं ग्रन्थं वामनजयादित्यौ द्वौ जनौ लिखितवन्तौ। काशिकाग्रन्थस्य टीकाद्वयं सुप्रसिद्धम्। हरदत्तेन पदमञ्जरी नाम टीका लिखिता। जिनेन्द्रबुद्धिना न्यासः नाम टीका लिखिता।

सम्प्रति अपि भारते आर्यसमाजीयाः सूत्रक्रमेण पठनपाठनादिकं कुर्वन्ति।

**प्रक्रियाक्रमः -**

पाणिनिना येन क्रमेण सूत्राणि लिखितानि तेनैव क्रमेण व्याकरणस्य अध्ययनम् इति एका परम्परा अस्ति। सा सूत्रपाठानुसारिणी अस्ति इति उपरि आलोचितमेव। परन्तु येन क्रमेण सूत्राणि पाणिनिना लिखितानि तेन क्रमेण शब्दनिर्माणस्य प्रक्रिया नास्ति। एकैकस्य शब्दस्य निर्माणाय बहूनि सूत्राणि विशिष्टक्रमेण आवश्यकानि भवन्ति। अतः येन क्रमेण शब्दनिर्माणस्य प्रक्रिया भवति तेन क्रमेण सूत्राणि आयोजितानि विद्वद्भिः। इयम् व्याकरणाध्यनस्य परम्परा प्रक्रियाक्रमानुसारिणी अस्ति।

प्रक्रियाक्रमस्य नैके प्रयासाः अभवन्। तत्र सर्वादृतः ग्रन्थः भवति भट्टोजिदीक्षितेन प्रणीता वैयाकरणसिद्धान्तकौमुदी। अस्याम् पाणिनेः सर्वाणि सूत्राणि सन्ति। अस्य ग्रन्थस्य प्रमुखटीकाः -



वासुदेवदीक्षितेन लिखिता बालमनोरमा, ज्ञानेन्द्रसरस्वतीविरचिता तत्त्वबोधिनी, नागेशभट्टेन विरचितः लघुशब्देन्दुशेखरः, भट्टोजिदीक्षेतन स्वयं रचिता प्रौढमनोरमा इति।

बालाः व्याकरणशास्त्रे अल्पायासेन प्रवेशं कुर्युः इति मनसि निधाय वरदराजाचार्यः मध्यसिद्धान्तकौमुदी, लघुसिद्धान्तकौमुदी, सारसिद्धान्तकौमुदी इति ग्रन्थान् प्रणीतवान्। एतेषु लघुसिद्धान्तकौमुदी नाम ग्रन्थः प्रारम्भिकस्तरे अत्यन्तम् उपयोगी इति साम्प्रतिकानाम् अभिप्रायः।

यद्यपि यावान् विस्तरः अत्र प्रकटितः ततोऽपि अत्यधिकः विस्तरः टीकाव्याख्यावृत्तीनाम् अस्ति। सकलस्य अत्र प्रकटनम् न कृतम्।

**व्याकरणम् द्विविधं भवति -**

१) वैदिकम् (प्रातिशाख्यादिकम्।), २) लौकिकम्

**व्याकरणस्य द्वौ सम्प्रदायौ -**

१) ऐन्द्रसम्प्रदायः, २) माहेश्वरसम्प्रदायः च।

## १.१.३) व्याकरणस्य महत्त्वम् -

छन्दः पादौ तु वेदस्य हस्तौ कल्पोऽथ पठ्यते।

ज्योतिषामयनं चक्षुर्निरुक्तं श्रोत्रमुच्यते।।

शिक्षा घ्राणं तु वेदस्य मुखं व्याकरणं स्मृतम्।

तस्मात् साङ्गमधीत्यैव ब्रह्मलोके महीयते।। (पा.शि.)

एतस्मिन् श्लोकद्वये वेदः पुरुषः इव कल्पितः। तस्य पुरुषस्य पादौ तु छन्दःशास्त्रम्, हस्तौ कल्पशास्त्रम्, चक्षुः ज्योतिषशास्त्रम्, श्रोत्रम् निरुक्तशास्त्रम्, घ्राणम् शिक्षाशास्त्रम् एवञ्च मुखम् व्याकरणशास्त्रम् इति प्रतिपादितम् अस्ति। अत्र यथा पुरुषस्य मुखं शरीरे मुख्यं भवति, तद्वत् व्याकरणशास्त्रस्य स्थानम् अस्ति। एतावद् महत्त्वम् अस्य शास्त्रस्य। वेदानां रक्षणार्थम् व्याकरणशास्त्रस्य अतीव उपयोगिता अस्ति। व्याकरणज्ञानं विना वेदज्ञानं भवितुं नार्हति। वेदस्य षड् अङ्गानि सन्ति। तेषु व्याकरणम् एव प्रधानं भवति। प्रधाने च कृतो यत्नः फलवान् भवति। अतः अध्येयं व्याकरणम्।

## १.१.४) व्याकरणस्य स्वरूपं कार्यप्रणाली च

ऋषयः व्यासः वाल्मीकिः इत्यादयः मुनयः एव शिष्टाः सन्ति। ते येषां शब्दानां प्रयोगम् कृतवन्तः ते एव शब्दाः साधुशब्दाः सन्ति।

यः जनः साधुशब्दम् ज्ञात्वा प्रयुङ्क्ते स जनः अभ्युदयं लभते। अर्थात् तस्य धर्मलाभः भवति। तथाहि अभियुक्तोक्तिः - 'एकः शब्दः सम्यग्ज्ञातः सुष्ठु प्रयुक्तः स्वर्गे लोके कामधुग् भवति' इति। ज्ञानपूर्वकं यः शब्दान् प्रयुङ्क्ते सः अभ्युदयेन युज्यते इति।



शब्दप्रयोगकाले शब्दस्य किम् ज्ञानमत्र इष्टम्। शब्दस्य का प्रकृतिः कः च प्रत्ययः इति विभागस्य ज्ञानम् अत्र अपेक्षितम्। अर्थात् शब्दस्य व्याकरणं किमिति ज्ञानमत्र अपेक्षितम्। प्रकृतिप्रत्ययज्ञानाय व्याकरणाध्ययनम् एव उपायः।

**व्याकरणशब्दस्य व्युत्पत्तिः, अर्थः च -**

व्याकरणशब्दस्य व्युत्पत्तिः - व्याक्रियन्ते व्युत्पाद्यन्ते शब्दाः अनेन इति व्याकरणम्। (वि+आङ्+कृ+ल्युट् - व्याकरणम्) ।

प्रकृत्या सह प्रत्ययस्य योगेन शब्दस्य व्युत्पत्तिः, निष्पत्तिः येन शास्त्रेण क्रियते तत् शास्त्रम् व्याकरणम् इति कथ्यते। व्याकरणशास्त्रे प्रकृतिज्ञानं प्रत्ययज्ञानं च भवति। तयोः योगस्य ज्ञानं भवति। इत्थं निष्पन्नः शब्दः एव साधुशब्दः भवति। अनेन प्रकारेण व्याकरणं साधुशब्दस्य ज्ञानं कारयति। इमामेव प्रक्रियाम् अवलम्ब्य व्याकरणं वस्तुतः असाधुशब्देभ्यः साधुशब्दान् पृथक् करोति। अत एव साधुत्वज्ञानविषया सैषा व्याकरणस्मृतिः।

**व्याकरणस्य नामान्तराणि**

शब्दशास्त्रम्, शब्दानुशासनम्, पदविद्या इति अपि व्याकरणस्य अन्यानि नामानि।

शब्दाः अनुशिष्यन्ते अनेन इति शब्दानुशासनम् व्याकरणशास्त्रम्।



## पाठगतप्रश्नाः-१

१. इन्द्रस्य गुरुः कः।

२. संस्कृतभाषायाः आदिः संस्कर्ता कः।

३. इन्द्रः शब्दपारायणस्य कं संस्कारं कृतवान्।

४. पाणिनिः महेश्वरात् सूत्राणि लब्ध्वा कथम् अष्टाध्यायीं लिखितवान् इति विवरणं देयम्।

५. सूत्रक्रमः कः।

६. प्रक्रियाक्रमः कः।

७. पाणिनेः गुरुः कः।

१) पतञ्जलिः २) महेश्वरः ३) इन्द्रः ४) उपवर्षः

## १.२) संज्ञा

वयं प्रतिदिनम् बहूनाम् वस्तूनाम् व्यक्तीनाम् वा व्यवहारम् कुर्मः, अर्थात् वाणीद्वारा प्रकटनं कुर्मः। एतद् वस्तु लौकिकम् भवति। एकः अपरस्मै किमपि वदति। तदा वस्तूनाम् व्यक्तीनाम् नाम व्यवहरति, वदति, उच्चरति। नाम नास्ति चेद् वाचिकव्यवहारः नैव सम्भवति। व्यवहारे स्थितानि वस्तूनि, स्थिताः व्यक्तयः वा अर्थाः इति कथ्यन्ते। अर्थस्य किमपि नाम भवति। नाम किमपि पदम् भवति। यथा



दशरथस्य पुत्रः, सीतायाः पतिः च, यः अर्थः, यः जनः तस्य नाम 'रामः' इति। अतः 'रामः' इति नाम भवति 'पदम्'। तस्य अर्थः भवति - दशरथस्य पुत्रः सीतायाः पतिः च। अतः रामः इति पदम् भवति। दशरथपुत्रः भवति अर्थः। स एव पदार्थः इति कथ्यते। एवम् अर्थस्य वाचकं पदमेव संज्ञा इति उच्यते। संज्ञायाः अर्थः संज्ञी इति च उच्यते। यथा 'रामः' इति पदं संज्ञा अस्ति। दशरथपुत्रः संज्ञी अस्ति।

### १.२.१) संज्ञायाः प्रकाराः

संज्ञा कदाचित् लघुः (अल्पाक्षरा) भवति कदाचित् महती (अधिकाक्षरा) भवति। यथा वृद्धिः, गुणः, संहिता, प्रत्ययः, प्रातिपदिकम्, धातुः, पदम्, कारकम्, समासः इत्यादयः। कदाचित् लौकिकव्यवहारे प्रयुक्तानि पदानि एव संज्ञारूपेण व्यवह्रियन्ते। यथा वृद्धिः, गुणः, संहिता, प्रत्ययः, पदम्, कारकम् इत्यादीनि। कदाचित् पूर्वम् अप्रयुक्तानि पदानि वा संज्ञारूपेण व्यवह्रियन्ते। यथा टि, घु, घः, भम् इत्यादीनि।

क्वचित् वयम् संज्ञायाः निर्माणं कर्तुम् शक्नुमः। तदा सा संज्ञा कृत्रिमसंज्ञा इति उच्यते। यथा अच् हल् अल् सुप् सुट् इत्यादयः। क्वचित् पाणिनिमुनिना स्वयम् संज्ञा उक्ता। सा अकृत्रिमसंज्ञा कथ्यते। यथा वृद्धिः, गुणः, संहिता, प्रत्ययः, प्रातिपदिकम् इत्यादयः।

संज्ञा अर्थं बोधयति। स च अर्थः क्वचित् व्यावहारिकः पदार्थः भवति। इयं संज्ञा अर्थस्य अस्ति। अतः सा अर्थसंज्ञा इति कथ्यते। यथा कर्ता, कर्म, करणम् इत्यादयः।

क्वचित् संज्ञायाः यः अर्थः भवति सः अपरः शब्दः भवति, वर्णः वा भवति। अत्र संज्ञा अपि शब्दः एव। अर्थः अपि शब्दः एव। सा संज्ञा शब्दस्य अस्ति। अतः शब्दसंज्ञा इति कथ्यते। यथा वृद्धिः इति संज्ञा। तदर्थः 'आ' 'ऐ' 'औ' इति वर्णाः। यथा पदम् इति संज्ञा। तदर्थः 'रामः' 'कृष्णः' 'भवति' 'गच्छति' इति शब्दाः।

क्वचिद् लौकिकव्यवहारे शब्दस्य यः अर्थः भवति तादृशः एव अर्थः व्याकरणे अपि भवति। तदा सा संज्ञा अन्वर्थसंज्ञा इति कथ्यते। अत्र लौकिकम् उदाहरणम् एकम् आलोचयामः। कस्यचित् जनस्य नाम भवति वीरेन्द्र इति। यदि स जनः वस्तुतः सर्वश्रेष्ठः वीरः अस्ति तर्हि तस्य नाम अन्वर्थम् भवति। अन्वर्थ इत्यस्य तात्पर्यम् भवति - यथा अर्थः तथा नाम। व्याकरणे सर्वनाम, प्रातिपदिकम्, प्रत्ययः, कर्ता, कारकम् इत्यादयः अन्वर्थसंज्ञाः।

कस्यचित् जनस्य नाम भवति कुबेर इति। यदि सः निर्धनः अस्ति तर्हि यथा अर्थः तथा तस्य नाम नास्ति। ईदृशे स्थले नाम अन्वर्थम् नास्ति। तथैव व्याकरणे अपि टि, घु, भम्, घः इत्यादयः संज्ञा न अन्वर्थाः। सा संज्ञा अनन्वर्था इति कथ्यते।

| अनुक्रमः | संज्ञाप्रकारः | संज्ञा | संज्ञी |
|---|---|---|---|
| १.१ | लघुः | घः | तरप् , तमप् |
| १.२ | महती | प्रातिपदिकम् | राम, हरि, हर |



| अनुक्रमः | संज्ञाप्रकारः | संज्ञा | संज्ञी |
|---|---|---|---|
| २.१ | कृत्रिमा | इक् | इ उ ऋ लृ |
| २.२ | अकृत्रिमा | वृद्धिः | आ ऐ औ |
| ३.१ | अर्थसंज्ञा | कर्ता | रामः गच्छति इत्यत्र दशरथपुत्रः |
| ३.२ | शब्दसंज्ञा | पदम् | रामः, भवति |
| ४.१ | अन्वर्था | सर्वनाम | तद् , एतद् , इदम् |
| ४.२ | अनन्वर्था | घः | तरप् , तमप् |



## पाठगतप्रश्नाः -२

८. संज्ञा का। संज्ञी कः।

९. संज्ञायाः प्रकारान् लिखत।

१०. कर्ता इति अन्वर्थसंज्ञा न वा।

११. इयम् अन्वर्थः संज्ञा।

१) घः  २) घुः  ३) टि  ४) कारकम्

१२. सर्वनाम यदि संज्ञा तर्हि संज्ञी कः।

१) तरप्  २) कर्ता  ३) घुः  ४) इदम्

## १.३) सूत्रम्

पाणिनिः अष्टाध्यायी इति नामकं ग्रन्थं लिखितवान्। तस्मिन् ग्रन्थे अष्टौ अध्यायाः सन्ति। प्रत्यध्यायं चत्वारः पादाः सन्ति। प्रतिपादम् कानिचन सूत्राणि सन्ति। प्रतिपादं सूत्रसंख्या भिन्ना अस्ति।

### १.३.१) सूत्रम् किम् भवति।

सूत्र इति धातुतः अच्-प्रत्यययोगेन सूत्र इति नपुंसकलिङ्गी शब्दः भवति। सूत्रशब्दस्य तन्तुः गुणः इति अर्थाः भवन्ति। तथापि व्याकरणे सूत्रशब्दस्य अर्थः भवति - सारगर्भितम् लघुतमं वाक्यम्। सूत्रस्य स्वरूपम् इत्थम् उक्तम् -

**अल्पाक्षरमसन्दिग्धं सारवद्विश्वतोमुखम्।**

**अस्तोभमनवद्यं च सूत्रं सूत्रविदो विदुः।।**



**अन्वयः** - यत् अल्पाक्षरम् असन्दिग्धं सारवत् विश्वतोमुखम् अस्तोभम् अनवद्यं च भवति तत् सूत्रम् इति सूत्रविदः वदन्ति।

**श्लोकस्य सरलार्थः -**

**अल्पाक्षरम्** - सूत्रे यथासम्भवम् अल्पानि अक्षराणि भवन्ति। अतः सूत्रम् **अल्पाक्षरम्** भवति।

**असन्दिग्धम्** - सूत्रम् स्वकीयम् अर्थम् स्पष्टतया बोधयितुम् क्षमम् भवेत्, अपिच सन्देहम् न जनयेत्। कदाचित् सन्धिः अस्ति चेत् सन्देहः जायेत। तस्मात् क्वचित् क्वचित् सन्धिं त्यजति सूत्रकारः। क्वचित् समासः अस्ति चेत् अर्थः दुर्बोधः भवितुम् अर्हति। तस्मात् समासं न करोति सूत्रकारः। एवम् सन्देहं विना अर्थं बोधयति तत् सूत्रम् **असन्दिग्धं** भवति।

**सारवत्** - सूत्रकर्ता यम् अर्थम् प्रकटयितुम् इच्छति तस्य प्रकटनं यदि सूत्रम् करोति तर्हि तस्मिन् सूत्रे सारः अस्ति। अतः विवक्षितार्थद्योतकं सूत्रम् **सारवत्** भवति।

**विश्वतोमुखम्** - सूत्रकारः सूत्रेण किमपि कार्यम् बोधयति। तत्कार्यस्य क्षेत्रम् यथासम्भवम् अधिकम् व्यापकम् च स्यात्। एकेन सूत्रेण बहुषु स्थलेषु कार्यम् भवति चेत् सूत्रम् **विश्वतोमुखम्** अस्ति।

**अस्तोभम्** - मन्त्रादिषु केवलं पादपूरणाद्यर्थो वर्णविशेषः स्तोभः उच्यते। सामवेदस्य गाने बहुत्र अधिकध्वनीनाम् उपयोगः क्रियते। एतेषां ध्वनीनाम् तथा कोऽपि अर्थः न भवति। परन्तु गाने माधुर्यम् जनयति। एवं ध्वनिः स्तोभः इति कथ्यते। सूत्रेषु तादृशध्वनीनाम् प्रयोगः न भवति। तस्मात् सूत्रम् **अस्तोभम्** इति कथ्यते।

**अनवद्यम्** - कदाचित् सन्धिः अस्ति चेत् निन्दनीयः अर्थः भवति। एकम् उदाहणम् अत्र आलोचयामः - ध्रुवम् ऋतम् इति शब्दयोः सन्धिः भवति चेत् ध्रुवमृतम् इति शब्दः भवति। अत्र कश्चित् ध्रुव-मृतम् इति अपि चिन्तयितुम् शक्नोति। तत्र अनिष्टः निन्द्यः अर्थः आयाति। सूत्रम् एवम् निन्द्यम् अर्थम् न प्रतिपादयेत्। तस्मात् सूत्रम् **अनवद्यम्** अनिन्द्यम् भवति।

## १.३.२) सूत्राणाम् प्रकाराः

सूत्रम् किमपि कार्यम् बोधयति। तत्कार्यवशाद् एव सूत्राणाम् प्रकाराः सन्ति। तथाहि श्लोकः -

**संज्ञा च परिभाषा च विधिर्नियम एव च।**

**अतिदेशोऽधिकारश्च षड्विधं सूत्रमुच्यते।**

सूत्राणां षट् प्रकाराः सन्ति। ते हि १) संज्ञा, २) परिभाषा, ३) विधिः, ४) नियमः, ५) अतिदेशः, ६) अधिकारः चेति।

**संज्ञासूत्रम् -**

संज्ञा का भवति, संज्ञायाः प्रकाराः के भवन्ति इति विषये उपरितने अंशे सविस्तरम् विमर्शः कृतः। किमपि पदम् कस्यचित् अर्थस्य बोधने समर्थम् भवति। पदे ईदृशम् सामर्थ्यम् एव तस्य शक्तिः इति उच्यते। पदस्य अर्थबोधनसामर्थ्यम् एव शक्तिः। वयम् व्यवहारादितः अवगच्छामः यत् अस्य पदस्य अयम् अर्थः इति, अथवा इदम् पदम् अमुम् अर्थम् बोधयति इति। तदा वस्तुतः कस्य अर्थस्य बोधने



कस्य पदस्य शक्तिः अस्ति इति एव वयम् अवगच्छामः। संज्ञासूत्रम् पदस्य शक्तिम् बोधयति। एतत् पदं संज्ञा, अयम् अर्थः संज्ञी इति सूत्रम् बोधयति। अर्थात् सूत्रम् शक्तिम् ग्राहयति। अतः एव **संज्ञासूत्रम् शक्तिग्राहकम्** भवति। क्वचित् व्यवहारे प्रयुक्तानाम् अपि शब्दानाम् संज्ञारूपेण व्यवहारः भवति व्याकरणे। तदा व्यवहारे वयं तस्य पदस्य अर्थम् जानीमः। परन्तु व्याकरणे तस्य पदस्य ततः किञ्चिद् भिन्नः अथवा अंशिकः अर्थः अस्ति इति अपि सूत्रं बोधयति। अत एव **संज्ञासूत्रम् शक्तिनियामकम्** भवति। यथा भूवादयो धातवः इति सूत्रे भू वा इत्यादयः संज्ञिनः सन्ति। धातुः इति संज्ञा अस्ति। लौकिके व्यवहारे धातुशब्दस्य अन्ये अपि अर्थाः सन्ति। किन्तु व्याकरणशास्त्रे धातुशब्दस्य अर्थः व्यवहारतः भिन्नः इति स्पष्टमत्र। सामान्यतः संज्ञासूत्रे पूर्वम् संज्ञिनः निर्देशः भवति। ततः परम् संज्ञायाः निर्देशः भवति। कमपि अर्थम् उद्दिश्य संज्ञा विधीयते। तस्मात् अर्थः उद्देश्यः भवति। संज्ञा विधेया भवति। उद्देश्यस्य उल्लेखः पूर्वम् भवति। विधेयस्य उल्लेखः परम् भवति। तथापि केषुचित् सूत्रेषु विपरीतः अपि क्रमः अस्ति। तदा तत्र का संज्ञा, कः संज्ञी इति आचार्यव्याख्यानाद् बोद्ध्यम्।

### परिभाषा -

क्वचित् गमनकाले वयम् तथा स्थानम् आगच्छामः यत्र मार्गद्वयम् अपि गमनाय अस्ति। यदि वयं पूर्वतः न जानीमः यत् केन मार्गेण गन्तव्यम् तर्हि प्रश्नः भवति। द्वयोः मार्गयोः कतरः ग्राह्यः इति। अनेन एव गन्तव्यम् इति निश्चयः न भवति। तावत् अनियमः अस्ति। तदा वयम् कस्मैचित् जनाय पृच्छामः। स जानाति चेत् मार्गम् उपदिशति। तदा अनियमः दूरीभवति। तदा अस्माकम् निश्चयः भवति। नियमः भवति यद् अनेन एव मार्गेण गन्तव्यम् इति।

व्याकरणे क्वचित् क्वचित् तथा प्रसङ्गः आयाति यत्र एकाधिकाः पर्यायाः मार्गाः वा उपस्थिताः भवन्ति। तदा अनियमः भवति। अनियमे सति नियमः आवश्यकः। एवम् यत् सूत्रम् अनियमे नियमम् करोति तत्सूत्रम् परिभाषासूत्रम् इति कथ्यते। यत्र यत्र अनियमः भवति तत्र तत्र नियमम् करोति परिभाषासूत्रम्। अतः एव परितः सर्वतो व्यापृताम् भाषाम् परिभाषां प्रचक्षते। परितो भाष्यते या सा परिभाषा प्रकीर्तिता।

उदाहरणम् एकम् विमृश्यामः - नश्च इति एकम् सूत्रम्। नः इति पञ्चमीविभक्त्यन्तम् रूपम्। धुट् इति प्रथमान्तम् , सस्य इति षष्ठ्यन्तम् पदं च अनुवर्तते। तदा नकारात् सस्य धुट् वा इति सूत्रस्यार्थः। अत्र स्वाभाविकः प्रश्नः उदेति यत् नकारात् पूर्वस्य परस्य वा सस्य धुट् विधेयः इति। अतः अत्र अनियमः उत्पन्नः। अधुना तस्मादित्युत्तरस्य इति परिभाषासूत्रम् नियमम् करोति यत् पञ्चमीनिर्देशः अस्ति चेत् तस्मात् परस्य एव कार्यं कर्तव्यम् इति। अतः अर्थः भवति यत् नकारात् **परस्य** सस्य धुट् वा इति सूत्रस्यार्थः। अतः तस्मादित्युत्तरस्य इति सूत्रम् परिभाषासूत्रम्।

अष्टाध्याय्याम् पाणिनिमुनिना साक्षात् ३६ परिभाषाः उल्लिखिताः। अन्याः परिभाषाः आचार्यस्य पाणिनेः व्यवहाराद् सिद्ध्यन्ति। काश्चन परिभाषाः लौकिकव्यवहाराद् सिद्ध्यन्ति।



### विधिः -

पूर्वमेव उक्तम् यत् सूत्रम् किमपि कार्यम् करोति। सर्वाणि सूत्राणि साक्षात् कार्यं कुर्वन्ति। अथवा अन्यसूत्रद्वारा यद् वास्तविकं कार्यम् तस्य अनुग्राहकाणि उपकारकाणि वा भवन्ति। वास्तविकम् किम् कार्यम् करोति। तद्यथा कस्माच्चित् शब्दात् परम् कस्यचित् प्रत्ययस्य प्रयोगकम् करोति। क्वचित् कस्यचित् वर्णस्य वर्णसमुदायस्य वा अवयवरूपेण पूर्वम् परम् वा वर्णम् वर्णसमुदायम् वा योजयति। अयमेव आगमः इति कथ्यते। क्वचित् कञ्चित् वर्णम् अपसार्य तस्य स्थाने अन्यम् वर्णम् करोति। क्वचित् वर्णसमुदायस्य स्थाने एकम् वर्णम् वर्णसमुदायम् वा करोति। क्वचित् वर्णस्य वर्णसमुदायस्य वा लोपम् करोति। अर्थात् केवलम् अपसारणम् करोति।

इत्थम् कस्यचित् केवलम् आनयनम्, कस्यचित् केवलम् अपसारणम्, कस्यचित् अपसारणं कृत्वा तस्य स्थाने अपरस्य आनयनम्, कस्याचिद् अवयवरूपेण आनयनम् इति एवंविधानि कार्याणि वास्तविककार्याणि भवन्ति। यत्र एवम् कार्यम् भवति तत् **लक्ष्यम्** इति कथ्यते। यत् सूत्रम् तत् कार्यम् करोति तत् सूत्रम् **लक्षणम्** इति उच्यते। एवम् **लोपः आगमः प्रत्ययः वर्णविकारः स्वरादिधर्मः** इति एतेषाम् विधानम् एव वास्तविकम् कार्यम्। सूत्रम् अन्यत् सर्वम् यद् यद् करोति तत् सर्वम् अपि एतेषाम् कार्याणाम् पूरकम् पोषकम् अनुग्राहकम् वा भवति। एवम् लोपादिना लक्ष्यस्य यत् परिवर्तनम् भवति तत् लक्ष्यस्य संस्कारः इति कथ्यते। इत्थं लक्षणं लक्ष्यस्य संस्कारं करोति। एवंरूपेण लक्ष्यसंस्कारान् कृत्वा अन्ततोगत्वा साधुशब्दः कः इति अस्माकम् बोधो भवति। लोके एतेषामेव साधुशब्दानाम् व्यवहारः जनैः कर्तव्यः इति व्याकरणशास्त्रस्य तात्पर्यम् अस्ति। अतः यत् सूत्रम् साक्षात् लक्ष्यस्य संस्कारम् करोति किञ्च साधुशब्दः कः इति बोधं जनयति, तादृशबोधजनकं सूत्रम् विधिसूत्रम् भवति। इको यणचि इति सूत्रम् इकः स्थाने यणं विधत्ते। एवमन्यानि सूत्राणि।

### नियमः -

इतरनिवृत्तिफलकार्थबोधकम् भवति नियमसूत्रम्। केनचित् विधानेन स्वतः एव वा यदा एकाधिकानां किमपि कार्यं प्राप्नोति तदा तेषु केषाञ्चिदेव तत्कार्यं भवतु अन्येषां न इति एवंविधम् कार्यम् नियमसूत्रं करोति। अर्थवदधातुरप्रत्ययः प्रातिपदिकम् इति सूत्रेण गामानय इति वाक्यस्य अपिच राजपुरुषः इति समासस्य प्रातिपदिकसंज्ञा प्राप्नोति। तत्र कृत्तद्धितसमासाश्चा इति सूत्रे समास इति अंशः नियमार्थः अस्ति। तेन नियमः भवति यद् यदि अर्थवतः शब्दस्वरूपस्य प्रातिपदिकसंज्ञा स्यात् तर्हि समासस्य एव न तु अन्यस्य इति। अस्य नियमस्य फलं यद् गामानय इति यद्यपि अर्थवान् समुदायः तथापि तस्य प्रातिपदिकसंज्ञा न भवति। वाक्यम् इतरद् अस्ति। तस्य प्रातिपदिकसंज्ञा न जाता, निवृत्तिः अभवत्। इतरनिवृत्तिफलकम् अर्थं बोधयति इदं सूत्रम्।

### अतिदेशः -

धर्मशब्दस्य सामान्यतः गुणधर्मः इति अर्थः बहुत्र भवति। एकस्य धर्मः अपरस्य यद्यपि नास्ति तथापि अस्ति इति यत् सूत्रं करोति तत् सूत्रम् अतिदेशसूत्रम्। **एकत्र दृष्टानां धर्माणाम् अन्यत्र सम्बन्धोपदेशः अतिदेशः**। सामान्यतः अतिदेशसूत्रे वतिप्रत्ययान्तः शब्दः अतिदेशबोधनार्थं दृश्यते।



अतः वतिप्रत्ययं दृष्ट्वा अतिदेशसूत्रं परिचेतुं शक्यम्। स्थानिवदादेशोऽनल्विधौ इति सूत्रे स्थानिवत् इति शब्दः वतिप्रत्ययान्तः। अतः इदं अतिदेशसूत्रम्।

**अधिकारः -**

गणिते वयम् इत्थम् कुर्मः २ ax+३ ay+५ az इति अस्मात् a इति साधारणम् गृहीत्वा एकवारम् एव लिखामः। तदा एवं स्थितिः भवति -- a(२ x+३ y+५ Z). अत्र a वस्तुतः कंसे स्थितैः प्रत्येकं पदैः सह मिलित्वा एव समग्रम् अर्थं प्रकटयति, a स्वयम् एकाकि प्रायः निरर्थकम् एव अक्षरम् इति मन्यामहे वयम्।

अष्टाध्याय्याम् एवमेव साधारणः अंशः एकवारम् एव लिखितः भवति। तस्य अंशस्य पृथक् प्रायः कोऽपि अर्थः न भवति। परन्तु अन्यैः पदैः सह मेलनेन एव समुदितस्य अर्थः भवति। तादृशम् सूत्रम् पदम् वा अधिकारः इति कथ्यते। प्रत्ययः इति सूत्रम् अधिकारसूत्रम्। एवमन्यानि सूत्राणि।

## १.३.३) सूत्रस्य अर्थः कथम् भवति।

लौकिकम् उदाहरणम् एकं परिशीलयामः -

१) प्रातः (रामः वेदम् पठति। लक्ष्मणः जलम् आनयति। भरतः वृक्षान् सिञ्चति।)

अस्य विस्तरः अर्थः च एवम् भवति -

प्रातः रामः वेदम् पठति।

**प्रातः** लक्ष्मणः जलम् आनयति।

**प्रातः** भरतः वृक्षान् सिञ्चति।

अत्र प्रातः इति पदम् साधारणम् अस्ति। विस्तारकाले तत् पदम् कंसे स्थितैः त्रिभिः अपि वाक्यैः सह पृथक् पृथक् योज्यते। तदा विवक्षितः अर्थः स्पष्टः भवति।

२) प्रातः रामः वेदम् पठति। लक्ष्मणः काव्यम्। भरतः व्याकरणम्। आञ्जनेयः फलम् खादति। सायम् सुग्रीवः नगरम् पश्यति।

वाक्यानि पृथक् पृथक् लिखामः।

प्रातः रामः वेदम् पठति।

लक्ष्मणः काव्यम्।

भरतः व्याकरणम्।

आञ्जनेयः फलम् खादति।

सायम् सुग्रीवः नगरम् पश्यति।

अत्र प्रथमवाक्ये प्रातः इति पदम्, पठति इति च पदम् उच्चरितम्। ततः परम् तत्पदद्वयम् नास्ति। परन्तु इदम् स्पष्टम् यत् प्रातः इति पठति इति च पदद्वयम् द्वितीये तृतीये च वाक्ये अनुवर्तते, प्रति



वाक्यम् उपतिष्ठते। तत्रापि चतुर्थवाक्ये खादति इति पदम् अस्ति। अतः पठति इति समानजातीयम् पदम् नैव आयाति, केवलम् प्रातः इति एव पदम् आगच्छति। पञ्चमवाक्ये तु सायम् इति पदम् अस्ति। अतः प्रातः इति समानजातीयम् पदम् अत्र नैव आयाति, तत् पदम् निवर्तते। एवमेव पश्यति इति पदम् अत्र अस्ति। अतः उपरिष्टात् खादति इति पदम् नैव आयाति।

भरतः व्याकरणम् इति तृतीयम् वाक्यम्। एतत् पदद्वयम् कमपि अर्थम् बोधयितुम् न क्षमम्। उपरिष्टात् प्रातः इति पठति इति च पदद्वयम् आयाति। तदा वाक्यम् भवति - प्रातः भरतः व्याकरणम् पठति। अधुना इदम् वाक्यम् पूर्णम्। अपिच अर्थम् बोधयितुम् क्षमममपि।

इत्थम् पाणिनिमुनेः किमपि सूत्रम् पश्यामः चेद् तद् अल्पम् अर्थरहितं च भाति। परन्तु अनुवृत्तिद्वारा पदानि आयान्ति चेत् दीर्घं वाक्यम् भवति। सूत्रे यत् पदं नास्ति परन्तु अर्थे अस्ति तद् प्रायः अनुवृत्तम् इति मन्तव्यम्। अस्य विस्तरः अन्यत्र करिष्यते।

इत्थम् उपरितनाद् वाक्याद् अधस्तनेषु वाक्येषु कस्यापि पदस्य आनयनम् एव अनुवृत्तिः इति उच्यते। सजातीयं पदम् अग्रिमे सूत्रे अस्ति चेत् पूर्वतः पदम् न आयाति, न अनुवर्तते। एवम् अनुवर्तमानस्य पदस्य सजातीयपदस्य उपस्थितिवशात् आगमनविरामः एव निवृत्तिः इति उच्यते।

किम् पदम् कियद्दूरम् अनुवर्तते इत्यादिकम् अधस्तात् तालिकायाम् प्रकटितम् अस्ति। अवधानेन परिशील्यताम्।

| | | | |
|---|---|---|---|
| प्रातः | रामः | वेदम् | पठति |
| **प्रातः** | लक्ष्मणः | काव्यम् | **पठति** |
| **प्रातः** | भरतः | व्याकरणम् | **पठति** |
| **प्रातः** | आञ्जनेयः | फलम् | खादति |
| सायम् | सुग्रीवः | नगरम् | पश्यति |

कस्य पदस्य कियद्दूरम् अनुवृत्तिः भवति इति विषये बहुत्र पाणिनिमुनेः निर्देशाः सन्ति। बहुत्र नापि सन्ति। अतः पतञ्जल्यादिभिः मुनिभिः कृतम् व्याख्यानम् एव अत्र तरणोपायः।

## १.४) सूत्रसंख्या

सूत्रसंख्याविषये कश्चित् प्राचीनश्लोकः एवम् -

**त्रीणि सूत्रसहस्राणि तथा नव शतानि च।**

**चतुर्णवतिसूत्राणि पाणिनिः कृतवान् स्वयम्।।**

३९९४ सूत्राणि सन्ति इति अस्य श्लोकस्य अर्थः।



अधः पट्टिकायाम् अष्टसु अध्यायेषु प्रति पादं सूत्रसंख्या प्रदर्शिता अस्ति। एषा सूत्रसंख्या गोपालदत्तपाण्डेयेन सम्पादिता चौखम्बासुरभारतीप्रकाशनेन प्रकाशिता अष्टाध्यायी इति ग्रन्थात् संगृहीता।

| | | पादः | | | | |
|---|---|---|---|---|---|---|
| | | प्रथमः | द्वितीयः | तृतीयः | चतुर्थः | योगः |
| अध्यायः | प्रथमः | ७५ | ७३ | ९३ | ११० | ३५१ |
| | द्वितीयः | ७२ | ३८ | ७३ | ८५ | २६८ |
| | तृतीयः | १५० | १८८ | १७६ | ११७ | ६३१ |
| | चतुर्थः | १७८ | १४५ | १६८ | १४४ | ६३५ |
| | पञ्चमः | १३६ | १४० | ११९ | १६० | ५५५ |
| | षष्ठः | २२३ | १९९ | १३९ | १७५ | ७३६ |
| | सप्तमः | १०३ | ११८ | १२० | ९७ | ४३८ |
| | अष्टमः | ७४ | १०८ | ११९ | ६८ | १४२ |
| पूर्णयोगः | | | | | | १३६५ |

अत्र एषु माहेश्वरसूत्राणि न गणितानि। ३९८३+१४=३९९७ इति सूत्रसंख्या भवति। विभिन्नेषु ग्रन्थेषु सूत्रसंख्या भिन्ना दृश्यते। तत्र कारणं हि एकस्य सूत्रस्य योगं केचित् कुर्वन्ति, केचित् विभागं कुर्वन्ति।

### १.४.१) सूत्रसंख्यायाः अर्थः

पाणिनिः अष्टौ अध्यायान् लिखितवान्। प्रति अध्यायं चत्वारः पादाः सन्ति। अपिच प्रतिपादं नैकानि सूत्राणि सन्ति। ग्रन्थेषु यदा पाणिनिसूत्रस्य उल्लेखः भवति तदा तत्र **पाणिघताडघौ शिल्पिनि** (३.२.५५) इतिरूपेण काचित् संख्या लिखिता भवति। तत्र प्रथमं ३ इति या संख्या अस्ति सा अध्यायसंख्यां दर्शयति। अर्थात् **पाणिघताडघौ शिल्पिनि** इति इदं सूत्रं तृतीयाध्याये अस्ति। ततः परं २ इति द्वितीया संख्या अस्ति। सा संख्या पादस्य भवति। अर्थात् द्वितीये पादे इदं सूत्रम् अस्ति। ततः परं ५५ इति संख्या सूत्रस्य क्रमं दर्शयति। अर्थात् तृतीये अध्याये, द्वितीये पादे, पञ्चपञ्चाशत्तमम् इदं सूत्रम् इत्यर्थः। एवं सर्वत्र बोद्ध्यम्।



## पाठगतप्रश्नाः-३

१३. सूत्रस्य स्वरूपं किम्।



१४. सूत्राणां प्रकारान् लिखत।

१५. का अनुवृत्तिः।

१६. ८.४.१० इति सूत्रसंख्यायाः अर्थः भवति।

१) ८-पादः, ४-अध्यायः, १०-सूत्रम्

२) ८-सूत्रम् , ४-अध्यायः, १०-पादः

३) ८-अध्यायः, ४-पादः, १०-सूत्रम्

४) ८-अध्यायः, ४-सूत्रम्, १०-पादः

१७. अयं न सूत्रस्य प्रकारः।

१) अधिकारः  २) संज्ञा  ३) अतिदेशः  ४) अनुवृत्तिः

## १.५) शब्दस्वरूपम्

शब्दे क्रमशः विद्यामानाः वर्णाः एव शब्दस्य स्वरूपम् भवति। यथा 'रामाद्' इति पदस्य स्वरूपम् भवति 'र् आ म् आ द्' इति क्रमशः विद्यमानाः वर्णाः। एवं रामाद् इति शब्दस्य स्वरूपं भवति - पञ्चानां वर्णानाम् समुदायः। सदा समुदायः एव स्वरूपं भवतीति न। एकः वर्णः अपि शब्दस्वरूपं भवितुम् अर्हति। वर्णसमुदायः वा शब्दस्वरूपं भवितुमर्हति। यथा 'राम' इति वर्णसमुदायात्मकं शब्दस्वरूम्। तस्मात् परं 'भ्याम्' इति प्रत्ययः भवति। 'भ्याम्' इति प्रत्ययः अपि वर्णसमुदायः एव। 'भ्याम्' इति एकं शब्दस्वरूपम्। रामशब्दात् परम् 'औ' इति प्रत्ययः भवति। अत्र 'औ' इति एकः वर्णः, न तु वर्णसमुदायः। अतः 'औ' इति एकं शब्दस्वरूम्।

## १.६) वर्णप्रकटनस्य उपायः

व्याकरणशास्त्रे कस्यचिद् वर्णस्य अपसारणं कृत्वा अपरः वर्णः आनीयते। एवंविधानि कार्याणि भवन्ति। तदा वर्णस्य उल्लेखः प्रकटनं वा कथं कर्तव्यमिति अधस्तात् उपन्यस्यते।

वर्णप्रकटनाय सामान्यतः अवर्णः पवर्णः इत्येवमपि वक्तुं शक्यते। तथापि शास्त्रे ये ये उपायाः अवलम्ब्यन्ते तद्विषयकं ज्ञानम् आवश्यकमिति अत्र विस्तरः क्रियते।

**वर्णात् कारः। रादिफः।** इति वार्तिकद्वयमस्ति। वर्णस्य प्रकटनं कर्तव्यं चेत् ततः परं कार-प्रत्ययः योजनीयः। यथा अ-कारः, पकारः इति। रवर्णः प्रकटनीयः चेत् ततः परम् इफ-प्रत्ययः योजनीयः। यथा - रेफः इति। यद्यपि रकारः इति वक्तुं शक्यम्। तथापि रवर्णस्य प्रकटनाय रेफः इति प्रसिद्धः व्यवहारः। यदा अकारः इति उच्यते तदा तेन केवलं ह्रस्वः एव अवर्णः प्रकटितः भवति इति न। तस्य अष्टादश भेदाः अपि प्रकटिताः भवन्ति इति बोद्धव्यम्। कार-प्रत्यययोगः नित्यं कर्तव्यः इति नियमः नास्ति। 'अस्य च्वौ' इत्यत्र 'अस्य' इति पदे साक्षात् 'अ'वर्णस्य षष्ठ्येकवचनं प्रयुक्तम् दृश्यते।

व्यञ्जनस्य उच्चारणम् अन्तरेण स्वरं कर्तुं नैव शक्यते। अतः व्यञ्जनात् पूर्वं परं वा कश्चित् स्वरः योज्यते। सामान्यतः ह्रस्वः अकार एव योज्यते। यथा - णो नः इति एकं सूत्रम्। अत्र नः इति पुंसि



प्रथमान्तम् पदम्। अत्र केवलं नकारः एव बोधयितुम् इष्टः, न तु अकारसहितः नकारः (न्+अ) इति। परन्तु उच्चारणं सुकरं भवतु इति अकारः योजितः।

स्वरस्य प्रकटनाय कस्यापि व्यञ्जनस्य आवश्यकता नास्ति। स्वयं राजन्ते इति स्वराः। तथापि एकाधिकानां स्वराणाम् एकत्र प्रकटनं कर्तव्यं चेत् सन्धिः भवितुमर्हति। सन्धिः भवति चेत् अर्थः दुर्बोधः भवति। अतः स्वरात् परम् तकारः योज्यते। यथा - एत् इति। अस्य अर्थः भवति एवर्णः अथवा एकारः इति। एतस्य उदारहणं यथा - एदैतोः कण्ठतालु इति। एत् ऐत् इति अनयोः उच्चारणस्थानं कण्ठतालु इत्यर्थः।

स्वरात् पूर्वं परं वा तकारस्य प्रयोगस्य अपरः अपि अर्थः भवति। यदि केवलं ह्रस्वः अकारः प्रकटनीयः तर्हि अत् इति उच्यते। अत् इत्यस्य अर्थः ह्रस्वः अकारः इति। कदा तकारः उच्चारणसौकर्याय गृहीतः कदा वा ह्रस्वस्य दीर्घस्य वा प्रकटनाय गृहीतः इति व्याख्यानं दृष्ट्वा बोद्धव्यम्।

## १.७) धातुप्रकटनस्य उपायः

धातुः स्वरान्तः भवति व्यञ्जनान्तो वा भवति। धातुम् आदाय किमपि कार्यं कर्तव्यं भवति। धातोः उल्लेखः प्रकटनं वा कथं कर्तव्यमिति अधस्तात् प्रदर्श्यते।

इक्-श्तिपौ धातुनिर्देशे। इति वार्तिकम् अस्ति। धातुः प्रकटनीयः चेत् तेन इक् इति प्रत्ययः योजनीयः अथवा श्तिप्-प्रत्ययः योजनीयः।

यथा इक्-योगं कृत्वा गम्-धातुः गम्+इ=गमि। गमिशब्दः पुंलिङ्गः भवति। गमिः इति प्रथमान्तं रूपम् भवति। मिदेर्गुणः इत्यादिस्थले मिद्+इ=मिदिः, तस्य षष्ठ्याम् मिदेः इति रूपं भवति।

श्तिप् प्रत्ययः कर्तरि भवति। भू-धातुतः श्तिप्-प्रत्यययोगेन 'भवति' इति शब्दः (प्रातिपदकम्) निष्पद्यते। तस्य विभक्तिरूपाणि भवन्ति। अत एव भवतेरः इति सूत्रे भवतेः इति षष्ठ्येकवचनं सम्भवति।

बहुत्र साक्षात् भूधातुः पठ्-धातुः इति रूपेणापि प्रकटनं भवति व्याख्यासु।



## पाठगतप्रश्नाः-४

१८. वर्णः कथं प्रकट्यते।

१९. धातुः कथं प्रकट्यते।

२०. गमिः इत्यनेन किं प्रकटितम्।

२१. वर्णप्रकाशाय इदं प्रयुज्यते।

१) कारप्रत्ययः २) तिप्-प्रत्ययः ३) तद्धितप्रत्ययः ४) स्त्रीप्रत्ययः

२२. धातुप्रकटनाय किम् उपयुज्यते।

१) इक् २) श्तिप् ३)तिङ् ४) इक् श्तिप् च

२३. स्तम्भयोः स्थितान् परस्परसम्बद्धान् मेलयत।



| क-स्तम्भः | ख-स्तम्भः |
|---|---|
| १) पतञ्जलिः | १) वैयाकरणसिद्धान्तकौमुदी |
| २) महेश्वरः | २) वर्णात् कारः |
| ३) इन्द्रः | ३) महाभाष्यम् |
| ४) पाणिनिः | ४) श्तिप् |
| ५) वर्णप्रकटनम् | ५) वर्णसमाम्नायः |
| ६) धातुप्रकटनम् | ६) अल्पाक्षरम् |
| ७) कृत्रिमसंज्ञा | ७) अष्टाध्यायी |
| ८) सूत्रम् | ८) अक् |
| ९) प्रक्रियाक्रमः | ९) आदिवैयाकरणः |



## पाठसारः

इन्द्रः सर्वप्रथमम् एकैकस्य शब्दस्य प्रकृतिप्रत्ययरूपेण विभागं कृतवान्। एवञ्च इत्थं विभक्तयोः प्रकृतिप्रत्यययोः मेलनेन शब्दस्य निर्माणं कृतवान्। अतः स शब्दस्य संस्कारं कृतवान्। एवं संस्कारः कृतः अस्ति अतः एव एषा भाषा संस्कृतभाषा इति कथ्यते इति आलोचितं प्रारम्भे। इन्द्रस्य गुरः बृहस्पतिः अपिच इन्द्रः देवान् व्याकरणं पाठितवान् इति विषयः आलोचितः। व्याकरणस्य मुख्याः आचार्याः के इति प्रकटितं तत्रैव।

पाणिनिः मुनिः महेश्वरस्य डमरुनिनादात् सूत्राणि लब्धवान्। तानि एव माहेश्वरसूत्राणि। तानि सूत्राणि अवलम्ब्य पाणिनिः अष्टाध्यायीं रचितवान्।

अष्टाध्यायीग्रन्थस्य अध्ययनस्य प्रकारद्वयम् - सूत्रक्रमः, प्रक्रियाक्रमः चेति। सूत्रक्रमेण लिखिताः केचित् व्याख्याग्रन्थाः। तथैव प्रक्रियाक्रमेण अपि वैयाकरणसिद्धान्तकौमुदी इत्यादयः ग्रन्थाः लिखिताः सन्ति।

शब्दशास्त्रं पदविद्या इत्यादीनि व्याकरणस्य विभिन्नानि नामानि। व्याकरणस्य द्विविधः सम्प्रदायः च अस्ति। कस्यापि पुरुषस्य मुखं यथा प्रमुखं भवति तद्वत् वेदपुरुषस्य मुखम् भवति व्याकरणशास्त्रम्। तावान् महिमा अस्य शास्त्रस्य।

व्याकरणशास्त्रं प्रक्रियामाध्यमेन साधुशब्दस्य निर्माणं कथं कर्तव्यम् इति दर्शयति। तथाहि व्याकरणशब्दस्य व्युत्पत्तिः - व्याक्रियन्ते व्युत्पाद्यन्ते शब्दाः अनेन इति व्याकरणम्।

व्यवहारे संज्ञा उपयोगिनी भवति। अतः पाणिनिः स्वशास्त्रे विविधाः संज्ञाः कृतवान्। तासां भेदाः अस्मिन् पाठे आलोचिताः।



पाणिनिः महर्षिः सूत्राणि लिखितवान्। कति सूत्राणि सन्ति। अतः सूत्रं किं भवति। सूत्राणां प्रकाराः के इति विषयः आलोचितः। अपिच अनुवृत्त्यादिद्वारा सूत्रस्य अर्थः कथं भवति इत्यपि सविस्तरम् उपन्यस्तम्।

कारप्रत्ययस्य योगं कृत्वा वर्णः प्रकट्यते। यथा - अकारः मकारः इति। इक् श्तिप् इति एतद्वयं प्रयुज्य धातुः प्रकट्यते। यथा भवति, गमिः इत्यादिः।

एवम् अस्मिन् प्रथमपाठे व्याकरणस्य आरम्भः कथं जातः इति आलोचितम्। अपिच व्याकरणस्य अध्ययनकाले केचित् मूलविषयाः अवश्यं ज्ञातव्याः ते अपि अत्र प्रदत्ताः सन्तीति शम्।



## योग्यतावर्धनम्

ज्ञानेन योग्यता वर्धते। अर्जितस्य ज्ञानस्य प्रयोगेन च प्रयोगकौशलम् वर्धते। 'यः क्रियावान् स पण्डितः' इति अभियुक्तानाम् मान्यवराणाम् उक्तिः। अतः केवलं व्याकरणं जानाति इति न पर्याप्तम्। तस्य व्यवहारः कर्तव्यः। विशुद्धस्य संस्कृतस्य प्रयोगः इति व्याकरणस्य लक्ष्यम् भवति। अतः क्रियावान् अर्थात् अर्जितस्य ज्ञानस्य व्यवहारवान् भवेत् छात्रः। तदा एव स वस्तुतः पण्डितः भवति।

'न हि ज्ञानेन सदृशं पवित्रमिह विद्यते।' इति श्रीमद्भगवद्गीतायाम् भगवान् श्रीकृष्णः प्राह। तस्य तात्पर्यं यत् ज्ञानं पवित्रीकरोतीति। कथं पवित्रीकरोति। यद् ज्ञानम् अर्ज्यते तदनुसारं व्यवहारः अपि आवश्यकः। तज्ज्ञानम् आश्रित्य अशुद्धिः संशोधनीया। स्वस्य व्यवहारः परिवर्तनीयः पवित्रीकर्तव्यः च। स्वस्य वाणी दोषरहिता कर्तव्या। स्वस्य अन्तःकरणं शुद्धं पवित्रम् निर्मलं च कर्तव्यम्।

व्याकरणं वाङ्गलस्य, भाषायां स्थितानां दोषाणां च वारणे समर्थम्। व्याकरणं विना दोषनिवारणम् दुःसाध्यम् अस्ति। अत एव वदन्ति श्रेष्ठाः - 'यद्यपि बहु नाधीषे तथापि पठ पुत्र व्याकरणम्।' अर्थात् यदि अल्पं पठसि तर्हि आदौ व्याकरणं पठ।

अध्येता स्वस्य योग्यतां वर्धयितुम्, स्वस्य व्युत्पत्तिम् सम्पादयितुम्, स्वस्य भाषाप्रयोगं शुद्धं कर्तुम् , विषयेऽस्मिन् पाटवम् अर्जितुम् च निम्नबिन्दून् अवलोकयेत्। प्रदत्तनिर्देशान् अनुसरेत् च।

- व्याकरणस्य प्रयोगक्षेत्रं तु साहित्यादिकम्। अतः यदा संस्कृतसाहित्यं पठ्यते तदा काव्यादिषु आगतान् व्याकरणस्य अंशान् संगृह्णीयात्।
- संगृहीतानाम् अंशानाम् व्याकरणदृष्ट्या साधुत्वम् समर्थयेत्।
- असाधुप्रयोगान् निवारयेत्। एतेन भाषाशुद्धिः भवति। तेन व्याकरणाध्ययनस्य प्रधानं लक्ष्यं सिद्ध्यति।
- संकलितान् शब्दान् स्वयं भाषणे लेखने च मुहुर्मुहुः व्यवहरेत्। एतेन नूतनशब्दस्य प्रयोगे पाटवं वर्धते। भाषणस्य महिमा वर्धते।



- देशे विदेशे च व्याकरणस्य नैके ग्रन्थाः प्रादेशिकभाषासु अनुवादेन प्रकाशिताः सन्ति। स्वप्रदेशे स्वमातृभाषया के ग्रन्थाः सन्ति तान् आदाय पठेत्। तत्र सुलभं सुबोधं सुकरं किमपि अस्ति चेत् तत् उपादेयम्।
- प्रारम्भिकस्तरे छात्राणां कृते उपयोगी ग्रन्थः - लघुसिद्धान्तकौमुदी इति ग्रन्थस्य भीमसेनशास्त्रिणा हिन्दीभाषया कृता भैमी व्याख्या सुविशाला सुस्पष्टा चास्ति। षट्खण्डात्मकः अयं ग्रन्थः बहूनां सन्देहानां समाधानाय उपयोगी अस्ति।



## पाठान्तप्रश्नाः

१. व्याकरणस्य आरम्भः कथम् अभवत्।

२. इन्द्रस्य परिचयं दत्वा तेन कृतस्य व्याकरणसंस्कारस्य परिचयः कार्यः।

३. सूत्रक्रमेण लिखितान् ग्रन्थान् परिचाययत।

४. प्रक्रियाक्रमेण लिखितान् ग्रन्थान् परिचाययत।

५. व्याकरणस्य महिमानं वर्णयत।

६. व्याकरणशब्दस्य अर्थं लिखित्वा व्याकरणं किं करोति अपिच कथं करोति इति विशदयत।

७. संज्ञाविषये लघुटिप्पणी लेख्या।

८. सूत्रस्वरूपम् अभिव्यज्यताम्।

९. सूत्रप्रकारान् विवृणुत।

१०. वर्णप्रकटनस्य उपायः प्रकटनीयः।

११. धातुप्रकटनस्य उपायः उपस्थापनीयः।

१२. यदि सूत्रस्य क्रमः ५.३.८ इति अस्ति तर्हि किं बोद्धव्यम्।



## पाठगतप्रश्नानाम् उत्तराणि

### उत्तराणि-१

१. इन्द्रस्य गुरुः बृहस्पतिः।

२. संस्कृतभाषायाः आदिः संस्कर्ता इन्द्रः।

३. इन्द्रः शब्दपारायणस्य संस्कारं कृतवान्।

४. महामुनिः पाणिनिः महेश्वरस्य उपासनां कृतवान्। महेश्वरः प्रसन्नः सन् चतुर्दश वारं ढक्कां नादितवान्। अयमेव ढक्कानादः चतुर्दशसूत्री, अक्षरसमाम्नायः, माहेश्वरसूत्राणि इति कथ्यते। एतानि सूत्राणि अवलम्ब्य महर्षिः पाणिनिः अष्टाध्यायी नाम ग्रन्थं रचितवान्। अस्मिन् सूत्राणि सन्ति। अष्टौ अध्यायाः सन्ति। प्रति अध्यायं चत्वारः पादाः सन्ति।



५. पाणिनिः येन क्रमेण सूत्राणि विरचितवान् तेन एव क्रमेण व्याख्यानम् अध्ययनम् अध्यापनं वा भवति चेत् स सूत्रक्रमः उच्यते।

६. येन क्रमेण सूत्राणि पाणिनिना लिखितानि तेन क्रमेण शब्दनिर्माणस्य प्रक्रिया नास्ति। एकैकस्य शब्दस्य निर्माणाय बहूनि सूत्राणि विशिष्टक्रमेण आवश्यकानि भवन्ति। अतः येन क्रमेण शब्दनिर्माणस्य प्रक्रिया भवति तेन क्रमेण सूत्राणि आयोजितानि विद्वद्भिः। इयम् व्याकरणाध्यनस्य परम्परा प्रक्रियाक्रमानुसारिणी अस्ति।

७. ४)

**उत्तराणि-२**

८. अर्थस्य वाचकं पदमेव संज्ञा इति उच्यते। संज्ञायाः अर्थः संज्ञी इति च उच्यते।

९. लघुः महती कृत्रिमा अकृत्रिमा अर्थसंज्ञा शब्दसंज्ञा अन्वर्था अनन्वर्था इति संज्ञायाः प्रकाराः सन्ति।

१०. कर्ता इति अन्वर्थसंज्ञा।

११. ४)

१२. ४)

**उत्तराणि-३**

१३. अल्पाक्षरमसन्दिग्धं सारवद्विश्वतोमुखम्। अस्तोभमनवद्यं च सूत्रं सूत्रविदो विदुः।। इति श्लोकोक्तं भवति सूत्रस्य स्वरूपम्।

१४. सूत्राणां षट् प्रकाराः सन्ति। ते हि १) संज्ञा, २) परिभाषा, ३) विधिः, ४) नियमः, ५) अतिदेशः, ६) अधिकारः चेति।

१५. उपरितनाद् सूत्राद् अधस्तनेषु सूत्रेषु कस्यापि पदस्य आनयनम् एव अनुवृत्तिः इति उच्यते।

१६. ३)

१७. वर्णात् कारः इति, रादिफः इति वार्तिकद्वयमस्ति। वर्णस्य प्रकटनं कर्तव्यं चेत् ततः परं कार-प्रत्ययः योजनीयः। यथा अ-कारः, पकारः इति। रवर्णः प्रकटनीयः चेत् ततः परम् इफ-प्रत्ययः योजनीयः। यथा - रेफः इति।

**उत्तराणि-४**

१८. इक्शितिपौ धातुनिर्देशे इति वार्तिकम् अस्ति। धातुः प्रकटनीयः चेत् तेन इक् प्रत्ययः योजनीयः अथवा श्तिप्-प्रत्ययः योजनीयः। यथा इक्-योगं कृत्वा गम्-धातुः गम्+इ=गमि। गमिशब्दः पुंलिङ्गः भवति। गमिः इति प्रथमान्तं रूपम् भवति। श्तिप् प्रत्ययः कर्तरि भवति। भू-धातुतः श्तिप्-प्रत्यययोगेन 'भवति' इति रूपं निष्पद्यते। तस्य विभक्तिरूपाणि भवन्ति। अत एव भवतेरः इति सूत्रे भवतेः इति षष्ठ्येकवचनं सम्भवति।

१९. इक्शितिपौ धातुनिर्देशे इति वार्तिकेन इक्-योगः भवति। इक्-योगेन गम्-धातुः गम्+इ=गमि। गमिशब्दः पुंलिङ्गः भवति। गमिः इति प्रथमान्तं रूपम् भवति। गमिः इत्यस्य अर्थः भवति गम् इति धातुः।



२०. गम् इति धातुः।

२१. १)

२२. ४)

२३. १-३, २-५, ३-९, ४-७, ५-२, ६-४, ७-८, ९-१

।।इति प्रथमः पाठः।।



# २

# संज्ञाप्रकरणम्-१

## प्रस्तावना

व्याकरणस्य आरम्भः कथं जातः, के मुख्याः आचार्याः सन्ति, के मुख्याः ग्रन्थाः सन्ति इति भवान् बुद्धवान्। किञ्च व्याकरणं किं करोति, कथं करोति इति विषयः अपि ज्ञातः प्रथमपाठे। व्याकरणे साधुशब्दस्य निर्माणं क्रियते। शब्दः वर्णसमुदायात्मकः। अर्थात् कः शब्दः इति चेत् वर्णानाम् समुदायः शब्दः इति उत्तरम्। अतः संस्कृते के वर्णाः सन्ति, तेषां विभाजनं कथम् कृतमस्ति, तेषां कानि नामानि सन्ति, तेषाम् उच्चारणं कथम् भवति इत्यादयः अनेके विषयाः अस्मिन् पाठे अन्तर्भवन्ति। एतस्य पाठस्य सम्यक् ज्ञानम् अग्रिमपाठेषु अध्ययनाय अत्यन्तम् उपयोगि अस्ति। अत्र उक्तानां सञ्ज्ञानां परवर्तिपाठेषु विपुलप्रयोगः अस्ति। अतः अयं पाठः अत्यन्तं गुरुत्वम् आवहति।

कस्यचिद् विषयस्य प्रतिपादनाय हि शास्त्राणि प्रवर्तन्ते। तस्य विषयस्य प्रतिपादने सौकर्याय बहवः उपायाः अवलम्ब्यन्ते। तेषु उपायेषु अन्यतमः उपायः भवति संज्ञा। संस्कृते संज्ञा इत्यस्य पर्यायशब्दाः भवन्ति - नाम, नामधेयम्, आख्या, अभिधानम्, आह्वः इति। ये विभिन्नाः पदार्थाः शास्त्रे आलोच्यन्ते तेषां विविधानि नामानि भवन्ति। एकस्मिन् शास्त्रे एका संज्ञा यम् अर्थं बोधयति, अन्यशास्त्रे सा एव संज्ञा कदाचित् भिन्नमेव अर्थं बोधयति। व्याकरणशास्त्रे काश्चन संज्ञाः व्यवह्रियन्ते यासाम् अर्थाः अन्यशास्त्रेभ्यः भिन्नाः भवन्ति। अग्रे त्रिषु पाठेषु एवम् विशिष्टाः काश्चन संज्ञाः अस्माकम् आलोचनायाः विषयः अस्ति।



## उद्देश्यानि

इमं पाठं पठित्वा भवान् -

- संस्कृतस्य वर्णमालां ज्ञास्यति।
- संस्कृते कति वर्णाः सन्ति, के च ते सन्ति इति सकारणं वक्तुं प्रभवेत्।
- माहेश्वरसूत्राणां ज्ञानं प्राप्स्यति।
- प्रत्याहारस्य निर्माणं कर्तुं समर्थो भविष्यति।
- पाणिनिसूत्रेषु अनुवृत्त्यादिकं कथं भवतीति ज्ञास्यति।
- सूत्राणि व्याख्यातुं प्रभवेत्।
- इत् लोपः सवर्णः इत्यादिसंज्ञानां ज्ञानं प्राप्नुयात्।
- वर्णोच्चारणस्य प्रक्रियां ज्ञास्यति।
- उदात्तः कः अनुदात्तः कः इत्यादिकं सुस्पष्टं ज्ञास्यति।



- वर्णानाम् उच्चारणस्थानानि, यत्नान् च ज्ञास्यति।
- तपरकरणं किम् इति ज्ञास्यति।

## १.१) वर्णमाला

पुस्तके पाठाः भवन्ति। पाठे परिच्छेदाः भवन्ति। परिच्छेदे वाक्यानि भवन्ति। वाक्ये पदानि भवन्ति। पदे वर्णाः भवन्ति। वर्णे किं भवति। भाषायाः ईदृशः अन्तिमः घटकः यस्य अग्रे विभाजनं नैव सम्भवति स हि वर्णः अक्षरम् वा कथ्यते। संस्कृतभाषायां कति अक्षराणि सन्ति इति विषयः सुतरां स्वारस्यं जनयति।

सामान्यतः बहुषु पुस्तकेषु निम्नाः ४४ वर्णाः एव प्रदर्श्यन्ते। परन्तु संस्कृते तथा नास्ति।

अ आ इ ई उ ऊ ऋ ॠ ऌ ए ऐ ओ औ (१३)

क ख ग घ ङ च छ ज झ ञ ट ठ ड ढ ण त थ द ध न प फ ब भ म (२५)

य र ल व श ष स ह (८)

वस्तुतः संस्कृते निम्नाः ६३ वर्णाः सन्ति।

अ आ अ३ इ ई इ३ उ ऊ उ३ ऋ ॠ ऋ३ ऌ ऌ३ ए ए३ ऐ ऐ३ ओ ओ३ औ औ३ (२२)

क ख ग घ ङ च छ ज झ ञ ट ठ ड ढ ण त थ द ध न प फ ब भ म (२५)

य यँ र ल लँ व वँ श ष स ह (११)

ळ, अनुस्वारः, विसर्गः, द्वौ जिह्वामूलीयौ, द्वौ उपध्मानीयौ (७)

२२+२५+११+७=६३

वर्णानाम् इतोऽपि सविस्तरं परिचयः अधस्तात् उपन्यस्यते।

**स्वराः** - अ आ इ ई उ ऊ ऋ ॠ ऌ ए ऐ ओ औ (अं अः अनुस्वार-विसर्गौ)

| वर्गं → | प्रथमः | द्वितीयः | तृतीयः | चतुर्थः | पञ्चमः | उच्चारण-स्थानम् | | अन्तःस्थाः | ऊष्मा |
|---|---|---|---|---|---|---|---|---|---|
| **स्पर्शवर्णाः** | अल्पप्राणः | महाप्राणः | अल्पप्राणः | महाप्राणः | अल्पप्राणः | | | | |
| **कु - कवर्गः** | क | ख | ग | घ | ङ | कण्ठः | | | ह विसर्गः |
| **चु - चवर्गः** | च | छ | ज | झ | ञ | तालु | | य | श |
| **टु - टवर्गः** | ट | ठ | ड | ढ | ण | मूर्धा | | र | ष |
| **तु - तवर्गः** | त | थ | द | ध | न | दन्ताः | | ल | स |
| **पु - पवर्गः** | प | फ | ब | भ | म | ओष्ठौ | | | |



**अन्तःस्थवर्णाः** - य र ल व (यणोऽन्तस्थाः।)

**ऊष्मवर्णाः** - श ष स ह (शल ऊष्माणः।)

**वर्णमालायाः वैशिष्ट्यम्** - संस्कृतवर्णमाला अत्यन्तम् सुचिन्तिता वैज्ञानिकी च वर्तते। तस्याः आयोजने यद्यपि बहूनि वैशिष्ट्यानि सन्ति तथापि कानिचन वैशिष्ट्यानि अधः दीयन्ते -

- आदौ स्वराः ततः परं व्यञ्जनानि च न्यस्तानि। स्वरव्यञ्जयोः संकरः नास्ति।
- स्वरेषु च शुद्धस्वराः (अ आ अ३ इ ई इ३ उ ऊ उ३ ऋ ॠ ऋ३ ऌ ऌ३) आदौ सन्ति। ए ए३ ऐ ऐ३ ओ ओ३ औ औ३ एते जन्यस्वराः ततः परं सन्ति। अ+इ=ए, अ+ए=ऐ, अ+उ=ओ, अ+ओ=औ इति रूपेण एते स्वराः जन्यन्ते उत्पद्यन्ते।
- व्यञ्जनानाम् आयोजने तु अत्यन्तं सूक्ष्मता अस्ति। २५ स्पर्शव्यञ्जनानि प्रथमं सन्ति। ततः परम् ७ अन्तःस्थानि व्यञ्जनानि सन्ति। अन्ते ४ ऊष्मव्यञ्जनानि सन्ति।
- स्पर्शव्यञ्जनानि हि वर्गीयव्यञ्जनानि कथ्यन्ते। तेषाम् पञ्च वर्गाः सन्ति। येषाम् उच्चारणस्थानम् समानम् तानि पञ्च स्पर्शव्यञ्जनानि एकत्र स्थापितानि सन्ति। यथा येषाम् उच्चारणस्थानम् कण्ठः तानि क ख ग घ ङ इति एतानि पञ्च स्पर्शव्यञ्जनानि एकत्र स्थापितानि। एतेषां समुदायस्य नाम कवर्गः इति। एवमेव च छ ज झ ञ इति चवर्गस्य उच्चारणस्थानं तालु। ट ठ ड ढ ण इति टवर्गस्य उच्चारणस्थानम् मूर्धा। त थ द ध न इति तवर्गस्य उच्चारणस्थानम् दन्ताः। प फ ब भ म इति पवर्गस्य उच्चारणस्थानम् औष्ठौ।
- प्रति वर्गम् प्रथमव्यञ्जनम् अल्पप्राणम्, द्वितीयम् महाप्राणम्, तृतीयम् अल्पप्राणम्, चतुर्थम् महाप्राणम्, पञ्चमम् अल्पप्राणम् इति व्यवस्था अस्ति।
- पञ्चानामपि वर्गाणाम् अन्तिमवर्णः अनुनासिकः अस्ति। यथा ङ ञ ण न म इति।
- प्रतिवर्गम् प्रथमम् व्यञ्जनद्वयम् कठोरम् उच्यते। अन्तिमम् व्यञ्जनत्रयम् मृदु उच्यते। क ख एते कठोरे। ग घ ङ एतानि मृदूनि। एवं सर्वेषु वर्गेषु।
- वर्गीयव्यञ्जनोत्तरम् अन्तःस्थानि ७ व्यञ्जनानि सन्ति। तेषु रेफस्य अनुनासिकः रेफः नास्ति। अन्येषाम् यवलानाम् अनुनासिकाः यँवँलाँः सन्ति।
- अन्ते च श ष स ह एतानि ऊष्माणि व्यञ्जनानि सन्ति।
- सूक्ष्मचिन्तनेन इदम् अवगन्तुं शक्यते यत् मुखे उच्चारणस्य पञ्च स्थानानि सन्ति। एकस्मात् स्थानात् केचित् स्वराः, पञ्च वर्गीयव्यञ्जनानि, एकम् अन्तःस्थम् व्यञ्जनम्, एकम् ऊष्मव्यञ्जनम् च उत्पद्यन्ते। यथा तालुस्थानात् इ चवर्गः य श एते वर्णाः उच्चार्यन्ते। तेषु इ - स्वरः, च छ ज झ ञ इति वर्गीयाः, य - अन्तःस्थः, श - स्पर्शः इति।



## १.२) माहेश्वरसूत्राणि

**अइउण्।१। ऋलृक्।२। एओङ्।३। ऐऔच्।४।**

**हयवरट्।५। लण्।६। ञमङणनम्।७। झभञ्।८। घढधष्।९। जबगडदश्।१०।**

**खफछठथचटतव्।११। कपय्।१२।। शषसर्।१३। हल्।१४।**

एतानि चतुर्दश माहेश्वराणि सूत्राणि। एतेषाम् सूत्राणाम् अन्ते ण् क् ङ् इति एकैकम् व्यञ्जनम् अस्ति। तस्य नाम 'इत्' इति। एतानि सूत्राणि प्रत्याहारनिर्माणाय व्यवह्रियन्ते। प्रत्याहारः संक्षेपः भवति।

**माहेश्वरसूत्राणां वैशिष्ट्यानि -** वर्णसमाम्नायः चतुर्दशसूत्री इत्यपि माहेश्वरसूत्राणाम् नामान्तरे। वर्णसमाम्नाये आ ई ऊ ॠ विसर्गः जिह्वामूलीयः उपध्मानीयः अनुस्वारः इति एतादृशाः वर्णाः, वर्णसदृशध्वनयः वा न सन्ति। वर्णानां सर्वादृतः यः नैसर्गिकः क्रमः वर्तते तस्य महान् विपर्यासः अत्र परिलक्ष्यते। स्वराणां क्रमः प्रायः तथैव वर्तते। व्यञ्जनेषु क्रमः इत्थम् - हकारः (ऊष्मा), अन्तःस्थाः, वर्गपञ्चमाः अनुनासिकाः, वर्गचतुर्थाः, वर्गतृतीयाः, वर्गद्वितीयाः, वर्गप्रथमाः, ऊष्माणः इति। णकारः द्विः इत्संज्ञकः। लँण्-सूत्रे लकारात् परः अँकारः अनुनासिकः। अतः इत्संज्ञकः। तेन अवर्णेन सह उच्चार्यमाणः रेफः रलयोः संज्ञा भवति। अल् इति प्रत्याहारे सर्वे वर्णाः सन्तीति अल् शब्दः वर्णपर्यायत्वेन गण्यते। अचः हि स्वराः, हलः हि व्यञ्जनानि इति सुष्ठु विभागोऽपि परिलक्ष्यते।

### १.२.१) प्रत्याहारनिर्माणस्य प्रक्रिया

प्रत्याहारनिर्माणस्य प्रविधिः अधस्तात् उपन्यस्यते।

अष्टाध्याय्याम् आचार्यः पाणिनिमुनिः केषांचिद् वर्णानाम् समुदायम् प्रकटयितुम् इच्छति। सामान्यः उपायः तु तेषां वर्णानां साक्षाद् उल्लेखः इति। यथा - इ उ ऋ लृ इति एतेषां स्थाने क्रमशः य् व् र् ल् इति एते वर्णाः कर्तव्याः यदि इ उ ऋ लृ इति एते वर्णाः अ इ उ ऋ लृ ए ओ ऐ औ इति एतेभ्यः वर्णेभ्यः पूर्वं वर्तन्ते इति। एवंरूपेण प्रकटनम् यद्यपि सम्भवति तथापि इदं क्लिष्टमस्ति, गुरुभूतम् अस्ति। इतोऽपि लघीयान् उपायः सम्भवति चेत् अत्युत्तमम्। स एव उपायः भवति प्रत्याहारः। तदित्थम् भवति - ये वर्णाः प्रकटनीयाः सन्ति ते संकलनीयाः। ततः परं माहेश्वरसूत्रेषु यः क्रमः अस्ति तेन क्रमेण आयोजनीयाः। तत्र यः आदिः अर्थात् प्रथमः वर्णः भवति स ग्राह्यः। तेषु यः अन्तिमः भवति, स माहेश्वरसूत्रेषु कुत्रास्ति इति द्रष्टव्यम्। तस्मात् परम् यः इत्-संज्ञकः वर्णः भवति स ग्राह्यः। एवम् आदिवर्णेन सह इत्संज्ञकस्य मेलनेन एव प्रत्याहारः भवति।

**उदाहरणम्** - यथा ऋ लृ इ उ इति एतान् वर्णान् प्रकटयितुम् इच्छामि। तर्हि एतेषां माहेश्वरसूत्रक्रमेण लेखनम् करोमि, यथा - इ उ ऋ लृ इति। अधुना एतेषु प्रथमः वर्णः भवति 'इ' इति। अन्तिमः वर्णः अस्ति 'लृ' इति। माहेश्वरसूत्रेषु ततः परम् इत्-संज्ञकः वर्णः अस्ति 'क्' इति। इदानीम् प्रथमवर्णेन 'इ' इत्यनेन सह इत्-संज्ञकस्य 'क्' इत्यस्य मेलनम् करोमि, तदा 'इक्' इति शब्दः भवति। अयम् 'इक्' एव प्रत्याहारः भवति। प्रत्याहारः एका संज्ञा भवति। 'इक्' इति प्रत्याहारस्य अर्थः भवति इ उ ऋ लृ इति चत्वारः वर्णाः।



एवम् र् ल् व् य् इति वर्णानां सक्षेपेण प्रकटनम् सम्भवति। एतेषाम् माहेश्वरसूत्रे यः क्रमः तेन क्रमेण लेखनम् - य् व् र् ल् इति। तेषाम् आदिः वर्णः 'य्' इति। तेषाम् अन्त्यः वर्णः 'ल्' इति। माहेश्वरसूत्रेषु ततः परमेव इत्संज्ञकः वर्णः अस्ति 'ण्' इति। 'य्' इत्यस्य 'ण्' इत्यनेन मेलने कृते 'यण्' इति लभ्यते। 'यण्' एव प्रत्याहारः। अतः 'यण्' संज्ञा अस्ति। तत्संज्ञिनः य् व् र् ल् इति वर्णाः सन्ति। यण् इति शब्दे यवर्णात् परम् अवर्णः योज्यते (य्+'अ'+ण् इति)। तेन यण् इत्यस्य उच्चारणम् सुकरम् भवति।

माहेश्वरसूत्रेषु अन्तिमवर्णस्य कः उपयोगः - इदमत्रवधेयम् यत् चतुर्दशसु सूत्रेषु अन्तिमः वर्णः इत्संज्ञकः अस्ति, तस्य उपयोगः केवलं प्रत्याहारस्य निर्माणाय भवति। परन्तु तस्य संज्ञिषु गणना न भवति। यथा यण् इति प्रत्याहारः संज्ञा। तत्संज्ञिनः य् व् र् ल् इति एते एव। तेषु ट् नास्ति, ण् नास्ति। यण् इति प्रत्याहारे य् व् र् ल् गणनाकाले हयवरट् , लण् इति सूत्रद्वयम् गृह्यते। तत्र हयवरट् इति सूत्रस्य अन्तिमवर्णः ट् इति अस्ति। सोऽपि संज्ञिषु न गण्यते इत्यपि अवधेयम्। तद्यथा - लोके चषकेण कंसेन वा जलम् आदाय पिबामः परन्तु चषकं न पिबामः। चषकस्य उपयोगः जलस्य धारणाय न तु पानाय। तद्वत् इत्संज्ञकस्य उपयोगः प्रत्याहारस्य निर्माणाय भवति न तु संज्ञिभिः सह व्यवहाराय।

एवम् नैके प्रत्याहाराः सम्भवन्ति। यथा अच् इति प्रत्याहारः सज्ञा, तत्संज्ञिनः सर्वे स्वराः भवन्ति। हल् इत्यस्य संज्ञिनः सर्वाणि व्यञ्जनानि भवन्ति। अतः उच्यते यत् अच् इति स्वरपर्यायः। हल् इति व्यञ्जनपर्यायः इति। अल् इति वर्णपर्यायः इति।

### उपदेशः

'उपदेशेऽजनुनासिक इत्' इति सूत्रे पाणिनिना उपदेशपदं प्रयुक्तं दृश्यते। उप इति उपसर्गः दिश् इति धातुः। दिश्-धातोः भावे घञ्प्रत्ययः प्रयुक्तः। तदा उपदेश इति शब्दः निष्पद्यते। उप इति शब्दस्य आद्यः इति अर्थः। दिश्-धातोः अर्थः उच्चारणक्रिया। एवञ्च उपदेशशब्दस्य अर्थः भवति आद्योच्चारणम् इति। आद्यं च तद् उच्चारणम् आद्योच्चारणमिति कर्मधारयसमासः। महेश्वर-पाणिनि-कात्यायन-पतञ्जलीनां प्रथममुच्चारणम् आद्योच्चारणम्। पूर्वम् अज्ञातम् पदम् मुनिः प्रथमम् उच्चरति। इदं उच्चारणम् एव आद्योच्चारणम् इति। रूपावतारग्रन्थे सुप्रसिद्धा एषा कारिका उक्ता -

**धातुसूत्रगणोणादिवाक्यलिङ्गानुशासनम्।**
**आगमप्रत्ययादेशा उपदेशाः प्रकीर्तिताः।। इति।**

अन्या अपि काचित् अभियुक्तोक्ता कारिका दृश्यते -

**प्रत्ययाः शिवसूत्राणि आदेशा आगमास्तथा।**
**धातुपाठो गणेपाठ उपदेशाः प्रकीर्तिताः।। इति।**

पाणिनिमुनिना अष्टाध्यायी धातुपाठः लिङ्गानुशासनम् गणपाठः इति चत्वारः व्याकरणग्रन्थाः रचिताः। उणादिसूत्राणि पूर्वमेव केनचित् लिखितानि। कात्यायनमुनिः वार्तिकम् लिखितवान्। तदेव वार्तिकम् वाक्यम् अपि कथ्यते। इत्थम् - धातुः, सूत्राणि, गणे पठिताः शब्दाः, उणादिसूत्राणि, वार्तिकानि, लिङ्गानुशासनम्, आगमः प्रत्ययः आदेशः इति एतद् आद्योच्चारणम् इति व्यवसितम् अस्ति।





## पाठगतप्रश्नाः-१

१. संस्कृते कति वर्णाः सन्ति।

२. माहेश्वरसूत्रेषु द्वितीयं सूत्रं किम्।

३. माहेश्वरसूत्रेषु कः वर्णः इत्-संज्ञकः।

४. प्रत्याहारशब्दस्य अर्थः कः।

५. वर्गतृतीयाः एव वर्णाः कस्मिन् प्रत्याहारे सन्ति।

६. शरि प्रत्याहारे के वर्णाः सन्ति।

७. उपदेशाः के के सन्ति।

८. वर्णपर्यायः अयमस्ति।

१) हल्  २) अच्  ३) अल्  ४) यर्

९. स्वरपर्यायः अयमस्ति।

१) हल्  २) अच्  ३) अल्  ४) यर्

१०. व्यञ्जनपर्यायः अयमस्ति।

१) हल्  २) अच्  ३) अल्  ४) यर्

११. पवर्गे कः नास्ति।

१) म  २) क  ३) ब  ४) भ

१२. संस्कृतभाषायाम् कति वर्णाः सन्ति।

१) ४४  २) ४५  ३) ५४  ४) ६३

१३. जश्-प्रत्याहारे अयं नास्ति।

१) ग  २) झ  ३) ब  ४) ड

१४. कात्यायनमुनिः अष्टाध्याय्यां किम् लिखितवान्।

१) उणादिसूत्राणि  २) धातुपाठः  ३) सूत्रपाठः  ४) वार्तिकम्

---

## [ २.१] आदिरन्त्येन सहिता॥ (१.१.७१)

**सूत्रार्थः** - अन्त्येन इता सह आदिः मध्यगानां स्वस्य च संज्ञा भवति

**सूत्रव्याख्या** - इदं संज्ञासूत्रम्। सूत्रेऽस्मिन् चत्वारि पदानि सन्ति। आदिः अन्येन सह इता इति पदच्छेदः। आदिः इति प्रथमायाम् एकवचने रूपम् अर्थात् आदिः इति प्रथमैकवचनान्तम् पदम्। अन्त्येन इति तृतीयायाम् एकवचने रूपम् अर्थात् अन्त्येन इति तृतीयैकवचनान्तम् पदम्। सह इति अव्ययपदम्। इता इति इत् शब्दस्य तृतीयायाम् एकवचने रूपम् अर्थात् इता इति तृतीयैकवचनान्तम् पदम्। यस्मात्



पूर्वं नास्ति सः आदिः। यस्मात् परं नास्ति सः अन्तः। अन्ते भवः अन्त्यः। स्वं रूपं शब्दस्याशब्दसंज्ञा इति सूत्रात् स्वम् इति प्रथमान्तम् पदम् अनुवर्तते, षष्ठ्यन्ततया परिणमते च। अन्त्येन इता सह आदिः स्वस्य इति अन्वयः। इदं सूत्रं संज्ञाप्रकरणे पठितम्। अतः संज्ञा इति पदम् आनेतुम् शक्यम्। तदा पदानि भवन्ति - अन्त्येन इता सह आदिः स्वस्य संज्ञा भवति। यदा आदिः अन्तिमेन सह गृह्यते तदा आदितः अन्तं यावत् मध्ये यद् यद् अस्ति तत् सर्वमपि गृहीतम् भवति। अतः मध्यगानाम् इत्यस्य आक्षेपः क्रियते। अतः एव सूत्रस्य सरलार्थः भवति - अन्त्येन इता सह आदिः मध्यगानां स्वस्य (आदेः) च संज्ञा भवति इति।

**उदाहरणम्** - अण् इण् अच् हल्।

**सूत्रार्थसमन्वयः** - माहेश्वरसूत्रेषु अ इति वर्णेन सह ण् इति अन्त्येन इत्संज्ञकवर्णेन सह मेलनं कृत्वा अण् इति लभ्यते। माहेश्वरसूत्रेषु अ इति वर्णाद् आरभ्य ण् इति इत्संज्ञकवर्णं यावत् मध्ये इ उ इति द्वौ वर्णौ स्तः। तस्मात् अन्त्येन ण् इति इत्संज्ञकेन सह आदिः अण् इति मध्यगानाम् इ उ इति एतयोः स्वस्य (आदेः अकारस्य) च संज्ञा भवति इति समन्वयः। अर्थात् अण् इति शब्दः अ इ उ इति एतेषां वर्णानाम् संज्ञा भवति।

एवम् अन्त्येन च् इति इत्संज्ञकेन सह, आदिः एच् इति वर्णः, मध्यगानाम् ओ ऐ औ इति एतेषां स्वस्य (आदेः एकारस्य) च संज्ञा भवति। अर्थात् एच् इति शब्दः ए ओ ऐ औ इति चतुर्णाम् वर्णानाम् संज्ञा भवति।

एवंरीत्या अन्त्येन इता सह उच्चारितः आदिः यथा अण् अच् एच् इति शब्दः प्रत्याहारः इति कथ्यते। अण् अच् एच् इति प्रत्याहाराः संज्ञाः भवन्ति।

**[शब्दावली - अन्वयः** - सम्बन्धः। एकपदार्थस्य अपरपदार्थेन सह सम्बन्धः एव अन्वयः। प्रथमं वाक्यस्य श्रवणं भवति। वाक्ये स्थितानाम् पदानाम् ये अर्थाः तेषाम् पृथक् पृथक् स्मरणं भवति। इदम् स्मरणम् एव उपस्थितिः इति कथ्यते शास्त्रेषु। एवं स्मृतानाम् अर्थानाम् आकाङ्क्षादिवशात् परस्परम् सम्बन्धः भवति। अयं सम्बन्धः एव अन्वयः। येन क्रमेण अर्थानाम् सम्बन्धः भवति, तेन क्रमेण पदानाम् लेखनम् उच्चारणं वा अन्वयः इति सामान्यतः व्यवहरन्ति।

**व्यवहरति** - व्यवहारं करोति। उपयोगं करोति।

**प्रत्ययः** - प्रत्ययशब्दस्य बहुलप्रयोगः व्याकरणे अस्ति। अतः तस्य ज्ञानम् नूनम् आवश्यकम्। रामः इति शब्दः अस्ति। अस्मिन् राम+सु इति विभागः अस्ति। तत्र राम इति प्रकृतिः सु इति प्रत्ययः। राम इति शब्दे अपि रम्+घञ् इति विभागः अस्ति। तत्र रम् धातुः हि प्रकृतिः अस्ति, घञ् प्रत्ययः अस्ति। अतः रामः इति शब्दे प्रत्ययद्वयम् अस्ति, प्रकृतिद्वयम् चास्ति। तथापि यदा सु इति प्रत्ययः मन्यते तदा राम इति एव प्रकृतिः। यतो हि राम इति शब्दम् उद्दिश्य सु प्रत्ययः विधीयते। यदा तु घञ् इति प्रत्ययः मन्यते तदा तस्य प्रकृति रम् इति धातुः एव। यतो हि रम् इति धातुम् उद्दिश्य घञ् इति प्रत्ययः विधीयते। इत्थम् तत्र तत्र प्रकृतिप्रत्ययविभागः करणीयः। अत्र पाणिनिमुनिः अष्टाध्याय्याम्



प्रत्ययः इति अधिकारसूत्रं कृतवान्। तस्मिन् अधिकारे ये विहिताः ते प्रत्ययाः इत्यपि अवधेयम्। परन्तु अधिकारादिज्ञानं विना तद् बोद्धुं न शक्यते। अतः अलं तेन।]



## पाठगतप्रश्नाः-२

१५. आदिरन्त्येन सहेता इति सूत्रे संज्ञासंज्ञिनिर्णयं कुरुत।

१६. आदिरन्त्येन सहेता इति किंविधम् सूत्रम्।

१७. आदिरन्त्येन सहेता इति सूत्रस्यार्थं लिखत।

१८. आदिरन्त्येन सहेता इति सूत्रेण निर्मितम् एकम् प्रत्याहारम् उक्त्वा तत्संज्ञिनः लिखत।

१९. इयं संज्ञा आदिरन्त्येन सहेता इति सूत्रेण न कृता।

१) इक् २) हश् ३) खर् ४) खश्

२०. स्तम्भयोः स्थितान् परस्परसम्बद्धान् मेलयत। क-स्तम्भे शब्दाः सन्ति। ख-स्तम्भे तस्य कृते प्रत्याहारः अस्ति। कस्य कः इति मेलनीयम्।

| | क-स्तम्भः | | ख-स्तम्भः |
|---|---|---|---|
| १) | वर्णपर्यायः | क) | ञय् |
| २) | स्वरपर्यायः | ख) | शल् |
| ३) | व्यञ्जनपर्यायः | ग) | यण् |
| ४) | वर्गप्रथमाः | घ) | झष् |
| ५) | ऊष्माणः | ङ) | एच् |
| ६) | अनुनासिकाः | च) | अल् |
| ७) | अन्तःस्थाः | छ) | अच् |
| ८) | स्पर्शाः | ज) | चय् |
| ९) | महाप्राणाः | झ) | ञम् |
| १०) | जन्यस्वराः | ञ) | हल् |

## १.३) इत्संज्ञा

अत्र इत् इति संज्ञा कस्य भवति इति विषयः प्रस्तूयते। किञ्च अष्टाध्याय्याम् अनुवृत्तिः, विभक्तिविपरिणामः इत्यादिकं कथम् भवति इत्यपि अत्र प्रदर्श्यते।

अष्टाध्याय्याम् इत्संज्ञाविधायकानि कानिचन सूत्राणि क्रमशः सन्ति। तेषां तेनैव क्रमेण विमर्शः अत्र उपस्थाप्यते। तेषां व्याख्यानम् अपि अत्रैव युगपद् उपन्यस्यते।



अष्टाध्याय्याम् क्रमशः सूत्राणि इत्थम् सन्ति -

## [ २.२] उपदेशेऽजनुनासिक इत्॥ (१.३.२)

## [ २.३] हलन्त्यम्॥ (१.३.३)

## [ २.४] न विभक्तौ तुस्माः॥ (१.३.४)

## [ २.५] आदिर्ञिटुडवः॥ (१.३.५)

## [ २.६] षः प्रत्ययस्य॥ (१.३.६)

## [ २.७] चुटू॥ (१.३.७)

## [ २.८] लशक्वतद्धिते॥ (१.३.८)

## [ २.९] तस्य लोपः॥ (१.३.९)

एतेषु सूत्रेषु उपरितनात् सूत्रात् कानिचन पदानि अनुवर्तन्ते। तद् अधः प्रदर्श्यते। तत्र यत् पदम् अनुवर्तते तत् पीनम् (स्थूलम् bold) कृतम् अस्ति। सूत्रस्य पदच्छेदः अपि तत्रैव स्पष्टम् प्रदत्तः।

| | | | | | | |
|---|---|---|---|---|---|---|
| १. | **उपदेशे** | | | अच् अनुनासिकः | **इत्** | १.३.२ |
| २. | **उपदेशे** | | | **हल् अन्त्यम्** | **इत्** | १.३.३ |
| ३. | **उपदेशे** | विभक्तौ | तुस्माः न | **हल्** | **इत्** | १.३.४ |
| ४. | **उपदेशे** | | ञिटुडवः | **आदिः** | **इत्** | १.३.५ |
| ५. | **उपदेशे** | षः | **प्रत्ययस्य** | **आदिः** | **इत्** | १.३.६ |
| ६. | **उपदेशे** | चुटू | **प्रत्ययस्य** | **आदिः** | **इत्** | १.३.७ |
| ७. | **उपदेशे** | अतद्धिते लशकु | **प्रत्ययस्य** | **आदिः** | **इत्** | १.३.८ |
| ८. | | | तस्य | लोपः | **इतः** | १.३.९ |





अनुवर्तनानन्तरम् यद् वाक्यम् भवति तत्र शब्दानाम् विभक्तिरूपाणि परिवर्तनीयानि भवन्ति। तत् परिवर्तनं कृत्वा पदानाम् क्रमस्य च परिवर्तनं कृत्वा अधः प्रकट्यते।

१) उपदेशे अनुनासिकः अच् इत् भवति।

२) उपदेशे अन्त्यम् हल् इत् भवति।

३) उपदेशे विभक्तौ हलः तुस्माः इतः न भवन्ति। (इतः - प्रथमा बहुवचनम्)

४) उपदेशे आदयः ञिटुडवः इतः भवन्ति।

५) उपदेशे प्रत्ययस्य आदिः षः इत् भवति।

६) उपदेशे प्रत्ययस्य आदी चुटू इतौ भवतः। (इतौ - प्रथमा द्विवचनम्)

७) उपदेशे अतद्धिते प्रत्ययस्य आदि लशकु इत् भवति।

८) तस्य इतः लोपः भवति। (इतः - षष्ठी एकवचनम्)

एतेषाम् इतोऽपि सुबोधभाषया प्रकटनम् अधः क्रियते।

१) उपदेशे यः अनुनासिकः अच् तस्य इत् संज्ञा भवति।

२) उपदेशे यः अन्त्यः हल् तस्य इत् संज्ञा भवति।

३) उपदेशे विभक्तिसंज्ञके प्रत्यये तवर्गः सकारः मकारः इति ये हल्-वर्णाः तेषाम् इत् संज्ञा न भवति।

४) उपदेशे आदिः यः ञि टु डु इति तस्य इत् संज्ञा भवति।

५) उपदेशे प्रत्ययस्य आदिः यः षवर्णः तस्य इत् संज्ञा भवति।

६) उपदेशे प्रत्ययस्य आदिः यः चवर्गः टवर्गः च, तयोः इत् संज्ञा भवति।

७) उपदेशे यः तद्धितभिन्नप्रत्ययस्य आदिः लवर्णः शवर्णः कवर्गः च इति एतेषाम् इत्संज्ञा भवति।

८) यस्य इत् संज्ञा तस्य लोपः भवति।

यस्य इत्-संज्ञा भवति स एव अनुबन्धः इत्यपि कथ्यते। एतेषाम् इत्संज्ञकवर्णानाम् अग्रे सन्धिप्रकरणादौ बाहुल्येन प्रयोगः उपयोगश्च दृश्येते। अतः उदाहरणानि तत्रैव स्पष्टी भविष्यन्ति।



## [२.१०] अदर्शनं लोपः॥ (१.१.९)

**सूत्रार्थः** - प्रसक्तस्य उच्चारणाभावः लोपसंज्ञः भवति।

**सूत्रव्याख्या** - इदं संज्ञासूत्रम्। अस्मिन् सूत्रे द्वे पदे स्तः। न दर्शनम् अदर्शनम् इति नञ्-तत्पुरुषः समासः। दर्शनशब्दस्य ज्ञानम् अर्थः। तथापि अत्र उच्चारणाभावः इति अर्थः। अनेन सूत्रेण उच्चारणाभावस्य लोपः इति संज्ञा भवति। कस्य उच्चारणस्य अभावस्य लोपः इति नाम दीयते इति प्रश्नः। स आलोच्यते अत्र।

**लौकिकोदाहरणेन सूत्रार्थस्य स्पष्टीकरणम्** - अद्य सायम् सप्तवादने चन्द्रदर्शनम् भविष्यति इति ज्ञातम्। सायं सप्तवादने यदि चन्द्रदर्शनं न भवति तर्हि उच्यते यत् चन्द्रः लुप्तः अथवा चन्द्रस्य लोपः जातः। सप्तवादने चन्द्रस्य दर्शनम् भविष्यति इति एव अन्यप्रकारेण प्रकटयितुम् शक्यते। यथा सायं सप्तवादने चन्द्रः प्रसक्तः इति। एवम् प्रसक्तस्य चन्द्रस्य दर्शनाभावः लोपः इति लोके व्यवहारः। ऋतुः परिवर्तते चेत् वृष्टिः उष्णता शैत्यम् च अपि परिवर्तन्ते। तत्तदृतौ तत्तत् भवति। तस्मात् ग्रीष्मर्तौ उष्णता प्रसक्ता। वर्षार्तौ वृष्टिः प्रसक्ता। एवमेव वृक्षाणां फलानि अपि ऋतौ प्रसक्तानि भवन्ति। अर्थात् किमपि विशिष्टं कारणं नास्ति चेत् तानि तानि फलानि भविष्यन्ति इति।

एवमेव यस्य शब्दस्य वर्णस्य वा उच्चारणं प्रसक्तम् आसीत् (प्राप्तम् आसीत्) तस्य प्रसक्तस्य उच्चारणाभावः एव लोपः इति कथ्यते। अस्मिन् सूत्रे उच्चारणाभावः हि संज्ञी, लोपः इति संज्ञा। अतः सूत्रार्थो भवति - प्रसक्तस्य उच्चारणाभावः लोपसंज्ञः भवति।

**उदाहरणम्** - अ इ उ ण् । ऋ ऌ क्। इति सूत्रद्वये ण् क् इति द्वयोः वर्णयोः इत्-संज्ञा अस्ति, तयोः लोपः च भवति।

**सूत्रार्थसमन्वयः** - यदा अक् इति प्रत्याहारे के वर्णाः इति प्रश्नः भवति तदा अ इ उ ऋ ऌ इति एते पञ्च एव वर्णाः सन्ति इति उत्तरम् भवति। उत्तरे ण् क् इति अनयोः उच्चारणं न भवति, गणना न भवति। यदि तयोः इत्-संज्ञा न स्यात् तर्हि उच्चारणम् अपि भवेत्। अत एव ण् क् इति द्वौ वर्णौ प्रसक्तौ। परन्तु तयोः इत्-संज्ञा भवति। यस्य इत्-संज्ञा तस्य लोपः भवति, अर्थात् उच्चारणाभावः भवति। इत्थम् प्रसक्तस्य उच्चारणाभावः व्यवहाराभावः वा लोपः इति कथ्यते।



## पाठगतप्रश्नाः-३

२१. तस्य लोपः इति सूत्रेण कस्य लोपः।

२२. कः अनुबन्धः इति कथ्यते।

२३. अदर्शनं लोपः इति सूत्रस्यार्थः कः।

२४. अदर्शनं लोपः इति सूत्रे अदर्शनशब्दस्यार्थः कः।

२५. अदर्शनं लोपः इति सूत्रे संज्ञासंज्ञिनिर्णयः कार्यः।



२६. कस्य लोपः भवति।

१) अदर्शनस्य  २) सूत्रस्य  ३) धातोः  ४) इत्-संज्ञकस्य

२७. जश् इति प्रत्याहारे कः न गण्यते।

१) ज्  २) श्  ३) ब्  ४) ड्

## [ २.११]  ऊकालोऽज्झ्रस्वदीर्घप्लुतः॥ (१.२.२७)

**सूत्रार्थः** - वाम् उच्चारणस्य कालः इव उच्चारणस्य कालः यस्य अचः (स्वरस्य) सः अच् क्रमाद् ह्रस्वसंज्ञः दीर्घसंज्ञः प्लुतसंज्ञः स्यात्।

**सूत्रव्याख्या** - इदम् संज्ञासूत्रम्। अस्मिन् सूत्रे त्रीणि पदानि सन्ति। ऊकालः अच् ह्रस्वदीर्घप्लुतः इति पदच्छेदः। सर्वाणि पदानि प्रथमैकवचनान्तानि। ह्रस्वः च दीर्घः च प्लुतः च ह्रस्वदीर्घप्लुतः इति समाहारद्वन्द्वसमासः। (समाहारद्वन्द्वः नपुंसकलिङ्गकः भवति। किन्तु सूत्रे पाणिनिमुनिः तथा न कृतवान्। सूत्रे एवं सम्भवति।) उश्च ऊश्च उ३श्च वः। ऊकारस्य प्रथमाबहुवचनान्तम् रूपम् वः इति। वाम् इति षष्ठीबहुवचनम्। तेषाम् वाम् (उ ऊ उ३ एषाम्) उच्चारणस्य कालः इव उच्चारणस्य कालः यस्य अचः (स्वरस्य) सः अच् क्रमाद् ह्रस्वसंज्ञः दीर्घसंज्ञः प्लुतसंज्ञः स्यात् इति सूत्रार्थः।

अर्थात् उकारस्य उच्चारणाय यावान् कालः आवश्यकः तावान् कालः यस्य स्वरस्य उच्चारणाय आवश्यकः भवति तस्य स्वरस्य ह्रस्वः इति संज्ञा भवति।

ऊकारस्य उच्चारणाय यावान् कालः आवश्यकः तावान् कालः यस्य स्वरस्य उच्चारणाय आवश्यकः भवति तस्य स्वरस्य दीर्घः इति संज्ञा भवति।

उ३कारस्य उच्चारणाय यावान् कालः आवश्यकः तावान् कालः यस्य स्वरस्य उच्चारणाय आवश्यकः भवति तस्य स्वरस्य प्लुतः इति संज्ञा भवति।

**सूत्रार्थस्य विवरणम्** - स्वृ शब्दोपतापयोः इति धातुः। स्वर्यन्ते शब्द्यन्ते इति स्वराः। उदात्तादिभिः स्वयं राजन्ते इति स्वराः। अर्थात् स्वरस्य उच्चारणम् अन्यवर्णस्य साहाय्यं विना सम्भवति। परन्तु स्वरं विना केवलं व्यञ्जनस्य उच्चारणं जगति केनापि कर्तुं न शक्यते। व्यञ्जनस्य उच्चारणं कर्तुम् व्यञ्जनात् पूर्वम् परं वा कश्चित् स्वरः योज्यते। एकस्य व्यञ्जनस्य उच्चारणाय यावान् कालः आवश्यकः तस्य परिमाणम् अर्धमात्रा इति कथ्यते। व्यञ्जनस्य उच्चारणकालः स्थिरः एव। न केनापि वर्धयितुं शक्यते न वा केनापि क्षाययितुम् शक्यते। एवं व्यञ्जनम् अर्धमात्रिकम्। अर्धमात्रायाः द्विगुणस्य कालस्य परिमाणम् एकमात्रा भवति। एवम् ह्रस्वः एकमात्रिकः भवति। दीर्घः द्विमात्रिकः भवति। प्लुतः त्रिमात्रिकः भवति।

एवम् एकमात्रिकः अच् संज्ञी, ह्रस्वः इति संज्ञा। द्विमात्रिकः अच् संज्ञी, दीर्घः इति संज्ञा। त्रिमात्रिकः अच् संज्ञी, प्लुतः इति संज्ञा।



कुक्कुटः कु कू कु३ इति रौति। तत्र क्रमशः ह्रस्वदीर्घप्लुताः उकाराः श्रूयन्ते। कुक्कुटस्य शब्दे उकारः अस्ति। तस्मात् सूत्रे आचार्यः पाणिनिमुनिः उकारस्य आदानं कृत्वा प्रतिपादनं कृतवान्। अन्यथा तु अवर्णः वर्णमालायां माहेश्वरसूत्रेषु च प्रथमः अस्ति। तस्य एव आदानम् युक्तम् (उचितम्) आसीत्।

एवम् अवर्णस्य इवर्णस्य उवर्णस्य ऋवर्णस्य च ह्रस्वदीर्घप्लुतभेदेन त्रयः प्रकाराः भवन्ति। ऌवर्णस्य ह्रस्वप्लुतभेदेन प्रकारद्वयम्। तस्य दीर्घः नास्ति। ए ओ ऐ औ इति एतेषाम् दीर्घप्लुतभेदेन प्रत्येकम् द्वौ प्रकारौ स्तः। एतेषाम् ह्रस्वाः न सन्ति।

## [ २.१२] उच्चैरुदात्तः॥ (१.२.२९)

**सूत्रार्थः** - ताल्वादिषु सभागेषु ऊर्ध्वभागे निष्पन्नः अच् उदात्तसंज्ञः भवति।

**सूत्रव्याख्या** - इदं संज्ञासूत्रम्। अस्मिन् सूत्रे द्वे पदे स्तः। उच्चैः उदात्तः इति सूत्रगतपदच्छेदः। ताल्वादिषु सभागेषु ऊर्ध्वभागे निष्पन्नः अच् उदात्तसंज्ञः भवति इति सूत्रस्यार्थः।

**सूत्रार्थविवरणम्** - अधः समाहारः स्वरितः इति सूत्रव्याख्याप्रसङ्गे सविस्तरं प्रदत्तम् अस्ति।

## [ २.१३] नीचैरनुदात्तः॥ (१.२.३०)

**सूत्रार्थः** - ताल्वादिषु सभागेषु अधोभागे निष्पन्नः अच् अनुदात्तसंज्ञः भवति।

**सूत्रव्याख्या** - इदं संज्ञासूत्रम्। अस्मिन् सूत्रे द्वे पदे स्तः। नीचैः अनुदात्तः इति सूत्रगतपदच्छेदः। न उदात्तः अनुदात्तः इति नञ्-तत्पुरुषः समासः। ताल्वादिषु सभागेषु अधोभागे निष्पन्नः अच् अनुदात्तसंज्ञः भवति इति सूत्रस्यार्थः।

**सूत्रार्थविवरणम्** - अधः समाहारः स्वरितः इति सूत्रव्याख्याप्रसङ्गे सविस्तरं प्रदत्तम् अस्ति।

## [ २.१४] समाहारः स्वरितः॥ (१.२.३१)

**सूत्रार्थः** - उदात्तत्वम् अनुदात्तत्वम् इति द्वौ वर्णधर्मौ यस्मिन् अचि समाह्रियेते सः अच् स्वरितसंज्ञः भवति।

**सूत्रव्याख्या** - इदं संज्ञासूत्रम्। अस्मिन् सूत्रे द्वे पदे स्तः। समाहरणम् एकत्रीकरणम् मेलनं वा समाहारशब्दस्य अर्थः भवति।

उदात्तत्वम् अनुदात्तत्वम् इति द्वौ वर्णधर्मौ यस्मिन् अचि समाह्रियेते सः अच् स्वरितसंज्ञः भवति इति सूत्रस्यार्थः। यस्मिन् अचि उदात्तत्वम् अनुदात्तत्वम् इति द्वौ वर्णधर्मौ मिलितौ सः अच् संज्ञी अस्ति। स्वरितः इति संज्ञा अस्ति।

**सूत्रार्थविवरणम्** - त्रयाणाम् अपि सूत्राणाम् आलोचनम् अधस्तात् प्रस्तूयते।

**वर्णानाम् उच्चारणस्य स्थानानि** -

वर्णानाम् उच्चारणाय मुखस्य विविधानाम् स्थानानाम् उपयोगः भवति। तानि स्थानानि अष्टौ सन्ति। अत्र पञ्च स्थानानि एव आलोच्यन्ते।



गले ग्रीवायाम् वा सम्मुखे उन्नतः भागः भवति। स चिबुकस्य अधस्तात् भवति। तस्य नाम काकलकः इति। स एव लोके कण्ठमणिः इति कथ्यते। काकलकाद् आरभ्य ओष्ठं यावत् पञ्च स्थानानि उच्चारणाय व्यवह्रियन्ते। तानि च - १) कण्ठः, २) मूर्धा, ३) तालु, ४) दन्ताः, ५) औष्ठौ इति।

अवर्णस्य उच्चारणाय श्वासनलिकायाः आकुञ्चनं क्रियते। नलिकायाः यः अंशः आकुञ्चितः भवति तस्य नाम **कण्ठः** इति। मुखविवरे उपरितने गोलाकारे उन्नततमं स्थानम् **मूर्धा** भवति। ततः परं दन्तं यावत् विस्तीर्णस्य विभागस्य यः मध्यबिन्दुः स **तालु** इति कथ्यते। **दन्ताः** दशनाः इति प्रसिद्धाः। द्वौ **ओष्ठौ** च।

**कः उदात्तः भवति -**

कण्ठस्य यावान् भागः उच्चारणाय उपयोगी भवति तस्य भागद्वयम् कर्तव्यम्। ऊर्ध्वभागः अधोभागः च।

अत्र उच्चैः इति शब्दस्य अर्थः भवति - ऊर्ध्वभागे इति। उच्चैः इत्यस्य महान् ध्वनिः इति नात्रार्थः। कण्ठस्य ऊर्ध्वभागे अभिघातेन यः स्वरः उत्पद्यते स उदात्तः इति कथ्यते।

यथा कण्ठस्य भागाः कल्प्यन्ते। तस्य ऊर्ध्वभागः अधोभागः च कल्प्येते। तथा तालुनः मूर्ध्नः दन्तानाम् ओष्ठयोः च अपि भागाः कल्पनीयाः।

**कः अनुदात्तः भवति -**

सूत्रस्थस्य नीचैः इति शब्दस्य अर्थः भवति - अधोभागे इति। नीचैः इत्यस्य लघीयान् ध्वनिः इति न अत्र अर्थः। कण्ठस्य अधोभागे अभिघातेन यः स्वरः उत्पद्यते सः अनुदात्तः इति कथ्यते।

**कः स्वरितः -**

उदात्तस्य स्वरस्य धर्मः उदात्तत्वम्। अनुदात्तस्य स्वरस्य धर्मः अनुदात्तत्वम्। यस्मिन् स्वरे उदातत्वम् अनुदात्तत्वं च मिलितं भवति स स्वरः स्वरितः स्वरः कथ्यते। अतः स्वरितस्य उच्चारणे कण्ठादीनाम् ऊर्ध्वभागः अधोभागः च अपि व्यवह्रियेते।

**स्वरिते उदात्तत्वस्य अनुदात्तत्वस्य च विभागः -**

स्वरितस्य कस्मिन् भागे उदात्तत्वम् कस्मिन् वा भागे अनुदात्तत्वम् इति ज्ञानम् अपेक्षितम्। स्वरितस्वरे पूर्वार्धभागः उदात्तः भवति। उत्तरार्धभागः अनुदात्तः भवति। स्वरितस्वरात् परं यदि अन्यः उदात्तः स्वरितः वा स्वरः स्यात् तर्हि अस्य अनुदात्तभागस्य उच्चारणम् अनुदात्तमेव भवति। यदि अस्मात् स्वरितस्वरात् परम् अनुदात्तस्वरः स्यात् तर्हि स्वरितस्य यः अनुदात्तभागः तस्य उदात्ततरम् उच्चारणं भवति। अर्थात् उदात्ताद् अपि ऊर्ध्वभागे निष्पद्यते।

स्वरिताद् परम् उदात्तः स्वरितः वा इति स्थितिः चेत् अनुदात्तभागस्य अनुदात्तमेव उच्चारणम्।

स्वरितात् परम् अनुदात्तः प्रचयः वा इति स्थितिः चेत् अनुदात्तभागस्य उदात्ततरम् उच्चारणम्।



**प्रचयः एकश्रुतिः**

स्वरितस्वरानन्तरम् अनुदात्तस्वराः ततः परम् उदात्तः इति यदा स्थितिः भवति तदा उदात्तात् पूर्वं विद्यमानः एकः अनुदात्तः अधोरेखया चिह्नितः भवति। ततः पूर्वं विद्यमानाः अनुदात्ताः स्वरचिह्नहीनाः भवन्ति। तेषामेव अनुदात्तानाम् नाम प्रचयः एकश्रुतिः वा।

**उदाहरणम्** - अ॒ग्निमी॑ळे पु॒रोहि॑तम्(ऋ.१.१.१)। उप॑ त्वाग्ने दि॒वेदि॑वे (ऋ.१.१.७)। अप्र॑युतामेवयावो म॒तिं दाः॑। (ऋ.७.१००.२)

**सूत्रार्थसमन्वयः** - अ॒ग्निमी॑ळे पु॒रोहि॑तम् इति ऋग्वेदस्य अग्निसूक्तस्य प्रथमं शब्दत्रयम्। अस्मिन् अ॒ग्निमी॑ळे इत्यत्र अकारः अनुदात्तः। इकारः उदात्तः। ईकारः स्वरितः। एकारः प्रचयः। अतः एव ईकारस्य यः उत्तरार्धभागः तस्य उदात्ततरम् उच्चारणं भवति। व्यञ्जनस्य उदात्तत्वादिकं नास्ति।

उप॑ त्वाग्ने दि॒वेदि॑वे (ऋ.१.१.७) इत्यत्र उप॑ इत्यस्मिन् उकारः उदात्तः, पकारात् परः अकारः स्वरितः। दि॒वे इत्यत्र दकारात् परः इकारः अनुदात्तः। ' त्वाग्ने ' इत्यत्र सर्वे स्वराः प्रचयाः।

अप्र॑युतामेवयावो म॒तिं दाः॑। (ऋ.७.१००.२) इत्यत्र अप्र॑ इत्यस्मिन् प्रथमः अकारः उदात्तः, द्वितीयः अकारः स्वरितः। म॒तिं इत्यत्र मकारात् परवर्ती अकारः अनुदात्तः। ' युतामेवयावो ' इत्यत्र सर्वे स्वराः प्रचयाः।



## पाठगतप्रश्नाः-४

२८. कस्य ह्रस्वसंज्ञा भवति।

२९. कः उदात्तः भवति।

३०. स्वरितसंज्ञाविधायकं सूत्रं किम्।

३१. स्वरितस्य कस्मिन् भागे उदात्तत्वम्।

३२. प्रचयः कः।

३३. एकं वैदिकम् उदाहरणं दत्वा तत्र उदात्तानुदात्तस्वरितप्रचयान् वदत।

३४. कस्य उच्चारणम् अन्यस्य साहाय्यं विना सम्भवति।

१) विसर्गस्य २) अनुस्वारस्य ३) स्वरस्य ४) व्यञ्जनस्य

३५. कः स्वरितः न भवति।

१) ह्रस्वः २) दीर्घः ३) प्लुतः ४) व्यञ्जनम्

३६. प्रचयः वस्तुतः कः भवति।

१) उदात्तः २) अनुदात्तः ३) स्वरितः ४) एषु कोऽपि न



## [ २.१५] मुखनासिकावचनोऽनुनासिकः॥ (१.१.८)

**सूत्रार्थः -** मुखसहितया नासिकया उच्चार्यमाणः वर्णः अनुनासिकसंज्ञः भवति।

**सूत्रव्याख्या -** संज्ञासूत्रम् इदम्। अस्मिन् सूत्रे पदद्वयम् अस्ति। मुखनासिकावचनः अनुनासिकः इति पदच्छेदः। पदद्वयम् अपि प्रथमान्तम् अस्ति। मुखसहिता नासिका इति मुखनासिका इति मध्यमपदलोपी तत्पुरुषसमासः। उच्यते उच्चार्यते इति वचनः। यः उच्यते सः इति उच्चारणस्य कर्म वचनः इत्यर्थः। उच्चारणविषयः इति यावत्। मुखनासिकया वचनः इति मुखनासिकावचनः इति तृतीयातत्पुरुषः समासः। मुखसहितया नासिकया यः वर्णः उच्चार्यते स वर्णः अनुनासिकः कथ्यते। अत्र मुखनासिकया उच्चारितः वर्णः संज्ञी भवति। अनुनासिक इति संज्ञा भवति।

**उदाहरणम् -** अँ आँ इँ ईँ उँ ऊँ ऋँ।

**वर्णस्य प्रकाराः -**

आहत्य कस्य वर्णस्य कति भेदाः, कति प्रकाराः इति एकत्र दर्शनम् आवश्यकम्। उपरि उक्तरूपेण एकस्य अवर्णस्य ह्रस्वः दीर्घः प्लुतः इति त्रयः भेदाः। तेषु ह्रस्वस्यापि उदात्तः अनुदात्तः स्वरितः इति त्रयः भेदाः। एवं दीर्घस्यापि उदात्तः अनुदात्तः स्वरितः इति त्रयो भेदाः। एवं प्लुतस्यापि उदात्तः अनुदात्तः स्वरितः इति त्रयो भेदाः। एवं नव भेदाः स्पष्टाः।

नवसु अपि एकैकस्यापि भेदस्य अनुनासिकः अननुनासिकः इति भेदद्वयम् भवति। अतः आहत्य एकस्य अकारस्य अष्टादश भेदाः सिद्ध्यन्ति।

एवम् अ इ उ ऋ इति प्रत्येकं वर्णानाम् अष्टादश भेदाः सन्ति। लृवर्णः ह्रस्वः प्लुतः च अस्ति, दीर्घः न भवति। अतः तस्य द्वादश एव भेदाः भवन्ति। इत्थमेव ए ओ ऐ औ इति एचाम् दीर्घः प्लुतः च भेदः भवति, तेषाम् ह्रस्वभेदः न भवति। अतः एचाम् अपि प्रत्येकम् वर्णानाम् द्वादश एव भेदाः भवन्ति।

य् व् ल् इति एतेषामपि त्रयाणाम् अनुनासिकः अननुनासिकः च भेदाः भवन्ति। एवम् य् यँ , व् वँ , ल् लँ इति एवं प्रकाराः भवन्ति।

**अकारस्य भेदाः चित्रमुखेन प्रकटिताः।**







## पाठसारः

संस्कृतभाषायाम् ६३ वर्णाः सन्ति। तस्मिन् ळकारः, अनुस्वारः, द्वौ जिह्वामूलीयौ, द्वौ उपध्मानीयौ अपि अन्तर्भवन्ति। वर्णमालायाः यः नैसर्गिकः क्रमः स केन आयोजितः इति तु न ज्ञायते परन्तु सः अतीव वैशिष्ट्यपूर्णः अस्ति। प्रथमं स्वराः, ततः परं व्यञ्जनानीति बहूनि वैशिष्ट्यानि सन्ति।

लघुना उपायेन व्याकरणस्य सूत्राणि रचयितुम् पाणिनिमुनिः महेश्वरात् चतुर्दश (१४) सूत्राणि लब्धवान्। तान्येव माहेश्वरसूत्राणि। तेषु प्रतिसूत्रं यः अन्तिमः वर्णः स इत्-संज्ञकः भवति। तस्य साहाय्येन प्रत्याहाराः निर्मीयन्ते। प्रत्याहारनिर्माणस्य प्रक्रियाम् आदिरन्त्येन सहेता इति सूत्रेण पाणिनिः अवोचत्।

त्रिभिः मुनिभिः उक्ताः प्रत्ययादयः उपदेशाः कथ्यन्ते। तेषु उपदेशेषु केचिद् वर्णाः इत्-संज्ञां लभन्ते। इत्-संज्ञाविधायकानि सप्त सूत्राणि सन्ति। तैः सूत्रैः विविधानां वर्णानाम् वर्णसमुदायानाम् वा इत्-संज्ञा क्रियते। इत्-संज्ञकः एव अनुबन्धः कथ्यते। अनुबन्धस्य लोपः अर्थात् व्यवहाराभावः तस्य लोपः इति सूत्रेण भवति।

इत्-संज्ञाविधायकसूत्राणि यत्र आलोचितानि तत्रैव पाणिनिसूत्रेषु अनुवृत्तिः, पदस्य वचनविपरिणामः, अनुवर्तमानस्य पदस्य निवृत्तिः इत्येते विषयाः आलोचिताः।

प्रसक्तस्य शब्दस्वरूपस्य उच्चारणाभावः व्यवहाराभावः वा लोपः भवति इति अदर्शनं लोपः इति सूत्रस्यार्थः आलोचितः।

संस्कृतभाषायां यावन्तः वर्णाः सन्ति तेषु स्वराः व्यञ्जनानि इति भागद्वयं भवति प्राधान्येन। स्वराः एव अच्। व्यञ्जनानि एव हल्।

उकारस्य उच्चारणाय यावान् कालः आवश्यकः तावान् कालः यस्य स्वरस्य उच्चारणाय आवश्यकः भवति तस्य स्वरस्य ह्रस्वः इति संज्ञा भवतीति ऊकालोऽज्झ्रस्वदीर्घप्लुतः इति सूत्रस्यार्थः। अनेनैव सूत्रेण दीर्घसंज्ञा प्लुतसंज्ञा अपि क्रियते। एवं स्वराणां ह्रस्वः दीर्घः प्लुतः इति त्रयो भेदाः सम्पन्नाः।

उच्चैरुदात्तः इति सूत्रेण उदात्तसंज्ञा, नीचैरनुदात्तः इति सूत्रेण अनुदात्तसंज्ञा, समाहारः स्वरितः इति सूत्रेण स्वरितसंज्ञा च क्रियन्ते। स्वरितस्य स्वरस्य प्रथमार्धभागः उदात्तः भवति, उत्तरार्धभागः अनुदात्तः भवति। पूर्वं येषां ह्रस्वदीर्घप्लुतभेदाः जाताः तेषां पुनः एतैः सूत्रैः अनुदात्तः उदात्तः स्वरितः इति त्रयः भेदाः भवन्ति।

यस्य वर्णस्य उच्चारणाय मुखेन सह नासिकायाः अपि व्यवहारः भवति स वर्णः अनुनासिकः कथ्यते इति मुखनासिकावचनोऽनुनासिकः इति सूत्रस्यांशः। यद्यपि अननुनासिकसंज्ञाविधायकं किमपि सूत्रं नास्ति तथापि इदं बोद्ध्यम् यत् यस्य केवलं मुखेन उच्चारणं भवति सः अननुनासिकः निरनुनासिकः वा कथ्यते। तेन प्रतिस्वरं भागद्वयं भवति - अनुनासिकः अननुनासिकः चेति। इत्थम् अ इ उ ऋ एषाम् प्रत्येकम् अष्टादश भेदाः। ऌ ए ओ ऐ औ एषाम् प्रत्येकम् द्वादश भेदाः।





## योग्यतावर्धनम्

अस्मिन् पाठे प्रत्याहारनिर्माणस्य प्रक्रियां पठितवन्तः। पठिते विषये दाढर्च्यं सम्पादयितुम् निम्नबिन्दून् अवलोक्य निर्देशानुसारं कार्याणि कुर्यात् छात्रः।

- कस्मिन्नपि प्रत्याहारे के के वर्णाः सन्ति इति सुस्पष्टं ज्ञानम् अपेक्षितं चेत् माहेश्वरसूत्राणां कण्ठपाठं विना गत्यन्तरं नास्ति। अतः तेषां स्मरणाय प्रकृष्टः यत्नः श्रद्धया विधेयः।
- पठितानि सूत्राणि अष्टाध्याय्याम् यत्र सन्ति तत् स्थलम् अष्टाध्याय्याम् उद्घाट्य कस्मात् सूत्रात् किम् पदम् अनुवर्तते, कः अधिकारः आयाति इति पश्येत्।
- एकैकस्य स्वरस्य समेषामपि प्रकाराणाम् चित्ररूपेण प्रकटनं कर्तव्यम्।
- गुरुमुखात् वेदम् अधीत्य तत्र उदात्तानुदात्तस्वरितप्रचयान् परिचिनुयात्।



## पाठान्तप्रश्नाः-५

अधस्तात् अभ्यासाय प्रश्नाः दीयन्ते। छात्रैः पाठं सम्यक् पठित्वा बुद्ध्वा च विमृश्य एतेषां प्रश्नानाम् उत्तराणि स्वटिप्पणीपुस्तिकायां लेख्यानि। प्रायः बहुत्र दीर्घमेव उत्तरं स्यात्।

१. संस्कृतस्य वर्णमालां लिखित्वा तस्याः वैशिष्ट्यानि लिखत।
२. माहेश्वरसूत्राणां वैशिष्ट्यानि लिखत।
३. प्रत्याहारनिर्माणप्रक्रियां संक्षेपेण वर्णयत।
४. उपदेशाः के इति स्पष्टीकुरुत।
५. आदिरन्त्येन सहेता इति सूत्रं व्याख्यात।
६. अदर्शनं लोपः इति सूत्रं व्याख्यात।
७. स्वरितस्य कस्मिन् भागे उदात्तत्वम् कस्मिन् वा भागे अनुदात्तत्वम् इति सोदाहरणं स्पष्टीकुरुत।
८. अवर्णस्य सकलान् भेदान् लिखत।



## पाठगतप्रश्नानाम् उत्तराणि

अधस्तात् पाठगतप्रश्नानाम् उत्तराणि लिखितानि सन्ति। तानि सूचकोत्तराणि सन्ति। अर्थात् अत्यन्तं लघु उत्तरम् अस्ति। परीक्षायाम् उत्तरलेखनकाले स्पष्टं वाक्यं लिख्यते चेद् वरम्।

**उत्तराणि-१**

१. ६३



२. ऋलृक्।

३. अन्त्यः। अनुनासिकश्च।

४. संक्षेपः।

५. जश्।

६. शषसाः।

७. धातुः, सूत्राणि, गणे पठिताः शब्दाः, उणादिसूत्राणि, वार्तिकानि, लिङ्गानुशासनम्, आगमः प्रत्ययः आदेशः इति एतद् आद्योच्चारणमेव उपदेशाः।

८. 3)

९. 2)

१०. 1)

११. 2)

१२. 4)

१३. 2)

१४. 4)

**उत्तराणि-२**

१५. अन्त्येन इत्संज्ञकेन सह, आदिः वर्णः, मध्यगानाम् संज्ञा भवति। आदिः मध्यगाः च संज्ञिनः भवन्ति।

१६. संज्ञासूत्रम्।

१७. अन्त्येन इता सह आदिः मध्यगानां स्वस्य च संज्ञा भवति।

१८. प्रत्याहारः - यण्। तत्संज्ञिनः - यवरलाः।

१९. 4)

२०. 1)-च), 2)-छ), 3)-ञ), 4)-ज), 5)-ख), 6)-झ), 7)-ग), 8)-क), 9)-घ), 10)-ङ)

**उत्तराणि-३**

२१. इत्संज्ञकस्य।

२२. इत्संज्ञकः।

२३. प्रसक्तस्य उच्चारणाभावः लोपसंज्ञः भवति।

२४. उच्चारणाभावः।

२५. प्रसक्तस्य उच्चारणाभावः अर्थः संज्ञी, लोपः इति संज्ञा।

२६. 4)

२७. 2)



**उत्तराणि-४**

२८. उकारस्य उच्चारणाय यावान् कालः आवश्यकः तावान् कालः यस्य स्वरस्य उच्चारणाय आवश्यकः भवति तस्य स्वरस्य ह्रस्वः इति संज्ञा भवति।

२९. कण्ठस्य ऊर्ध्वभागे अभिघातेन यः स्वरः उत्पद्यते स उदात्तः इति कथ्यते।

३०. समाहारः स्वरितः।

३१. स्वरितस्वरे पूर्वार्धभागः उदात्तः भवति।

३२. स्वरितस्वरानन्तरम् अनुदात्तस्वराः ततः परम् उदात्तः इति यदा स्थितिः भवति तदा उदात्तात् पूर्वं विद्यमानः एकः अनुदात्तः अधोरेखया चिह्नितः भवति। ततः पूर्वं विद्यमानाः अनुदात्ताः स्वरचिह्नहीनाः भवन्ति। तेषामेव अनुदात्तानाम् नाम प्रचयः एकश्रुतिः वा।

३३. **अप्रं॑युतामेवयावो म॒तिं दाः॑**। (ऋ.७.१००.२) इत्यत्र **अप्र॑** इत्यस्मिन् प्रथमः अकारः उदात्तः, द्वितीयः अकारः स्वरितः। **म॒तिं** इत्यत्र मकारात् परवर्ती अकारः अनुदात्तः। ' **युतामेवयावो** ' इत्यत्र सर्वे स्वराः प्रचयाः।

३४. ३)

३५. ४)

३६. २)

।।इति द्वितीयः पाठः।।



३

# संज्ञाप्रकरणम्-२

## प्रस्तावना

पूर्वस्मिन् पाठे वर्णाः, तेषाम् भेदाः, भेदानां नामानि, वर्णोच्चारणप्रक्रिया, स्वराणां बहुविधप्रकाराः इति आलोचितम्। आभ्यन्तरप्रयत्नः बाह्ययत्नः इत्यपि आलोचितम्। सवर्णसंज्ञां कृत्वा कः वर्णः कदा स्वसवर्णस्य संज्ञा भवतीति अपि पूर्वपाठे एव आलोचितम्। अनेन शब्दस्य यः मूलघटकः स वर्णः, तस्य व्याकरणोपयोगितया विवरणं सम्पन्नम्।

अस्मिन् पाठे समेषां वर्णानाम् उच्चारणस्थानि आभ्यन्तरप्रयत्नाः बाह्ययत्नाः च आलोचयिष्यन्ते। एतेषाम् उपयोगेन एकस्य वर्णस्य अपरः वर्णः सवर्णः कथं भवतीत्यपि द्रष्टव्यमस्ति। तत्रैव एकः सवर्णः अपरस्य सवर्णस्य ग्रहणं कदा करोतीति मुख्यविषयः। तपरकरणस्य अर्थः तात्पर्यं च इत्यपरः विषयः अग्रे वर्तते। किञ्च व्याकरणे कथम् शब्दमादाय कार्यं भवतीति व्याकरणस्य वैशिष्ट्यमपि अत्रैवाग्रे अस्ति। बहुषु सूत्रेषु तदन्तविधिः तदादिविधिश्च भवतः। अतः स विषयः आलोच्यः अस्ति।



## उद्देश्यानि

इमं पाठं पठित्वा भवान् -

- वर्णोच्चारणस्य प्रक्रियां ज्ञास्यति।
- वर्णानाम् उच्चारणस्थानि आभ्यन्तरप्रयत्नान् बाह्ययत्नान् च ज्ञास्यति।
- कः अनुस्वारः, क उपध्मानीयः, कः जिह्वामूलीयः इत्यादिकं ज्ञास्यति।
- अनिष्टस्य सावर्ण्यस्य वारणे समर्थो भविष्यति।
- ग्रहणकशास्त्रं ज्ञास्यति।
- एकः सवर्णः अपरस्य सवर्णस्य ग्रहणं कदा करोतीति ज्ञास्यति।
- तपरकरणे समर्थो भविष्यति।
- व्याकरणशास्त्रे शब्दस्य संस्कारः भवति न तु अर्थस्य इति विषये पाणिनिसूत्रं पठिष्यति।
- तदन्तविधिं तदादिविधिं च कर्तुं समर्थो भविष्यति।



## [ ३.१] तुल्यास्यप्रयत्नं सवर्णम्॥ (१.१.९)

**सूत्रार्थः -** यस्य वर्णस्य येन वर्णेन तुल्यम् उच्चारणस्थानम् किञ्च तुल्यः आभ्यन्तरप्रयत्नः भवति तौ मिथः सवर्णौ। एकः वर्णः अपरस्य वर्णस्य सवर्णसंज्ञकः भवतीत्यर्थः।

**सूत्रव्याख्या -** इदं सञ्ज्ञासूत्रम्। अस्मिन् सूत्रे पदद्वयम् अस्ति। तुल्यास्यप्रयत्नम् इति प्रथमान्तम् पदम्। सवर्णम् इति प्रथमान्तम् संज्ञापदम्। तुल्यशब्दस्य सदृशः इति अर्थः। आस्य इत्यस्य मुखम् इति अर्थः। किन्तु अस्मिन् सूत्रे अर्थः भवति - आस्ये मुखे भवम् आस्यम् इति। मुखे विद्यमानम् इत्यर्थः। मुखे तालु दन्ताः मूर्धा ओष्ठौ कण्ठः चेति पञ्च स्थानानि विद्यन्ते। अतः प्रकरणोपयोगितया आस्यशब्दस्य ताल्वादिस्थानम् अर्थः। प्रकृष्टः यत्नः प्रयत्नः इति प्रादितत्पुरुषसमासः। आस्यं च प्रयत्नः च आस्यप्रयत्नौ इति इतरेतरयोगद्वन्द्वसमासः। तुल्यौ आस्यप्रयत्नौ यस्य वर्णजालस्य तत् तुल्यास्यप्रयत्नम् इति बहुव्रीहिसमासः। यस्य वर्णस्य येन अपरेण वर्णेन तुल्यम् सदृशम् उच्चारणस्थानम् अपिच तुल्यः आभ्यन्तरप्रयत्नः भवति स वर्णः तस्य अपरस्य सवर्णसंज्ञकः भवति।

[**व्युत्पत्तिः** - कस्यापि शब्दस्य अर्थः प्रकटनीयः चेत् एते प्रकाराः अवलम्ब्यन्ते -

तुल्यशब्दस्य सदृशः इति अर्थः।

'तुल्यः सदृशः' इति।

'तुल्यशब्दः सदृशपर्यायः' इति।

'तुल्य इत्यक्ते सदृश इत्यर्थः' इति।

एतेषां समेषां वाक्यानाम् अर्थः समानः एव। परन्तु यदा 'प्रचयः एकश्रुतिः' इति उच्यते तदा तस्य अर्थः कः इति झटिति न स्फुरति प्रारम्भिकावस्थायाम् छात्राणाम्। परन्तु तत्र अर्थः कर्तव्यः - प्रचयः एव एकश्रुतिः इति कथ्यते। अपरमुदाहरणम् - 'विसर्जनीयः विसर्गः' इत्यस्य अर्थः - विसर्जनीयः इत्यस्य पर्यायशब्दः विसर्गः इति। अथवा विसर्जनीयः एव विसर्गः इति कथ्यते।

एवम् प्रकाराः तत्र तत्र बोद्धव्याः।]

### स्थानानि

अत्र प्रश्नः भवति यत् कस्य वर्णस्य किम् उच्चारणस्थानम् इति। तदेवात्रालोच्यते। अधः शिक्षाग्रन्थस्थानि कानिचन वचनानि तदर्थम् उपस्थाप्यन्ते।

**१) अकुहविसर्जनीयानां कण्ठः। २) इचुयशानां तालु। ३) ऋटुरषाणां मूर्धा। ४) लृतुलसानां दन्ताः। ५) उपूपध्मानीयानामोष्ठौ। ६) ञमङणनानां नासिका च। ७) एदैतोः कण्ठतालु। ८) ओदौतोः कण्ठोष्ठम्। ९) वकारस्य दन्तोष्ठम्। १०) जिह्वामूलीयस्य जिह्वामूलम्। ११) नासिकानुस्वारस्य।**



**अर्थः -**

१) अ कु (कवर्गः - क ख ग घ ङ) ह विसर्जनीयः इति एषाम् उच्चारणस्थानम् अस्ति कण्ठः। कण्ठदेशस्य आकुञ्चनम् कृत्वा वायोः रोधं कृत्वा एते वर्णाः उच्चार्यन्ते। अत्र अ इत्यनेन तस्य १८ भेदाः बोद्ध्याः।

२) इ चु (चवर्गः - च छ ज झ ञ) य श इति एषाम् उच्चारणस्थानम् भवति तालु। अत्र इ इत्यनेन तस्य १८ भेदाः बोद्ध्याः।

३) ऋ टु (टवर्गः - ट ठ ड ढ ण) र ष इति एषाम् उच्चारणस्थानम् भवति मूर्धा। अत्र ऋ इत्यनेन तस्य १८ भेदाः बोद्ध्याः।

४) ऌ तु (तवर्गः - त थ द ध न) ल स इति एषाम् उच्चारणस्थानम् भवति दन्ताः। अत्र दन्ताः इत्यस्य दन्तमूलम् इति अर्थः ग्राह्यः। अत्र ऌ इत्यनेन तस्य १२ भेदाः बोद्ध्याः।

५) उ पु (पवर्गः - प फ ब भ म) उपध्मानीयः इति एषाम् उच्चारणस्थानम् भवति ओष्ठौ। अत्र उ इत्यनेन तस्य १८ भेदाः बोद्ध्याः।

६) ञ म ङ ण न इति एषाम् उच्चारणस्थानम् भवति नासिका अपि। अर्थात् ञकारस्य तु उच्चारणस्थानं तालु इति उक्तमेव। परन्तु न केवलं तालु इति अपितु नासिका अपि। अतः ञकारस्य उच्चारणस्थानम् तालु नासिका च। मकारस्य उच्चारणस्थानम् ओष्ठौ नासिका च। ङकारस्य उच्चारणस्थानम् कण्ठः नासिका च। णकारस्य उच्चारणस्थानम् मूर्धा नासिका च। नकारस्य उच्चारणस्थानम् दन्ताः नासिका च।

७) ए ऐ इति इति अनयोः उच्चारणस्थानम् भवति कण्ठतालु। अत्र ए ऐ इत्याभ्यां तयोः प्रत्येकं १२ भेदाः बोद्ध्याः।

८) ओ औ इति अनयोः उच्चारणस्थानम् भवति कण्ठोष्ठम्। अत्र ओ औ इत्याभ्यां तयोः प्रत्येकं १२ भेदाः बोद्ध्याः।

९) व इत्यस्य उच्चारणस्थानम् भवति दन्तोष्ठम्।

१०) जिह्वामूलीयस्य उच्चारणस्थानं भवति जिह्वामूलम्।

११) अनुस्वारस्य उच्चारणस्थानं भवति नासिका।

उपरि प्रयुक्तानां केषाञ्चित् शब्दानाम् अर्थाः -

**विसर्जनीयः** - विसर्जनीयशब्दः विसर्गपर्यायः। विसर्गस्य प्रकटनाय स्वरवर्णात् परम् '**:**' इत्थम् बिन्दुद्वयम् दीयते लेखनकाले। विसर्गः स्वरात् परमेव भवति। पूर्वस्वरस्य प्रभावः विसर्गस्य उच्चारणे भवति। तदत्र प्रदर्श्यते।



| क्रमः | स्थितिः | उच्चारणम् |
|---|---|---|
| १ | अः / रामः | प्रायः ह इव |
| २ | आः / रामाः | प्रायः हा इव |
| ३ | इः / हरिः | प्रायः हि इव |
| ४ | उः / भानुः | प्रायः हु इव |
| ५ | एः / हरेः | प्रायः हे इव |
| ६ | ऐः / देवैः | प्रायः हि इव |
| ७ | ओः / भानोः | प्रायः हो इव |
| ८ | औः / गौः | प्रायः हु इव |

**उपध्मानीयः** - पकारात् पूर्वं फकारात् पूर्वं वा यदि विसर्गः अस्ति तर्हि तस्य स्थाने अर्धविसर्गसदृशः लिख्यते उच्चार्यते च। तदा तस्य नाम उपध्मानीयः भवति। उदा. - रामः पश्यति - राम⁐पश्यति। वृक्षः फलति - वृक्ष⁐फलति। अत्र ⁐ इति उपध्मानीयः।

**जिह्वामूलीयः** - ककारात् पूर्वं खकारात् पूर्वं वा यदि विसर्गः अस्ति तर्हि तस्य स्थाने अर्धविसर्गसदृशः लिख्यते उच्चार्यते च। तदा तस्य नाम जिह्वामूलीयः भवति। उदा. - रामः कथयति - राम⁐कथयति। रामः खादति - राम⁐खादति। अत्र ⁐ इति जिह्वामूलीयः।

**अनुस्वारः** - स्वरात् परं व्यञ्जने परे सति स्वरे बिन्दुः यदि लिखितः स्यात् सः अनुस्वारः कथ्यते। उदा. - रामं पश्यति। अत्र मकारोत्तराकारात् परः विद्यमानः बिन्दुः अनुस्वारः अस्ति।

**प्रयत्नः**

कस्य वर्णस्य कः प्रयत्नः इति प्रश्नः उदेति। तदेवात्रालोच्यते। वैयाकरणसिद्धान्तकौमुदी इति ग्रन्थतः अत्र स भागः किञ्चित् परिवर्तनं कृत्वा उपस्थाप्यते।

**यत्नो द्विधा। आभ्यन्तरो बाह्यश्च। आद्यश्चतुर्धा। स्पृष्टेषत्स्पृष्टविवृतसंवृतभेदात्। तत्र स्पृष्टं प्रयतनं स्पर्शानाम्। ईषत्स्पृष्टम् अन्तःस्थानाम्। विवृतम् ऊष्मणां स्वराणां च। ह्रस्वस्य अवर्णस्य प्रयोगे संवृतम्। प्रक्रियादशायां तु विवृतमेव।**

**बाह्ययत्नस्त्वेकाकादशधा। विवारः संवारः श्वासो नादो घोषोऽघोषोऽल्पप्राणो महाप्राण उदात्त अनुदात्तः स्वरितश्चेति।**

**वर्गाणां प्रथमद्वितीयाः खयः जिह्वामूलीयः उपध्मानीयः विसर्गः शषसाः इति एषां विवारः श्वासः अघोषः च। अन्येषां तु संवारः नादः घोषः च। वर्गाणां प्रथमतृतीयपञ्चमाः यरलवाः च अल्पप्राणाः। अन्ये महाप्राणाः।**



**अर्थः -**

सूत्रे वस्तुतः प्रयत्नः इति शब्दः अस्ति। परन्तु प्रसङ्गात् ततोऽपि अतिरिक्तः विषयः आलोच्यते अत्र।

आभ्यन्तरः बाह्यः च इति यत्नस्य प्रकारद्वयम् अस्ति।

आभ्यन्तरः यत्नः एव प्रयत्नः इत्यपि कथ्यते। स च चतुर्विधः - स्पृष्टः ईषत्-स्पृष्टः विवृतः संवृतः इति।

बाह्ययत्नस्य एकादश भेदाः सन्ति। ते हि - विवारः संवारः श्वासः नादः घोषः अघोषः अल्पप्राणः महाप्राणः उदात्तः अनुदात्तः स्वरितः इति।

अत्र प्रश्नः उदेति यत् के स्पर्शादयः इति।

**वर्णोच्चारणप्रक्रिया -** नाभिप्रदेशात् प्रयत्नेन प्रेरितः प्राणः नाम वायुः ऊर्ध्वम् गच्छति। तदा जिह्वायाः अग्रम् उपाग्रम् मध्यम् मूलं च मुखे विभिन्नेषु स्थानेषु वायुम् विधारयन्ति, (अग्रभागः वायुं विधारयति इति।) वायोः मार्गावरोधं करोतीत्यर्थः। एवं विधार्यमाणः वायुः मुखे तत्तत् स्थानम् अभिहन्ति। तस्मिन् स्थाने आघातं करोति इत्यर्थः। ततः स्थानाभिघाताद् वर्णः उत्पद्यते। अर्थात् वर्णाभिव्यञ्जकध्वनिः उत्पद्यते। मुखस्य यस्मिन् स्थाने वायोः अभिघातः भवति तस्मिन् स्थाने वर्णध्वनिः उत्पद्यते। तत् स्थानमेव तस्य वर्णस्य उच्चारणस्थानम् कथ्यते। उदा. - यथा जिह्वायाः मूलम् कण्ठे वायुं विधारयति। स वायुः कण्ठम् अभिहन्ति। ततः स्थानाभिघातद् अ इति वर्णध्वनिः उत्पद्यते। अतः अकारस्य उच्चारणस्थानं कण्ठः इति।

**स्पर्शाः -** यदा जिह्वायाः अग्रम् उपाग्रम् मध्यम् मूलं वा मुखस्य कस्मिन्नपि स्थाने सम्यक् स्पर्शं करोति। तदा ये वर्णाः उत्पद्यन्ते ते स्पर्शाः कथ्यन्ते। वर्णमालायाम् प्रदर्शितेषु ककाराद् आरभ्य मकारपर्यन्तं २५ वर्णाः स्पर्शाः भवन्ति। अतः उच्यते यत् **कादयो मावसानाः स्पर्शाः** इति। ञय्-प्रत्याहारस्थाः स्पर्शाः भवन्ति। एतेषाम् आभ्यन्तप्रयत्नः **स्पृष्टः** भवति।

**अन्तःस्थाः -** यदा जिह्वायाः अग्रोपाग्रमध्यमूलानाम् ईषत् स्पर्शः भवति। तदा ये वर्णाः उत्पद्यन्ते ते अन्तःस्थाः इति कथ्यन्ते। यण्-प्रत्याहारस्थाः अर्थात् य व र ल इति एते ४ अन्तःस्थाः कथ्यन्ते। एतेषाम् आभ्यन्तरप्रयत्नः **ईषत्-स्पृष्टः** भवति।

**ऊष्मवर्णाः -** यदा जिह्वा दूरेण स्पृशति तदा सर्वे स्वराः ऊष्माणः च वर्णाः उत्पद्यन्ते। ऊष्मवर्णाः शल्-प्रत्याहारस्थाः श ष स ह इति चत्वारः। स्वराः अच्-प्रत्याहारस्थाः। एवम् अचाम् शलाम् च आभ्यन्तरप्रयत्नः **विवृतः** भवति। यद्यपि ऊष्माणः स्वराः च समानस्थानात् समानेन च आभ्यन्तरप्रयन्तेन उत्पद्यन्ते तथापि स्वयं राजन्ते इति स्वराः सन्ति, अर्थात् तेषाम् उच्चारणे अन्यस्य कस्यापि वर्णस्य साहाय्यं नावश्यकम्। ऊष्मणां ऊष्मत्वे बाह्ययत्नः कारणं भवति। अतः स्वरेभ्यः ऊष्मणां भेदः बाह्ययत्नवशादिति।



यदा जिह्वा सामीप्येन स्पृशति तदा ह्रस्वः अवर्णः उत्पद्यते। अस्य आभ्यन्तरप्रयत्नः **संवृतः** भवति। ह्रस्वस्य अवर्णस्य लोके व्यवहारकाले तु आभ्यन्तरप्रयत्नः संवृतः एव भवति। परन्तु यदा रूपसिद्धिप्रक्रिया भवति तदा तत्र अस्य **विवृतः** आभ्यन्तरप्रयत्नः मन्तव्यः प्रक्रियासौकर्याय।

वर्णस्य उत्पत्तिकाले एव स्पर्शादिकं भवति। अतः आभ्यन्तरः प्रयत्नः इति कथ्यते।

**बाह्ययत्नः**

नाभिप्रदेशाद् ऊर्ध्वम् गच्छन् वायुः मूर्ध्नि प्रतिहतः भवति। ततः स वायुः निवृत्तः भवति। निवृत्तः स कोष्ठम् अभिहन्ति। वायुनलिकायां कण्ठमणेः अधोभागः कोष्ठम् कथ्यते यतः वायुः उपरि प्रेरितो भवति।

अभिहननेन यदा गलबिलं विवृतम् भवति। तेन **विवारः** नाम वर्णधर्मः उपजायते। यदा गलबिलं विवृतं भवति तदा तस्मिन् अव्यक्तः शब्दः जायते। स शब्दः **श्वासः** इति कथ्यते। यदा श्वासः अनुप्रदीयते तदा श्वासध्वनिसङ्गाद् **अघोषः** जायते।

अभिहननेन यदा गलबिलं संवृतम् भवति। तदा **संवारः** नाम वर्णधर्मः उपजायते। संवृते गलबिले तस्मिन् अव्यक्तः शब्दः जायते। स शब्दः **नादः** इति कथ्यते। यथा घण्डवादनेन किञ्चित् कालं ध्वनिः वर्तते क्रमशः लघुः च भवति। अयं ध्वनिः नादः उच्यते। तथा अयं नादः बोद्धव्यः। यदा नादः अनुप्रदीयते तदा नादध्वनिसङ्गाद् **घोषः** जायते। यथा पर्वतेषु ध्वनिः क्रियते चेत् तस्य प्रतिध्वनिः भवति। तद्वत् घोषः इत्यस्य अर्थः प्रतिध्वनिः इति।

श्वासनादौ अनुप्रदानम् इति अपि कथ्यते।

यदा महान् वायुः व्यवह्रियते तदा **महाप्राणः** वर्णः उत्पद्यते। यदा अल्पः वायुः व्यवह्रियते तदा **अल्पप्राणः** वर्णः उत्पद्यते।

**उदात्तः अनुदात्तः स्वरितः** इति त्रयः पूर्वमेव उपवर्णिताः।

खय् शर् जिह्वामूलीयः उपध्मानीयः विसर्गः इत्येषाम् बाह्ययत्नः विवारः श्वासः अघोषः च। हश् अनुस्वारः च इति एतेषाम् बाह्ययत्नः संवारः नादः घोषः च। चय् जश् यम् च अल्पप्राणाः। झष् शल् ख फ छ ठ थ इत्येतेषाम् महाप्राणः। अचाम् बाह्ययत्नः उदात्तः अनुदात्तः स्वरितः च। बाह्ययत्नस्य उपयोगः आन्तरतम्यपरीक्षायां भवति। तस्य उदाहरणानि प्रक्रिया च प्रसङ्गे वक्ष्यन्ते।

**एकः वर्णः अपरस्य सर्वणः कथं भवति।**

**चकारस्य जकारेण सावर्ण्यम् विचार्यते।**

तुल्यास्यप्रयत्नं सवर्णम् इति सवर्णसंज्ञाविधायकं सूत्रम्। ययोः वर्णयोः मुखे उच्चारणस्थानम् आभ्यन्तरप्रयत्नः च इति एतद्द्वयं तुल्यमस्ति चेत् तयोः द्वयोः वर्णयोः मिथः सवर्णसंज्ञा भवति। इचुयशानां तालु इति वचनात् चकारस्य जकारस्य च उच्चारणस्थानं तालु। स्पृष्टं प्रयतनं स्पर्शानाम् इति वचनात् चकारस्य जकारस्य च आभ्यन्तरप्रयत्नः स्पृष्टः। अतः द्वयोः वर्णयोः उच्चारणस्थानम्



आभ्यन्तरप्रयत्नः च तुल्यौ। अत एव चकारः जकारस्य सवर्णः भवति। जकारः च चकारस्य सवर्णः भवति। अर्थात् चकारजकारयोः मिथः सावर्ण्यं भवति।

**सावर्ण्यविचारकाले नासिकायाः गणना भवति न वा -** पकारस्य उच्चारणस्थानं ओष्ठौ। मकारस्य उच्चारणस्थानम् ओष्ठौ नासिका च। द्वयोः आभ्यन्तरप्रयत्नः स्पृष्टः। अत्र विप्रतिपत्तिः यत् पकारः मकारस्य सवर्णः न वा। कुतः। उच्चारणस्थानं द्वयोः समानं नास्ति। मकारस्य नासिका इति अधिकम् अस्ति। तत्रोच्यते यत् सावर्ण्यनिर्णयकाले आस्यम् अर्थात् मुखे विद्यमानम् एव उच्चारणस्थानं ग्राह्यम्। मुखाद् बहिः विद्यमानं स्थानं न गण्यते। नासिका तु मुखे नास्ति। तस्मात् यद्यपि मकारस्य नासिका इति उच्चारणस्थानम् अस्ति। तथापि तस्य गणना अत्र न क्रियते। अतः पकारमकारयोः सावर्ण्यं भवति। अतः उच्यते - आस्यभवयावत्स्थानसाम्यं सावर्ण्यप्रयोजकमिति।

**ऋकारऌकारयोः सवर्णविधिः (वार्तिकम्)**

होतृऌकारः इति स्थले होतॄकारः इति सवर्णदीर्घः सन्धिः इष्टः। किन्तु ऋकारः ऌकारस्य सवर्णः नास्ति। कुतो नास्ति सवर्णः। ऋकारस्य उच्चारणस्थानं मूर्धा। ऌकारस्य उच्चारणस्थानं दन्ताः। द्वयोः उच्चारणस्थानसाम्यं नास्ति। अतः सावर्ण्यं न सम्भवति। अतः सवर्णदीर्घसन्धिः तयोः भवितुम् नार्हति। इष्टश्च। अतः वार्तिककारः मुनिः कात्यायनः वार्तिकं रचितवान् - **(वा.) ऋकारऌकारयोः सवर्णविधिः** इति। अत एतद्वार्तिकबलात् ऋकारः ऌकारः च परस्परं सवर्णौ भवतः। इदमेव वार्तिकं वैयाकरणसिद्धान्तकौमुद्यां भट्टोजिदीक्षितवर्येण किञ्चित् परिवर्तनं कृत्वा लिखितम् - **ऋऌवर्णयोः मिथः सावर्ण्यं वाच्यम्** इति।

**अनिष्टं सावर्ण्यम् तस्य वारणं च।**

वर्णानाम् अनिष्टम् सावर्ण्यम् कथं प्राप्तम्। तस्य निवारणं च कथम् इति अधः आलोच्यते।

**अनिष्टं सावर्ण्यम् -** अवर्णस्य उच्चारणस्थानं कण्ठः। हकारस्यापि कण्ठः। स्वराणाम् ऊष्मणां च आभ्यन्तप्रयत्नः विवृतः। अतः अकारहकारयोः सावर्ण्यं प्राप्तम्।

इकारस्य स्थानं तालु। शकारस्यापि तालु। स्वराणाम् ऊष्मणां च आभ्यन्तप्रयत्नः विवृतः। अतः इकारशकारयोः सावर्ण्यं प्राप्तम्।

ऋवर्णस्य उच्चारणस्थानं मूर्धा। षकारस्यापि मूर्धा। स्वराणाम् ऊष्मणां च आभ्यन्तप्रयत्नः विवृतः। अतः ऋकारषकारयोः सावर्ण्यं प्राप्तम्।

**वारणम् -** एवं सति बहुत्र सन्धिप्रदेशेषु अनिष्टं रूपं निष्पद्येत। अतः एतेषां सावर्ण्यस्य वारणाय पाणिनिना **नाज्झलौ** (१.१.१०) इति सूत्रं रचितम्। (न आ-अच्-हलौ) अस्य सूत्रस्य तात्पर्यार्थः भवति - अच् हल् परस्परं न सवर्णौ। अर्थात् स्वरस्य व्यञ्जनेन सह सावर्ण्यं न भवति इति।

**ह्रस्वस्य अकारस्य आभ्यन्तरप्रयत्नः -** अइउण् इति माहेश्वरसूत्रे अकारः विवृतः। साधुपदस्य निर्माणम् अष्टाध्यायीसूत्राणि कुर्वन्ति। अष्टाध्याय्याम् अन्तिमं सूत्रम् **अ अ (८.४.६८) इति**।



तस्य अर्थः - प्रक्रियादशायाम् यः विवृतः अकारः स लोके व्यवहाराय संवृतः विधीयते इति। अस्य सूत्रस्य अष्टाध्याय्याम् प्रभावः नास्ति। यदा रूपं निष्पद्यते तदा तत्र यदि ह्रस्वः अकारः स्यात् तर्हि प्रक्रियान्ते सः संवृतः क्रियते।

यद्यपि एकारस्य ऐकारेण प्रकृतसूत्रेण सावर्ण्यं प्राप्नोति। तथापि एकारः ऐकारस्य सवर्णः इति न स्वीक्रियते।

यद्यपि ओकारस्य औकारेण प्रकृतसूत्रेण सावर्ण्यं प्राप्नोति। तथापि ओकारः औकारस्य सवर्णः इति न स्वीक्रियते।



## पाठगतप्रश्नाः-१

१. अनुनासिकसंज्ञाविधायकं सूत्रं लिखित्वा अर्थं लिखत।

२. अकारस्य कति भेदाः सन्ति।

३. सवर्णसंज्ञाविधायकं सूत्रं लिखित्वा अर्थं लिखत।

४. पकारस्य उच्चारणस्थानं किम्।

५. चवर्गस्य उच्चारणस्थानं किम्।

६. कः उपध्मानीयः।

७. आभ्यन्तरप्रयत्नस्य भेदान् लिखत।

८. हकारस्य बाह्ययत्नः कः।

९. नासिकया सह मुखेन उच्चारितस्य वर्णस्य का संज्ञा।

१) अननुनासिकः २) मूर्धन्यः ३) अनुनासिकः ४) इत्

१०. कस्य दीर्घः प्रकारः नास्ति।

१) ऋ २) इ ३) ऌ ४) ऐ

११. अयमूष्मा वर्णः।

१) ढ २) भ ३) ख ४) स

१२. तकारस्य बाह्ययत्नः कः।

१) घोषः २) नादः ३) श्वासः ४) महाप्राणः

१३. ऋकारस्य सवर्णः कः।

१) र २) ट ३) इ ४) ऌ

१४. अनुप्रदानम् किम्।

१) घोषः २) नादः ३) विवारः ४) महाप्राणः



## [ ३.२] अणुँदित् सवर्णस्य चाप्रत्ययः॥ (१.१.६९)

**सूत्रार्थः** - उँदित् च अप्रत्ययः अण् च सवर्णस्य स्वस्य च संज्ञा भवति।

**सूत्रव्याख्या** - संज्ञासूत्रमिदम्। अस्मिन् पञ्च पदानि सन्ति। अण् उँदित् सवर्णस्य च अप्रत्ययः इति सूत्रगतपदच्छेदः। अण् उँदित् अप्रत्ययः इति त्रीणि प्रथमान्तानि पदानि। सवर्णस्य इति षष्ठ्येकवचनान्तम्। च इति अव्ययपदम्। स्वं रूपं शब्दस्याशब्दसंज्ञा इति सूत्रात् स्वम् इति पदम् अनुवर्तते, षष्ठ्यन्तत्वेन परिणमते च।

प्रकृते सूत्रे अण् इति प्रत्याहारः परेण णकारेण ग्राह्यः। तस्मिन् अ इ उ ऋ ऌ ए ओ ऐ औ ह य व र ल इति वर्णाः सन्ति।

अप्रत्ययः इति अण् इत्यस्य विशेषणं न तु उँदित् इत्यस्य अपि। उँदित् अप्रत्ययः अण् च सवर्णस्य स्वस्य इति पदयोजना। संज्ञाप्रकरणे इदं सूत्रं पठितम्। अतः संज्ञा इति पदं लभ्यते। तदा सूत्रस्य अर्थः भवति -- उँदित् च अप्रत्ययः अण् च सवर्णस्य स्वस्य च संज्ञा भवतीति।

प्रत्ययपदस्य कः अर्थः। उँदित्-पदस्य कः अर्थः। अण् इति केन णकारेण प्रत्याहारः इति प्रश्नान् अधस्तात् आलोचयाम।

**प्रत्ययः** (३.१.१) इति एकं सूत्रम्। तत्र प्रत्ययशब्दस्य अर्थः भवति यत् तृतीये चतुर्थे पञ्चमे च अध्याये ये ये विधीयन्ते तेषाम् संज्ञा हि प्रत्ययः इति। सर्वत्र प्रत्ययशब्दस्य अयमेव अर्थः ग्राह्यः। परन्तु अस्मिन् सूत्रे प्रत्ययशब्दस्य सः अर्थः न ग्राह्यः। अत्र तु प्रतीयते विधीयते इति प्रत्ययः। अर्थात् अष्टाध्याय्याम् यस्य विधानं भवति स विधीयमानः प्रत्ययः इति। न प्रत्ययः अप्रत्ययः इति नञ्-तत्पुरुषसमासः। एवञ्च अप्रत्यय इति शब्दस्य अविधीयमानः इत्यर्थः।

पाणिनिमुनिः क ख ग घ ङ इति कवर्गस्य प्रकटनाय कुँ इति पदं प्रयुङ्क्ते। एवमेव अन्येषां वर्गाणां प्रकटनाय चुँ टुँ तुँ पुँ इति व्यवहरति। तत्र उँकारः अनुनासिकः अस्ति। अतः स इत्-संज्ञकः भवति। उँकारः एव उँत्। उँत् इत् यस्य स उँदित्। उँदित् इत्यनेन कुँ चुँ टुँ तुँ पुँ एते अर्थात् ञय्-प्रत्याहारस्थाः सर्वे वर्गीयाः वर्णाः बोद्धव्याः।

अण् इति प्रत्याहारः। माहेश्वरसूत्रेषु अइउण् इति लण् इति सूत्रद्वये णकारः इत्-संज्ञकः। द्वाभ्याम् सह अकारः अण् इति प्रत्याहारं निर्माति। तत्र अण् इति प्रत्याहारः कदा पूर्वेण णकारेण कदा वा परेण णकारेण इति प्रश्नः। तदुत्तरार्थम् अत्र एका कारिका -

**परेणैवेण्-ग्रहाः सर्वे पूर्वेणैवाण्-ग्रहा मताः।**
**ऋतेऽणुदित्सवर्णस्येत्येतदेकं परेण तु।।**

**अर्थः** - इण् प्रत्याहारः सदा परेण णकारेण भवति। अण् प्रत्याहारः सदा पूर्वेण णकारेण भवति। केवलम् अणुदित्सवर्णस्य चाप्रत्ययः इति सूत्रे अण् प्रत्याहारः परेण णकारेण भवति। अणुदित्-सूत्रे नियमस्य व्यतिक्रमः अस्ति।

कस्य वर्णस्य के संज्ञिनः इति निर्णयः कर्तव्यः।



एकम् उदाहरणम् आलोचयाम।

इको यणचि इति सन्धिसूत्रम्। अस्य सूत्रस्य अर्थः भवति - इकः स्थाने यण् स्यात् अचि। सरलार्थः - यदि अचः पूर्वम् इक् अस्ति तर्हि इक्-स्थाने यण् कर्तव्यः। पूर्वतः स्थितः इक् अच् च अस्ति। नूतनतया तयोः विधानम् आनयनं योगः वा न भवति। अतः इक् अच् च अविधीयमानः अस्ति, अप्रत्ययः अस्ति। यण् तु पूर्वं तत्स्थाने नास्ति। नूतनतया आनीयते, प्रयुज्यते, विधीयते। अतः एव यण् विधीयमानः अस्ति। पूर्वतः विद्यमानः अविधीयमानः अप्रत्ययः भवति। नूतनतया यस्य प्रयोगः भवति स विधीयमानः प्रत्ययः भवति। एवञ्च इको यणचि इति सूत्रे इक् अच् च अविधीयमानौ स्तः। यण् च विधीयमानः अस्ति।

तस्य उदाहरणम् -

सुधी उपास्यः इति। अस्मिन् उदारहणे पकारात् पूर्वम् यः उकारः सः अच् अस्ति। स पूर्वतः अस्ति। अतः उकारः सूत्रस्थेन अच्-पदेन बोध्यते। अच् अविधीयमानः अप्रत्ययः अस्ति। धकारात् परम् यः ईकारः सः इक् अस्ति न वा इति आलोच्यते।

(ईकारः पूर्वतः विद्यते। अतः सः अविधीयमानः अप्रत्ययः अस्ति।)

अत्र इक् इति संज्ञा। संज्ञिनः के। संज्ञिनः भवन्ति - इ उ ऋ ऌ इति माहेश्वरसूत्रेषु उल्लिखिताः वर्णाः। माहेश्वरसूत्राणि वर्णसमाम्नायः इति उच्यते। तस्मिन् उल्लिखिताः वर्णाः वार्णसमाम्नायिकाः इति कथ्यन्ते। एतेषु दीर्घः ईकारः नास्ति। तस्मात् दीर्घः ईकारः इक्-पदेन न बोध्यते। सूत्रं तु वदति यत् इक्-स्थाने यण् भवतु इति। अतः एव इको यणचि इति सूत्रेण सुधी उपास्यः इति उदाहरणे दीर्घस्य ईकारस्य स्थाने यण् न कर्तुम् शक्यते। तदपि शक्यते यदि इक् इति अस्मिन् दीर्घाणामपि ग्रहणं स्यात्। तथा ग्रहणं पाणिनिमुनिसम्मतिं विना न भवति। अतः अणुदित्सवर्णस्य चाप्रत्ययः इति सूत्रं प्रणीतं मुनिना। इदं सूत्रम् अण् इत्यनेन दीर्घाणामपि ग्रहणं कारयति। अत एव इदं सूत्रं ग्रहणकशास्त्रम् इति व्याकरणसम्प्रदाये प्रसिद्धम्। गृह्णन्ति अकारादयः स्वसवर्णान् येन तद् ग्रहणकम्। एवं इक्-प्रत्याहारः ह्रस्वानां दीर्घाणां प्लुतानां च बोधको भवति। तेन सुधी उपास्यः इत्यादिस्थले ईकारस्य यण् भवति। प्रक्रियया सुध्युपास्यः इति रूपं च सिद्ध्यति।

अण् इति संज्ञा। संज्ञिनः सन्ति - अ इ उ ऋ ऌ ए ओ ऐ औ ह य व र ल इति।

अणुदित् सवर्णस्य चाप्रत्ययः इति प्रकृतसूत्रेण अ इ इत्यादयः अपि संज्ञा इति उक्तम्। के तर्हि संज्ञिनः। स्वस्य सवर्णाः संज्ञिनः। अकारस्य के सवर्णाः। येषाम् उच्चारणस्थानम् आभ्यन्तरप्रयत्नः च अकारेण तुल्यः ते वर्णाः। के ते वर्णाः। ते वर्णाः भवन्ति अकारस्य अष्टादश भेदाः। ते मुखनासिकावचनोनुनासिकः इति सूत्रे सविस्तरं वर्णिताः।

अकारः संज्ञा। तत्संज्ञिनः - अकारस्य अष्टादश भेदाः।

इकारः संज्ञा। तत्संज्ञिनः - इकारस्य अष्टादश भेदाः।

उकारः संज्ञा। तत्संज्ञिनः - उकारस्य अष्टादश भेदाः।



ऋकारः संज्ञा। तत्संज्ञिनः - ऋकारस्य अष्टादश भेदाः। अपिच ऌकारस्य द्वादश भेदाः। कुतः एवम्। यतो हि ऋऌवर्णयोः सावर्ण्यम् अस्ति।

ऌकारः संज्ञा। तत्संज्ञिनः - ऌकारस्य द्वादश भेदाः। अपिच ऋकारस्य अष्टादश भेदाः। कुतः एवम्। यतो हि ऋऌवर्णयोः सावर्ण्यम् अस्ति।

इदमत्रावदेयम् - ह्रस्वस्य ऌकारस्य षट् भेदाः सन्ति। प्लुतस्य ऌ३कारस्य षड् भेदाः सन्ति। दीर्घः ऌकारः संस्कृते नास्ति। अत एव ऌकारस्य द्वादश एव भेदाः इति उक्तम्।

एकारः संज्ञा। तत्संज्ञिनः - एकारस्य द्वादश भेदाः।

ओकारः संज्ञा। तत्संज्ञिनः - ओकारस्य द्वादश भेदाः।

ऐकारः संज्ञा। तत्संज्ञिनः - ऐकारस्य द्वादश भेदाः।

औकारः संज्ञा। तत्संज्ञिनः - औकारस्य द्वादश भेदाः।

एकारस्य ओकारस्य ऐकारस्य औकारस्य च ह्रस्वः प्रकारः नास्ति। तस्मात् केवलं द्वादश एव प्रकाराः प्रत्येकं सन्ति।

ए ओ ऐ औ इति वस्तुतः द्वयोः स्वरयोः मेलनेन उत्पन्नाः स्वराः। अत एव तेषां ह्रस्वाः न भवन्ति। ननु कथं मेलनम् जातम्। तद्यथा-

अ+इ=ए,  अ+उ=ओ,  अ+ए=ऐ,  अ+ओ=औ

य व ल इति त्रयाणाम् अनुनासिकः अननुनासिकः च प्रकारः वर्तते। यथा- य् यँ, व् वँ, लँ लँ इति। अत एव य व ल इति द्वयोः द्वयोः संज्ञा।

कुँ इति संज्ञा। तत्संज्ञिनः - क ख ग घ ङ इति।

चुँ इति संज्ञा। तत्संज्ञिनः - च छ ज झ ञ इति।

टुँ इति संज्ञा। तत्संज्ञिनः - ट ठ ड ढ ण इति।

तुँ इति संज्ञा। तत्संज्ञिनः - त थ द ध न इति।

पुँ इति संज्ञा। तत्संज्ञिनः - प फ ब भ म इति।

## [ ३.३]  तपरस्तत्कालस्य॥ (१.१.७०)

**सूत्रार्थः** - तात् परः अण्, तः परः यस्मात् सः अण्, स्वस्य उच्चारणकालः इव उच्चारणकालः यस्य सवर्णस्य, तस्य संज्ञा भवति। स्वस्य च संज्ञा भवति।

**सूत्रव्याख्या** - संज्ञासूत्रमिदम्। सूत्रेऽस्मिन् द्वे पदे स्तः। तपरः तत्कालस्य इति सूत्रगतपदच्छेदः। तपरः इति पदं द्विः आवर्तते। अर्थात् वारद्वयं गृह्यते। तेन तपरः तपरः तत्कालस्य इति स्थितिः भवति। तयोः एकस्य तपरशब्दस्य बहुव्रीहिसमासः गृह्यते। तः परः यस्मात् सः तपरः इति। अपरस्य तपरशब्दस्य पञ्चमीतत्पुरुषः समासः गृह्यते। तात् परः तपरः इति। तत्कालस्य इत्यत्र



बहुव्रीहिसमासः। तस्य काल इव कालो यस्य स तत्काल इति। अर्थस्तु एवम् - तस्य तपरत्वेन उच्चार्यमाणस्य काल इव कालो यस्य स तत्कालः इति। तस्य तत्कालस्य इति। अणुदित् सवर्णस्य चाप्रत्ययः इति सूत्रात् अण् इति पदमनुवर्तते। अण् इत्यनेन वार्णसमाम्नायिकाः वर्णाः एव गृह्यन्ते। स्वं रूपं शब्दस्याशब्दसंज्ञा इति सूत्रात् स्वं रूपम् इति पदद्वयमनुवर्तते। तयोः षष्ठ्यन्ततया विभक्तिविपरणामः भवति। समेषां पदानां योजनया सूत्रस्यार्थः भवति - तात् परः अण् , तः परः यस्मात् सः अण् , स्वस्य उच्चारणकालः इव उच्चारणकालः यस्य सवर्णस्य, तस्य संज्ञा भवति। स्वस्य च संज्ञा भवति।

**उदाहरणे सूत्रार्थसमन्वयः** - अणुदित् सवर्णस्य चाप्रत्ययः इति ग्रहणकशास्त्रबलात् अकारः स्वस्य १८ सवर्णानां च संज्ञा बोधको वा भवति। यदि क्वचित् अत् इति पदम् आयाति तदा तत्रापि अकारस्य अष्टादशानां सवर्णानां बोधः प्राप्तः। तदा प्रकृतसूत्रम् प्रवर्तते। अकारात् परम् तकारः योजितः चेत् तपरस्तत्कालस्य इति प्रकृतसूत्रेण अस्य अकारस्य यावान् उच्चारणकालः अस्ति अर्थात् एकमात्रिकः, तावान् उच्चारणकालः यस्य स्वसवर्णस्य अस्ति तस्य संज्ञा भवति। तावान् उच्चारणकालः ह्रस्वानां षण्णाम् अकाराणाम् अस्ति। अत् इति तपरः अकारः अस्ति इति अतः षण्णामेव ह्रस्वानां बोधः भवति न तु अष्टादशानामपि भेदानाम्।

अत् इत्यनेन एते बोद्धव्याः -

ह्रस्वः उदात्तः अनुनासिकः अकारः,

ह्रस्वः उदात्तः अननुनासिकः अकारः,

ह्रस्वः अनुदात्तः अनुनासिकः अकारः,

ह्रस्वः अनुदात्तः अननुनासिकः अकारः,

ह्रस्वः स्वरितः अनुनासिकः अकारः,

ह्रस्वः स्वरितः अननुनासिकः अकारः इति।

एवम् इत् उत् एत् ओत् ऐत् औत् इति अष्टसु तपरेषु अपि बोद्धव्यम्। प्रत्येकम् स्वस्य षण्णां भेदानां संज्ञाः भवन्ति। ऋत् ह्रस्वानाम् षण्णाम् ऋकाराणाम् , ह्रस्वानां षण्णाम् ऌकाराणां च संज्ञा भवति। ऌत् ह्रस्वानाम् षण्णाम् ऋकाराणाम् , ह्रस्वानां षण्णाम् ऌकाराणां च संज्ञा भवति। ऋऌवर्णयोः मिथः सावर्ण्यात्। तथापि क्वचित् ऌत् ऋकारस्य संज्ञा न भवति। यथा पुषादिद्युताद्यॢदितः इत्यादिस्थलेषु।



## पाठगतप्रश्नाः-२

१५. अण् स्वसवर्णस्य संज्ञा कदा भवति।

१६. उँदित् कः।

१७. विधीयमानः उँदित् सवर्णस्य संज्ञा भवति न वा।



१८. अणुदित् सवर्णस्य चाप्रत्ययः इति सूत्रे अण् केन णकारे सह।

१९. तपरः इत्यत्र द्विविधः समासः लेख्यः।

२०. उत् कतीनाम् संज्ञा।

२१. ईत् इति तपरकरणं चेत् तपरशब्दस्य कः विग्रहः बोध्यः।

२२. ग्रहणकशास्त्रेण कीदृशः अण् सवर्णं बोधयति।

१) विधीयमानः  २) अविधीयमानः  ३) आगमः  ४) आदेशः

२३. अणुदित्सवर्णस्य चाप्रत्ययः इति सूत्रे अप्रत्ययस्य केन सम्बन्धः।

१) अण्  २) उदित्  ३) अण् च उदित् च  ४) एषु कोऽपि न

२४. ऋकारः संज्ञा चेत् तत्संज्ञिनः कति।

१) १२  २) १८  ३) ३०  ४) ६

२५. ऋत् संज्ञा चेत् तत्संज्ञिनः कति।

१) ६  २) १८  ३) ३०  ४) १२

---

## [ ३.४]  स्वं रूपं शब्दस्याशब्दसंज्ञा॥ (१.१.६८)

**सूत्रार्थः** - अर्थविशिष्टः शब्दः संज्ञी, शब्दशास्त्रे या संज्ञा तां विना।

**सूत्रावतरणम्** - अग्नेर्ढक् इति एकं सूत्रम्। अस्य अर्थः - अग्नितः परं ढक् इति प्रत्ययः योजनीयः। अग्निः तु पदार्थः। ढक् प्रत्ययः तु शब्दः। कथम् वह्निम् आनीय ततः परं ढक् इति शब्दस्य योगः कर्तुं शक्यते। सूत्रे अग्निशब्दः उच्चारितः। अग्निपदार्थात् परं ढक् प्रत्ययः न योक्तुं शक्यः। अतः अग्निपदार्थं त्यक्त्वा अग्निशब्दात् परं ढक् प्रत्ययः प्रयोक्तुं शक्यते। अपि च अग्निशब्दस्य पर्यायाः वह्निः अनलः पावकः इत्यादयः सन्ति। तेभ्यः अपि ढक् प्रत्ययः प्रयोक्तुं शक्यते। एवं सति केवलम् अग्निशब्दात् उत अग्निवाचकेभ्यः वह्नि अनल इत्यादिभ्यः पर्यायशब्देभ्यः अपि ढक् प्रत्ययः प्रयोक्तव्यः इति प्रश्नः। तन्निर्णयाय इदम् सूत्रम् आनीतम्।

**सूत्रव्याख्या** - संज्ञासूत्रमिदम्। अस्मिन् सूत्रे चत्वारि पदानि सन्ति। स्वम् रूपम् शब्दस्य अशब्दसंज्ञा इति सूत्रगतपदच्छेदः। स्वम् इत्यस्य अर्थः अर्थः, वाच्यः, अभिधेयः इति। रूपम् इत्यस्य आनुपूर्वी अर्थः। 'अ-ग्-न्-इ' इति क्रमशः विद्यमानाः वर्णाः अग्निशब्दस्य आनुपूर्वी भवति। व्याकरणे अर्थस्य संस्कारः न भवति, शब्दस्य संस्कारः भवति। अतः व्याकरणे अर्थः गौणः। शब्दः प्रधानम्। अतः अत्र अर्थविशिष्टः शब्दः संज्ञी भवति। शब्दशास्त्रे संज्ञा शब्दसंज्ञा इति सप्तमीतत्पुरुषः समासः। सूत्रस्य अर्थः भवति - सूत्रे उपात्तः शब्दः संज्ञा, अर्थविशिष्टः शब्दः संज्ञी, अर्थात् आनुपूर्वी संज्ञिनी, शब्दशास्त्रे या संज्ञा तां विना। एवञ्च व्याकरणे शब्देन तस्य स्वरूपस्य बोधः भवति, अर्थस्य बोधः न ग्राह्यः, न वा पर्यायस्य। एवञ्च अग्नेर्ढक् इति सूत्रे अग्निशब्दः उपात्तः। अग्निशब्देन 'अ-ग्-न्-इ' इति आनुपूर्वी एव बोध्या। ततः एव ढक् प्रत्ययः योज्यः।



## [ ३.५] येन विधिस्तदन्तस्य॥ (१.१.७२)

**सूत्रार्थः** - विशेषणं तदन्तस्य संज्ञा भवति, स्वस्य च रूपस्य इति।

**सूत्रव्याख्या** - संज्ञासूत्रमिदम् पदत्रयात्मकम्। येन विधिः तदन्तस्य इति सूत्रगतपदच्छेदः। येन इति यत्-सर्वनाम्नः तृतीयैकवचनान्तम् पदम्। येन इत्यत्र करणे तृतीया। विधिः इति प्रथमान्तं पदम्। विधीयते इति विधिः, विधानक्रिया इत्यर्थः। तदन्तस्य इति षष्ठ्येकवचनान्तम् पदम्। सः अन्ते यस्य स तदन्तः इति बहुव्रीहिः समासः। स्वं रूपं शब्दस्याशब्दसंज्ञा इति सूत्रात् स्वं रूपम् इति प्रथमान्तं पदद्वयमनुवर्तते, षष्ठ्यन्ततया विपरिणमते च। करणं च क्रियां प्रति। अत्र तत्करणं विशेषणरूपेण गृह्यते। येन करणेन अर्थात् विशेषणेन पाणिनिः विधानं करोति तत् करणम् संज्ञा। कस्य। स्वस्य अपिच तत् विशेषणं यस्य अन्ते अस्ति तस्य संज्ञा। अतः सूत्रार्थो भवति - विशेषणं तदन्तस्य संज्ञा भवति स्वस्य च रूपस्य इति।

**उदाहरणम्** - अचो यत् इति एकम् सूत्रम्। तस्मात् पूर्वम् अधिकाररूपेण धातोः इति एकं पदम् पाणिनिमुनिः लिखितवान्। वस्तुतः धातोः परं यत् प्रत्ययः कर्तव्यः अस्ति। परन्तु येन सूत्रेण तत्कार्यं कर्तुम् इच्छति तस्मिन् सूत्रे साक्षात् अचः इति एकमेव पदं तत्कार्यार्थम् दत्तवान्। 'यत्' इति तु प्रत्ययः विधेयः अस्ति। अचः इति पदमाध्यमेन धातोः परं यत्-प्रत्ययं विदधाति पाणिनिः। अत एव अचः इति माध्यमं तस्य करणं भवति। तदेव विशेषणम् इति कथ्यते अत्र। तद्विशेषणं स्वस्य संज्ञा भवति। अपिच तद् यस्य अन्ते भवति तस्य संज्ञा भवति। यथा अचः इति स्वस्य संज्ञा भवति। अर्थात् यः धातुः केवलम् अच्-रूपः एव अस्ति ततः अपि यत्-प्रत्ययः भवति। यथा इ इति धातुः। तस्मात् यत्-प्रत्यययोगेन अयः इति रूपं निष्पद्यते। द्वितीयः अर्थस्तु - अच् यस्य अन्ते अस्ति तस्य धातोः अपि अच् संज्ञा भवति। यथा - चि इति धातुः। तस्य अन्ते अच् अस्ति। अतः अच् इति संज्ञा। चि इति अजन्तः धातुः संज्ञी। अत एव चि धातुतः यत्-प्रत्यययोगेन चयः इति रूपं निष्पद्यते।

लौकिकम् उदाहरणम् आलोचयामः। यदि यानम् आनय इति उक्त्वा यानचालकः प्रेष्यते तर्हि स कुत्र उपविश्य यानम् आनयति। स यानचालकस्य आसने उपविश्य यानम् आनयति।

तद्वत् अच्-शब्देन धातुतः प्रत्ययः योजनीयः इति उक्तम्। तदा अच्-शब्दः यस्य अन्ते अस्ति तादृशं धातुम् बोधयति।

एवं तदन्तस्य संज्ञाकरणमेव तदन्तविधिः इति प्रसिद्धम् व्याकरणे।

### इदम् अवधार्यम् एव -

### तदन्तविधिः

सूत्रे यानि पदानि सन्ति ततः अधिकानि पदानि सूत्रस्य अर्थे दृश्यन्ते। तत्र एतैः षड्भिः प्रकारैः पदानि लभ्यन्ते। १) सूत्रे साक्षात् उच्चारितानि, उपात्तानि, उल्लिखितानि, २) अधिकारेण लब्धानि, ३) अनुवृत्त्या लब्धानि, ४) परिभाषया उपस्थापितानि, ५) आक्षेपात् लब्धानि, ६) अध्याहृतानि।



सकलपदलाभानन्तरम् पदद्वयम् समानविभक्तिकम् अस्ति न वा इति द्रष्टव्यम्। अर्थात् द्वयोः पदयोः विभक्तिः समाना, एका एव अस्ति न वा इति द्रष्टव्यम्। सा विभक्तिः यदि सप्तमी अस्ति तर्हि तत्र तदादिविधिः भवति। तदादिविधिः अग्रे वक्ष्यते। सप्तमीं विना अन्यविभक्तिः यदि अस्ति तर्हि तयोः द्वयोः पदयोः मध्ये एकं विशेषणं भवति, अपरं च विशेष्यम्। विशेष्यविशेषणभावः अस्ति चेत् अभेदान्वयः सामान्यतः भवति। व्याकरणशास्त्रे तदन्तविधिः अपि भवति। तदन्तविधिः यदा भवति तदा - तथा विशेष्यम् ग्राह्यम् यस्य अन्ते विशेषणम् अस्ति, अर्थात् विशेषणं विशेष्यस्य अन्त्यः अवयवः अस्ति इति तादृशं विशेष्यम् बोध्यम्।

**उदाहरणम्** - यथा 'अचः धातोः यत्' इत्यत्र अचः इति विशेषणं धातोः इति विशेष्यम्। अत्र तथा धातुः ग्राह्यः यस्य अन्ते अच् अस्ति। अर्थात् अजन्तः धातुः बोद्धव्यः। चि जि भू इत्यादयः धातवः अजन्ताः सन्ति। ते अस्य विशेषणस्य संज्ञिनः, अर्थाः भवन्ति।

### तदादिविधिः

**यस्मिन्विधिस्तदादावल्ग्रहणे** इति काचित् परिभाषास्ति। तस्याः सरलार्थः अत्र दीयते।

सूत्रे सकलपदलाभानन्तरम् यदि पदद्वयं सप्तम्यन्तं स्यात्। अर्थात् द्वयोः पदयोः विभक्तिः सप्तमी स्यात्। तयोः मध्ये विशेषणपदस्य अर्थः केवलम् एकः अल् अर्थात् एकः वर्णः स्यात्। अर्थात् तयोः मध्ये एकम् पदम् अल्-बोधकं स्यात्। तर्हि तदादिविधिः भवति, तदन्तविधिः न भवति। सः अल् यस्य आदौ अर्थात् अद्यावयवः अस्ति तस्य ग्रहणं कर्तव्यम् इति तदादिविधिः।

**उदाहरणम्** - वान्तो यि प्रत्यये इति एकं सूत्रम्। वान्तः इति पदस्य तदादिविधौ उपयोगः नास्ति। अत्र यि इति 'य्'-वर्णस्य सप्तमी अस्ति। प्रत्यये इत्यपि सप्तमी अस्ति। पदद्वयम् सप्तम्यन्तम् अस्ति। यि इति विशेषणपदस्य अर्थः केवलम् एकः अल् अर्थात् एकः एव 'य्' इति वर्णः अस्ति। तत्राधुना तदादिविधिः भवति। अत एव यकारादिः प्रत्ययः अत्र ग्राह्यः। यवर्णः यस्य प्रत्ययस्य प्रथमः वर्णः अस्ति तादृशः प्रत्ययः बोद्धव्यः।



## पाठगतप्रश्नाः ३

२६. पदस्य विसर्जनीयस्य सः इति स्थिते तदन्तविधिना कः अर्थः लभ्यते।

२७. अतो दीर्घो यञि सार्वधातुके इति स्थिते तदादिविधिना कः अर्थः लभ्यते।

२८. तदन्तविधिः कदा भवति।

२९. तदादिविधिः कदा भवति।

३०. स्वं रूपं शब्दस्याशब्दसंज्ञा इति सूत्रे शब्दस्य रूपम् किम्।

१) अर्थः  २) आनुपूर्वी  ३) पर्यायशब्दाः  ४) एषु कोऽपि न

३१. सूत्रे किं तदन्तस्य संज्ञा भवति।

१) विशेष्यम्  २) विशेषणम्  ३) धातुः  ४) पदम्



३२. पदद्वयम् सप्तम्यन्तम् अस्ति, किञ्च तयोः एकम् अल्बोधकमस्ति चेत् किं भवति।

१) तदन्तविधिः  २) अव्यवहितपरस्य  ३) तस्य स्थाने ४) तदादिविधिः

३३. सूत्रे पदद्वयम् प्रथमान्तम् अस्ति, किञ्च तयोः एकम् विशेषणमस्ति तदा किं भवति।

१) तदन्तविधिः  २) विशेषणविधिः  ३) अनल्विधिः ४) तदादिविधिः



## पाठसारः

समासेन अस्य पाठस्य मुख्यविषयः अधस्ताद् उपन्यस्यते।

यदि कस्यचिद् वर्णस्य मुखे उच्चारणस्थानम् आभ्यन्तरप्रयत्नः च इति एतद् द्वयम् अपरेण वर्णेन तुल्यम् समानम् अस्ति तर्हि तौ परस्परम् सवर्णौ भवतः इति तुल्यास्यप्रयत्नं सवर्णम् इति सूत्रस्यार्थः। पञ्च उच्चारणस्थानानि सन्ति। बाह्यः आभ्यन्तरः इति यत्नः द्विविधः। अस्ति। बाह्यः एकादशधा, आभ्यन्तरः चतुर्धा अस्ति।

तुल्यास्यप्रयत्नं सवर्णम् इति सूत्रेण सवर्णसंज्ञा कृता। परन्तु कदा कश्चित् वर्णः स्वसवर्णस्य संज्ञा स्यादिति न स्पष्टम्। अतः अणुँदित् सवर्णस्य चाप्रत्ययः इति सूत्रमागतम्। यदा अण् अविधीयमानः अस्ति तदा एव स्वसवर्णस्य संज्ञा ग्राहको वा भवतीति सूत्रस्यास्याशयः। उँदित् विधीयमानः अपि स्वसवर्णान् ग्राहयति।

एकस्य अवर्णस्य अष्टादश (१८) प्रकाराः सन्ति। यदा केवलं ह्रस्वाः एव षड् प्रकाराः प्रकटनीयाः इति मनीषा अस्ति तदा ह्रस्वाद् अकारात् परम् एकः तकारः योजनीयः। यथा अत् इति। इदमेव तपरकरणम् उच्यते। अत् इत्यस्य अर्थः ह्रस्वाः षड् अवर्णाः इति। एवमेव उत् एत् ओत् इत्यादिषु अपि बोध्यम्।

शब्दशास्त्रे या संज्ञा तां विहाय अन्ये ये शब्दः व्याकरणे प्रयुज्यन्ते ते स्वरूपस्य वाचकाः भवन्तीति स्वं रूपं शब्दस्याशब्दसंज्ञा इति सूत्रस्यार्थः। तेन अग्नेर्ढक् इति सूत्रेण उक्तं कार्यम् अग्निपदार्थात् परं न भवति अपि तु अग्निशब्दात् परं भवति।

सूत्रेषु प्रयुक्तानाम् विभक्तीनाम् अर्थाः लौकिकव्याकरणाद् भिन्नाः भवन्ति। किञ्च अत्यल्पशब्दप्रयोगेन सूत्राणि रचनीयानि इति कारणात् पाणिनिः बहून् उपायान् आविष्कृत्य व्यवजहार। तेषु अन्यतमः उपायः केवलं विशेषणेन कार्यम् उच्यते। विशेष्यम् एकवारम् अन्यत्र उच्यते। अतः यदा विशेष्यविशेषणसम्बन्धः भवति तदा तदन्तविधिः भवति। विशेषणं तदन्तस्य संज्ञा भवति स्वस्य च रूपस्यापि। तदा विशेषणान्तं विशेष्यम् बोध्यम्।

यदा पदद्वयं सप्तम्यन्तं स्यात्। तयोः मध्ये एकम् पदम् अल्-बोधकं स्यात्। तर्हि तदादिविधिः भवति। तेन सः अल् यस्य आदिमवर्णः तादृशस्य ग्रहणं भवति।



## योग्यतावर्धनम्



अस्मिन् पाठ्यक्रमे पूर्वप्रकरणस्य ज्ञानं विना परवर्तिपाठानाम् अध्ययनम् अत्यन्तं कष्टसाध्यम्। अतः पूर्वपूर्वपाठानाम् उचितम् अध्ययनम् अनिवार्यमेव। तथापि अध्ययनकाले बहुत्र विषयः नावगम्यते। तदा अध्ययनं न स्थगनीयम्। अत्र यः विषयः क्लिष्टः भाति स कदाचित् अग्रे इतोऽपि स्पष्टः भवितुम् अर्हति। अतः निरन्तरम् अग्रे पठनीयमेव। एकैकस्य पाठस्य आद्योपान्तं ज्ञानम् एकवारं पठनेन न सम्भवति। तस्मात् मुहुर्मुहुः पठनीयम्। परन्तु काचित् पङ्क्तिः, कश्चित् शब्दः, काचित् प्रक्रिया, काचित् युक्तिः यदि बोद्धुं न शक्यते तर्हि अग्रिमस्य अध्ययनस्य विरामः न कर्तव्यः। अवगमः न भवति इति अवसादः न कर्तव्यः। पठनम् तु अनुवर्तनीयम्।

स्वस्य योग्यता का। तस्याः वर्धनं कर्तव्यं चेत् किं किम् आवश्यकमिति अत्र सुभाषितमेकं दीयते -

**शुश्रूषा श्रवणं चैव ग्रहणं धारणं तथा।**
**ऊहापोहार्थविज्ञानं तत्त्वज्ञानं च धीगुणाः॥**

**अन्वयार्थः - शुश्रूषा** श्रवणेच्छा, **श्रवणं** साक्षात् श्रवणम्। **ग्रहणं** श्रुतस्य विषयस्य अवगमः, **धारणं** यथा श्रुतं यथा अवगतं तथा तस्य धारणं स्मरणम् , तथा **ऊहः** तर्कः स्वपक्षसमर्थनम्, **अपोहः** प्रतिपक्षस्य आक्षेपाणां खण्डनम् , **अर्थविज्ञानं** तर्कवितर्कानन्तरम् निष्पन्नस्य अर्थस्य सिद्धान्तस्य व्यहारयोग्यं ज्ञानम् , **तत्त्वज्ञानम्** मर्मज्ञानम् च इति एते अष्टौ धीगुणाः बुद्धिगुणाः सन्ति।

अत एव यः कोऽपि वैदुष्यं सम्पादयितुम् इच्छति चेत् एते धीगुणाः तस्य स्युः। शास्त्रस्य गुरुमुखात् श्रवणस्य प्रबला इच्छा आवश्यकी। तेन अन्यानि आकर्षणानि त्यक्त्वा श्रवणे प्रवृत्तिः भवति। श्रवणे प्रवृत्तेः अनन्तरम् विक्षेपकारणानि दूरीकृत्य एकाग्रचेतसा श्रवणं कर्तव्यम्। यदा यावत् श्रूयते तदा तस्य ग्रहणम् अर्थात् विषयस्य अवबोधः, सुस्पष्टं ज्ञानम् भवतु। केवलं श्रवणभक्तिः कृता परन्तु किमपि न बुद्धम् इति स्थितिः मास्तु।

व्याकरणशास्त्रे प्रति पदम् नवीनाः विषयाः उद्भवन्ति। बहवः प्रकाराः उपतिष्ठन्ते। बहूनि सूत्राणि आयान्ति। अतः समग्रस्य अवबोधः, धारणम् , काले काले स्मरणम् , परीक्षासु अन्यत्र व्यवहारे च प्रतिपादनम् इति एतावद् दूरं गन्तव्यमस्ति। तदा एव अस्मिन् शास्त्रे पाटवमस्ति इति वक्तुं शक्यम्।

- पठितानि सूत्राणि अष्टाध्याय्याम् यत्र सन्ति तत् स्थलम् अष्टाध्याय्याम् उद्घाट्य कस्मात् सूत्रात् किम् पदम् अनुवर्तते, कः अधिकारः आयाति इति पश्येत्।
- किमपि वर्णद्वयम् आदाय तयोः सावर्ण्यम् भवति न वा इति सयुक्ति विचारणीयम्।



- शान्तचेतसा निभृते स्थाने वर्णानाम् उच्चारणं कर्तव्यम्। तत्र कण्ठादिदेशे के के वर्णाः उत्पद्यन्ते, तेषाम् आभ्यन्तरप्रयत्नाः के सन्ति, तेषाम् उच्चारणे कः प्रभावः अस्ति इति एतान् विषयान् सूक्ष्मतया अवलोकयेत्।
- वर्णानां तालिकां निर्माय समेषां वर्णानाम् उच्चारणस्थानानि, आभ्यन्तरप्रयत्नान् बाह्ययत्नान् च लिखेत्।
- अग्रिमेषु पाठेषु प्रति विधिसूत्रं कः विधीयमानः कः अविधीयमानः इति निर्णयाय प्रयासः विधेयः।
- बहुषु सूत्रेषु तपरकरणं लभ्यते। तदा तत्र तस्य कः समासः इति निर्णेयम्। किञ्च स तपरः तत्कालस्य कस्य कस्य ग्रहणं करोति इति अवधेयम्।
- अग्रे सूत्रव्याख्यावसरे बहुत्र तदन्तविधिः तदादिविधिश्च भवति तदा अस्मिन् पाठे यथा व्याख्यातमस्ति तेन मेलनं कुर्यात्। नूतनस्थले स्वयं तदादिविधिं तदन्तविधिं च कुर्यात्।



## पाठान्तप्रश्नाः

अधस्तात् अभ्यासाय प्रश्नाः दीयन्ते। छात्रैः पाठं सम्यक् पठित्वा बुद्ध्वा विमृश्य च एतेषां प्रश्नानाम् उत्तराणि स्वटिप्पणीपुस्तिकायां लेख्यानि। प्रायः बहुत्र दीर्घमेव उत्तरं स्यात्।

१. तुल्यास्यप्रयत्नं सवर्णम् इति सूत्रं व्याख्यात।

२. वर्णानां स्थानानि लिखत।

३. वर्णोच्चारणप्रक्रियां प्रकटयत।

४. बाह्ययत्नान् परिचाय्य कस्य कः बाह्ययत्नः इति विस्तारयत।

५. सावर्ण्यनिर्णये नासिकायाः उपयोगः भवति न वेति लेख्यम्।

६. ऋकारऌकारयोः सवर्णविधिः इति वार्तिकं व्याख्यात।

७. तपरस्तत्कालस्य इति सूत्रं व्याख्यात।

८. येन विधिस्तदन्तस्य इति सूत्रं व्याख्यात।



## पाठगतप्रश्नानाम् उत्तराणि

अधस्तात् पाठगतप्रश्नानाम् उत्तराणि लिखितानि सन्ति। तानि सूचकोत्तराणि सन्ति। अर्थात् अत्यन्तं लघु उत्तरम् अस्ति। परीक्षायाम् उत्तरलेखनकाले स्पष्टं वाक्यं लिख्यते चेद् वरम्।



**उत्तराणि-१**

१. अनुनासिकसंज्ञाविधायकं सूत्रं तावत् - मुखनासिकावचनोऽनुनासिकः। सूत्रार्थः - मुखसहितया नासिकया उच्चार्यमाणः वर्णः अनुनासिकसंज्ञः भवति।

२. अकारस्य १८ भेदाः।

३. सवर्णसंज्ञाविधायकं सूत्रम् - तुल्यास्यप्रयत्नं सवर्णम्। सूत्रार्थः - यस्य वर्णस्य येन वर्णेन तुल्यम् उच्चारणस्थानम् किञ्च तुल्यः आभ्यन्तरप्रयत्नः भवति तौ मिथः सवर्णौ। एकः वर्णः अपरस्य वर्णस्य सवर्णसंज्ञकः भवतीत्यर्थः।

४. ओष्ठौ।

५. तालु।

६. उपध्मानीयः - पवर्णात् पूर्वं फवर्णात् पूर्वं वा यदि विसर्गः अस्ति तर्हि तस्य स्थाने अर्धविसर्गसदृशः लिख्यते उच्चार्यते च। तदा तस्य नाम उपध्मानीयः भवति। उदा. - रामः पश्यति - राम॒पश्यति। वृक्षः फलति - वृक्ष॒फलति।

७. स्पृष्टेषत्स्पृष्टविवृतसंवृतभेदात् आभ्यन्तरप्रयत्नः चतुर्धा।

८. हकारस्य बाह्ययत्नः - संवारः नादः घोषः महाप्राणः इति।

९. ३)

१०. ३)

११. ४)

१२. ३)

१३. ४)

१४. २)

**उत्तराणि-२**

१५. अण् अविधीयमानः अस्ति चेत् स्वसवर्णस्य संज्ञा भवति।

१६. कुँ चुँ टुँ तुँ पुँ एते उदितः। यस्य उँकारः इत् भवति स उदित्।

१७. न।

१८. परेण।

१९. तात् परः अण् इति पञ्चमीतत्पुरुषः। तः परः यस्मात् सः इति बहुव्रीहिः।

२०. ह्रस्वानां स्वसवर्णानाम् षण्णाम्।

२१. तः परः यस्मात् इति बहुव्रीहिः समासः।

२२. २)

२३. १)



२४. ३)

२५. ४)

**उत्तराणि-३**

२६. विसर्जनीयान्तस्य पदस्य।

२७. यञादौ सार्वधातुके।

२८. सकलपदलाभानन्तरम् पदद्वयम् समानविभक्तिकम् अस्ति चेत्, सा विभक्तिः सप्तमीभिन्ना अस्ति चेत्, तयोः द्वयोः पदयोः मध्ये विशेष्यविशेषणभावः अस्ति चेत् तदन्तविधिः भवति।

२९. सूत्रे सकलपदलाभानन्तरम् यदि पदद्वयं सप्तम्यन्तं स्यात्। तयोः मध्ये एकम् पदम् अल्-बोधकं स्यात्। तर्हि तदादिविधिः भवति।

३०. २)

३१. २)

३२. ४)

३३. १)

।।इति तृतीयः पाठः।।



४

# संज्ञाप्रकरणम्-३

## प्रस्तावना

पूर्वस्मिन् पाठे समेषां वर्णानाम् उच्चारणस्थानि आभ्यन्तरप्रयत्नाः बाह्यप्रयत्नाः च आलोचिताः। एतेषाम् उपयोगेन एकस्य वर्णस्य अपरः वर्णः सवर्णः कथं भवतीत्यपि दृष्टम्। तत्रैव एकः वर्णः स्वसवर्णस्य ग्रहणं कदा करोतीति पठितम्। तपरकरणस्य अर्थः तात्पर्यं च अधीतम्। किञ्च व्याकरणे कथम् शब्दमादाय कार्यं भवतीति विमृष्टम्। बहुषु सूत्रेण तदन्तविधिः तदादिविधिश्च भवतः। अतः स विषयः पूर्वपाठे आलोचितः एव।

अधुना अस्मिन् पाठे वृद्धिः गुणः धातुः अवसानम् संहिता संयोगः लघु गुरु अपृक्तः पदम् टि उपधा निपाताः उपसर्गाः गतिः अव्ययम् नदी घि इति एताः अत्यन्तम् मुख्याः, पाणिनीयव्याकरणे मुहुर्मुहुः प्रयुक्ताः काश्चन संज्ञाः आलोच्यन्ते। अयं पाठः मुख्यः भवति। अस्य ज्ञानं सम्पाद्य अग्रिमपाठाः पठनीयाः। अस्य ज्ञानम् अस्ति चेत् अग्रे यत्र तत्र प्रयुक्ताः अत्रत्याः संज्ञाः उपयोगाय भवेयुः। अतः मनोनिवेशेन अस्य अध्ययनम् अत्यन्तम् व्युत्पत्तिवर्धकम् भवेद्।

व्याकरणशास्त्रं सोपानक्रमेण पठनीयम्। अन्यत्र कथापुस्तकेषु या कापि कथा पठितुं शक्या। व्याकरणे तु न तथा। पूर्वाध्यायानां ज्ञानं समासाद्य अग्रिमपाठाः पठनीयाः।



## उद्देश्यानि

इमं पाठं पठित्वा भवान् -

- पाणिनिव्याकरणे प्रयुक्ताः नितान्तम् मुख्याः गुणादिसंज्ञाः ज्ञास्यति।
- अन्यत्र व्याकरणशास्त्रे प्रयुक्तानाम् एतासां सज्ञानां ज्ञानेन तत्र अध्ययने समर्थो भवेत्।
- सूत्रस्यार्थम् कर्तुम् प्रभवेत्।
- अनुवृत्तिम् कर्तुम् प्रभवेत्।
- वेदे काव्यशास्त्रे च छन्दसि छन्दोनिर्णयाय लघुगुरुवर्णान् चिनुयात्।

## [४.१] वृद्धिरादैच्॥ (१.१.१)

**सूत्रार्थः** - आ ऐ औ एषां वृद्धिः इति संज्ञा भवति।



**सूत्रव्याख्या** - संज्ञासूत्रमिदम्। अष्टाध्याय्याम् प्रथमं सूत्रमिदम्। अस्मिन् सूत्रे पदत्रयम् अस्ति। वृद्धिः आत् ऐच् इति सूत्रगतपदच्छेदः। संज्ञाप्रकरणे इदं सूत्रम्। अतः संज्ञा इति पदं लभ्यते। वृद्धिः इति संज्ञा। आत् एच् च संज्ञिनः। आत् इत्यस्य दीर्घः आकारः इत्यर्थः। ऐच् इति प्रत्याहारः। ऐ औ इति तस्य अर्थः। सूत्रस्यार्थः भवति - आ ऐ औ इत्येषां वृद्धिः संज्ञा भवति इति। अत्र संज्ञा अपि शब्दः। संज्ञी अपि शब्दः एव। अतः वृद्धिः इति शब्दसंज्ञा।

## [ ४.२] अदेङ् गुणः॥ (१.१.२)

**सूत्रार्थः** - अ ए ओ एषां गुणः इति संज्ञा भवति।

**सूत्रव्याख्या** - संज्ञासूत्रमिदम्। अष्टाध्याय्याम् द्वितीयं सूत्रमिदम्। अस्मिन् सूत्रे त्रीणि पदानि। अत् एङ् गुणः इति सूत्रगतपदच्छेदः। संज्ञाप्रकरणे इदं सूत्रम्। अतः संज्ञा इति पदं लभ्यते। गुणः इति संज्ञा। अत् एङ् च संज्ञिनः। अत् इत्यस्य ह्रस्वः अवर्णः इत्यर्थः। एङ् इति प्रत्याहारः। ए ओ इति तस्य अर्थः। सूत्रस्यार्थः भवति - अ ए ओ इत्येषां गुणः संज्ञा भवति इति। अत्र संज्ञा अपि शब्दः। संज्ञी अपि शब्दः एव। अतः गुणः इति शब्दसंज्ञा।

## [ ४.३] भूवादयो धातवः॥ (१.३.१)

**सूत्रार्थः** - क्रियावाचकाः धातुपाठे पठिताः भू इत्यादयः शब्दाः धातुसंज्ञाः भवन्ति।

**सूत्रव्याख्या** - संज्ञासूत्रमिदम्। द्विपदात्मकमिदं सूत्रम्। भूवादयः धातवः इति सूत्रगतपदच्छेदः। भूः च वाः च भूवौ। आदिः च आदिः च आदी। भूवौ आदी येषां ते भूवादयः इति बहुव्रीहिसमासः। अत्र धातुः हि संज्ञा। भू वा इत्यादयः पाणिनीयधातुपाठे पठिताः शब्दाः हि संज्ञिनः सन्ति। धातूनां सामान्यः अर्थः भवति क्रिया इति। यथा गमनम् क्षेपणम् चिन्तनम् इति एताः क्रियाः। पाणिनिना धातुपाठनामके स्वकीये ग्रन्थे क्रियावाचकाः एते शब्दाः संगृहीताः। तेषामेव प्रकृतसूत्रेणानेन धातुसंज्ञा विधीयते। सूत्रस्यार्थः भवति - क्रियावाचकाः धातुपाठे पठिताः भू इत्यादयः शब्दाः धातुसंज्ञाः भवन्ति।

## [ ४.४] सनाद्यन्ता धातवः॥ (३.१.३२)

**सूत्रार्थः** - सनादयः णिङन्ताः प्रत्ययाः अन्ते येषां ते धातुसंज्ञकाः भवन्ति।

**सूत्रव्याख्या** - संज्ञासूत्रमिदम्। सूत्रेऽस्मिन् पदद्वयमस्ति। सनाद्यन्ताः धातवः इति सूत्रगतपदच्छेदः। सन् आदिः येषां ते सनादयः इति बहुव्रीहिसमासः। सनादयः अन्ते येषां ते सनाद्यन्ताः इति बहुव्रीहिसमासः।

**सन्-क्यच्-काम्यच्-क्यङ्-क्यषोऽथाचारक्विब्-णिज्-यङौ तथा।**
**यगायेयङ्-णिङ् चेति द्वादशाऽमी सनादयः।।**

सन् क्यच् काम्यच् क्यङ् क्यष् आचारक्विप् णिच् यङ् यक् आय ईयङ् णिङ् इति एषाम् आदिः सन् अस्ति। अतः एते सनादयः। एते यस्य अन्ते भवन्ति स सनाद्यन्तः भवति। यथा कमेर्णिङ् इति सूत्रेण कम्-धातुतः णिङ् प्रत्ययः विधीयते। तदा कम्+णिङ् इति जाते प्रक्रियया कामि इति शब्दः निष्पद्यते।

अस्य अन्ते णिङ् अस्ति। अतः अयं सनाद्यन्तः शब्दः। तस्य अनेन सूत्रेण धातुः इति संज्ञा विधीयते। सनादयः णिङन्ताः प्रत्ययाः अन्ते येषां ते धातुसंज्ञकाः भवन्तीति सूत्रस्यास्यार्थः।



## पाठगतप्रश्नाः-१

१. वृद्धिसंज्ञकाः के।

२. गुणसंज्ञकाः के।

३. धातुपाठे पठितानाम् धातूनां धातुसंज्ञा केन सूत्रेण।

४. सनादिप्रत्यययोगेन निष्पन्नानाम् धातुसंज्ञा केन सूत्रेण।

५. अदेङ् गुणः इति सूत्रस्य प्रकारः कः।

   १) संज्ञा  २) परिभाषा  ३) विधिः  ४) अधिकारः

६. अयं वर्णः गुणः।

   १) आ  २) ए  ३) ऐ  ४) इ

७. अयं वर्णः न वृद्धिः।

   १) ए  २) ऐ  ३) औ  ४) आ

८. धातोः वाच्यार्थः कः।

   १) क्रिया  २) गुणः  ३) वृद्धिः  ४) सनादि

---

## [ ४.५]  विरामोऽवसानम्॥ (१.४.११०)

**सूत्रार्थः** - वर्णानाम् उच्चारणाभावः अवसानसंज्ञकः भवति।

**सूत्रव्याख्या** - संज्ञासूत्रमिदम्। अस्मिन् सूत्रे पदद्वयमस्ति। विरामः अवसानम् इति सूत्रगतपदच्छेदः। विरामः इति संज्ञिपरम् पदम्। अवसानम् इति संज्ञा। विरम्यते अस्मिन्निति विरामः। विरमणं विरामः। अर्थात् विरमणक्रिया। प्रकृते च विरामः इत्यस्य उच्चारणाभावः इत्यर्थः। व्याकरणप्रकरणस्य प्रस्तावात् उच्चारणं च वर्णानामेव। अतः वर्णानाम् उच्चारणाभावः अवसानसंज्ञकः भवतीति सूत्रार्थः। रामशब्दस्य रूपसाधनप्रक्रियायाम् रामर् इति स्थितिः भवति। तत्र रामर् इति अन्तिमरेफात् परम् कस्यापि वर्णस्य उच्चारणं नास्ति, उच्चारणाभावः अस्ति। अयमभावः एव विरामः। अतः अयम् अभावः अवसानसंज्ञकः भवति।

[**व्युत्पत्तिः** - विरामः इति **संज्ञिपरम्** पदम्। अस्य वाक्यस्य कः अर्थः। संज्ञी परः यस्य स संज्ञिपरः। अर्थात् विरामः इति शब्दः संज्ञिवाचकः। विरामशब्दस्य अर्थः संज्ञी, यस्य संज्ञा अस्ति सः।



एवमेव अन्यत्रापि संज्ञापरम् पदम्, विधेयपरम् पदम्, उद्देशपरम् परम् इति विपुलप्रयोगः भवति शास्त्रेषु। तदा तत्र तत्र तेषाम् अर्थाः ज्ञेयाः।)

## [ ४.६] परः सन्निकर्षः संहिता॥ (१.४.१०९)

**सूत्रार्थः** - द्वयोः वर्णयोः अर्धमात्राधिककालिकव्यवधानाभावात्मकं सामीप्यं संहितासंज्ञं भवति।

**सूत्रव्याख्या** - संज्ञासूत्रमिदम्। परः सन्निकर्षः संहिता इति त्रीणि पदानि अस्मिन् सूत्रे सन्ति। सर्वाणि अपि प्रथमान्तानि। तत्र परः सन्निकर्षः इति पदद्वयं संज्ञिपरं संहिता इति संज्ञापदम्। परः इत्यस्य अतिशयितः इत्यर्थः। सन्निकर्षः इत्यस्य सन्निधिः सामीप्यम् वा अर्थः। संहिता इति अर्थस्य संज्ञा न तु वर्णस्य वर्णसमुदास्य वा। द्वयोः वर्णयोः मध्ये विद्यमानस्य अत्यन्तसामीप्यरूपसम्बन्धस्य इयं संज्ञा। सूत्रार्थः - द्वयोः वर्णयोः परः अतिशयितः सन्निकर्षः सन्निधिः सामीप्यं संहितासंज्ञं भवति। द्वयोः वर्णयोः मध्ये व्यवधानं कालकृतं भवति। अर्थात् एकस्य वर्णस्य उच्चारणानन्तरम् किञ्चित् कालानन्तरम् अपरः वर्णः उच्चार्यते। वर्णयोः मध्ये न्यूनतः अर्धमात्रिकमेव उच्चारणकालिकं व्यवधानं सम्भवति, न तु ततोऽपि न्यूनम्। अतः ययोः द्वयोः वर्णयोः मध्ये अर्धमात्राकालिकव्यवधानं यदि भवति तर्हि तयोः वर्णयोः मध्ये परः सन्निकर्षः अर्थात् अतिशयसामीप्यं भवति। अतः स सन्निकर्षः संहिता इत्युच्यते। संहिता च द्वयोः स्वरयोः, द्वयोः व्यञ्जनयोः, स्वरव्यञ्जनयोः अपि सम्भवति।

**उदाहरणम्** - सुद्ध्युपास्यः इत्यत्र उदाहरणे सुधी उपास्यः इति समासः। समासः भवति चेत् द्वयोः समस्यमानयोः पदयोः मध्ये परम् अर्थात् अतिशयितं सान्निध्यम् अनिवार्यम्। अतः ईकारस्य उकारेण अर्धमात्राकालिकं व्यवधानम् आयाति, न तु ततः अधिकम्। इदं सामीप्यमेव संहिता इति उच्यते। तदा संहितायाः विषयो भवति। किञ्च इको यणचि इति सूत्रेण संहिताकार्यं फलति।

## [ ४.७] हलोऽनन्तराः संयोगः॥ (१.१.७)

**सूत्रार्थः** - अज्भिः अव्यवहिताः हलः संयोगसंज्ञाः भवन्ति।

**सूत्रव्याख्या** - संज्ञासूत्रमिदम्। इदम् पदत्रयात्मकम्। हलः अनन्तराः संयोगः इति सूत्रगतपदच्छेदः। हलः इति 'हल्' इति शब्दस्य प्रथमाबहुवचनम्। 'अन्तर'शब्दस्य व्यवधानम् अर्थः। अविद्यमानम् अन्तरं व्यवधानं येषाम् हलाम् ते अनन्तराः इति नञ्-बहुव्रीहिसमासः। द्वयोः हलोः मध्ये व्यवधानं कस्य भवितुम् सम्भवति। अन्यस्य वर्णस्य। कः सः। अच् अर्थात् स्वरः। द्वयोः व्यञ्जनयोः मध्ये यदि स्वरः स्यात् तर्हि स्वरात्मकम् व्यवधानम् अस्ति इति बोध्यम्। अज्भिः अर्थात् स्वरैः यदि व्यवधानं स्यात् तर्हि हलः अज्भिः व्यवहिताः, यदि न स्यात् तर्हि अव्यवहिताः। एवम् सूत्रार्थो भवति - अज्भिः अव्यवहिताः हलः संयोगसंज्ञाः भवन्ति। वस्तुतः द्वयोः व्यञ्जनयोः मध्ये स्वरः नास्ति चेत् तयोः द्वयोः व्यञ्जनयोः संयोगः इति संज्ञा भवति। इयम् संज्ञा एकस्य व्यञ्जनस्य न भवति। द्वयोः एव व्यञ्जनयोः संयोगसंज्ञा भवति। एकस्य स्वरस्य अथवा एकाधिकानां स्वराणाम् अथवा स्वरव्यञ्जनयोः संयोगसंज्ञा न भवति।



**उदाहरणम्** - यथा कृष्णः इति शब्दः। अस्मिन् शब्दे ष् ण् इति अनयोः वर्णयोः मध्ये कोऽपि स्वरः नास्ति। अतः ष्+ण् इति अनयोः अर्थात् 'ष्ण्' इति समुदायस्य संयोगः इति संज्ञा भवति। लक्ष्मणः इत्यत्र क्+ष्+म् इति त्रीणि व्यञ्जनानि व्यवधानरहितानि। परन्तु क्ष्म् इति वर्णत्रयात्मकस्य समुदायस्य संयोगः इति संज्ञा न भवति। तत्र क्ष् इत्यस्य संयोगसंज्ञा भवति। ष्म् इत्यस्यापि संयोगसंज्ञा भवति।

भिन्नप्रकारेण तदेव प्रकट्यते - द्वयोः व्यञ्जनयोः स्वररहितं युग्ममेव संयोगः। यथा कृष्ण इति शब्दे ष्+ण् इति द्वे व्यञ्जने स्तः। तयोः युग्मम् अस्ति। परन्तु तस्मिन् युग्मे स्वरः नास्ति। स्वरः तु पूर्वं वा परं वा अस्ति, न तु मध्ये। अतः ष्ण् इति संयोगः।

## [ ४.८] ह्रस्वं लघु॥ (१.४.१०)

**सूत्रार्थः** - ह्रस्वस्वरस्य लघुसंज्ञा भवति।

**सूत्रव्याख्या** - संज्ञासूत्रमिदम् पदद्वयात्मकम्। ह्रस्वस्वरस्य लघुसंज्ञा भवति। ह्रस्वम् इति संज्ञापरम्। लघु इति संज्ञिपरं पदम्। उदाहरणादिकं दीर्घं च इति सूत्रे अधः प्रदास्यते।

## [ ४.९] संयोगे गुरु॥ (१.४.११)

**सूत्रार्थः** - संयोगात् पूर्ववर्ती ह्रस्वस्वरः गुरुसंज्ञः भवति।

**सूत्रव्याख्या** - संज्ञासूत्रमिदम् पदद्वयात्मकम्। ह्रस्वं लघु इति सूत्रात् ह्रस्वम् इति प्रथमान्तम् पदमनुवर्तते। यदि संयोगात् पूर्वम् ह्रस्वस्वरः स्यात् तर्हि तस्य गुरुसंज्ञा भवति। उदाहरणादिकं दीर्घं च इति सूत्रे अधः प्रदास्यते।

## [ ४.१०] दीर्घं च॥ (१.४.१२)

**सूत्रार्थः** - दीर्घस्वरः गुरुसंज्ञः भवति।

**सूत्रव्याख्या** - संज्ञासूत्रमिदम् पदद्वयात्मकम्। संयोगे गुरु इति सूत्रात् गुरु इति संज्ञापदमनुवर्तते। दीर्घस्वरस्य गुरुसंज्ञा भवति इति सूत्रार्थः।

ह्रस्वं लघु। संयोगे गुरु। दीर्घं च। इति त्रयाणाम् सूत्राणां सार इत्थम् - दीर्घस्वरस्य गुरु इति संज्ञा भवति। यदि ह्रस्वस्वरात् परं संयोगः अस्ति तर्हि तस्य ह्रस्वस्य अपि गुरु इति संज्ञा भवति। यदि ह्रस्वस्वरात् परं संयोगः नास्ति तर्हि ह्रस्वस्य लघु इति संज्ञा भवति।

लघुनः प्रकटनाय U, गुरुणः प्रकटनाय – इदं चिह्नं व्यवह्रियते।

**उदाहरणम्** - भद्रकाल्यै नमः। इति मन्त्रे भ् अ द् र् अ क् आ ल् य् ऐ न् अ म् अ : इति क्रमेण वर्णाः सन्ति। तत्र आ ऐ इति दीर्घौ स्तः। तयोः गुरुसंज्ञा भवति। द्+र् इति संयोगः अस्ति, तस्मात् पूर्वम् ह्रस्वः अकारः अस्ति। अस्य अकारस्य संयोगे गुरु इति सूत्रेण गुरुसंज्ञा भवति। ककारात् पूर्वं यः अकारः तस्य ह्रस्वं लघु इति सूत्रेण लघुसंज्ञा भवति। यतोहि तस्मात् परं संयोगः नास्ति। नकारात् परवर्ती यः ह्रस्वः अकारः तस्यापि ह्रस्वं लघु इति सूत्रेण लघुसंज्ञा भवति, यतोहि तस्मात् परं संयोगः नास्ति।

भद्रकाल्यै नमः इति उदाहरणे लघुगुरुचिह्नानि प्रदर्श्यन्ते।



भ् अ द् र् अ क् आ ल् य् ऐ न् अ म् अ :

– U – – U –

अधः पट्टिकायाम् चिह्नद्वारा लघुगुरुवर्णाः प्रदर्शिताः। तत्र हृदयकमलमध्ये राजितं निर्विकल्पम् इति काव्यपङ्क्तिः अस्ति।

| | | | | |
|---|---|---|---|---|
| हृ द य | क म ल | म ध्ये रा | जि तं निर् | वि क ल्पम् |
| U U U | U U U | – – – | U – – | U – – |



## पाठगतप्रश्नाः-२

९. अवसानसंज्ञा कस्य।

१०. संहिता का।

११. द्वयोः स्वरयोः संहिता भवति वा न वा।

१२. संयोगे कति वर्णाः भवन्ति।

१३. द्वयोः स्वरयोः संयोगः भवति वा न वा।

१४. नमो नारायणाय इति मन्त्रे कः लघुवर्णः। कश्च गुरुवर्णः।

१५. संयोगे परे सति ह्रस्वस्य का संज्ञा भवति।

१६. विरामोऽवसानम् इति सूत्रेण का संज्ञा भवति।

१) विरामः २) अवसानम् ३) उच्चारणाभावः ४) संहिता

१७. संहिता कयोः।

१) स्वरयोः २) व्यञ्जनयोः ३) स्वरव्यञ्जयोः ४) त्रयाणामपि

१८. संयोगः कयोः।

१) स्वरयोः २) व्यञ्जनयोः ३) स्वरव्यञ्जयोः ४) त्रयाणामपि

१९. संयोगे किमस्ति।

१) अच्-द्वयम् २) हल्-द्वयम् ३) एकः अच् एकः हल् ४) हल्-त्रयम्

२०. वन्द्य इति शब्दे संयोगः कः।

१) न्+द् २) द्+य् ३) न्+द्+य् ४) न्+द् , द्+य्

२१. गोविन्दम् वन्दे इति उदाहरणे कति गुरुस्वराः, कति लघुस्वराः।

१) गुरु-४, लघु-१ २) गुरु-३, लघु-२ ३) गुरु-५, लघु-० ४) गुरु-२, लघु-३

२२. क) संयोगः अस्ति चेत् संहिता अस्ति एव।

ख) संहिता अस्ति चेत् संयोगः अस्ति एव।

अनयोः कथनयोः विषये युक्तम् युग्मं चिनुत।



१) (क) सत्यम् (ख) असत्यम्   २) (क) सत्यम् (ख) सत्यम्
३) (क) असत्यम् (ख) सत्यम्   ४) (क) असत्यम् (ख) असत्यम्

## [ ४.११] अपृक्त एकाल् प्रत्ययः॥ (१.२.४१)

**सूत्रार्थः** - एकाल् प्रत्ययः अपृक्तसंज्ञः भवति।

**सूत्रव्याख्या** - संज्ञासूत्रमिदम्। अस्मिन् त्रीणि पदानि सन्ति। अपृक्तः एकाल् प्रत्ययः इति सूत्रगतपदच्छेदः। अपृक्तः इति संज्ञापदम्। एकाल् प्रत्ययः इति संज्ञिपरम्। अस्मिन् सूत्रे एक इति शब्दस्य असहायः एकाकी इत्यर्थः। एकः अल् एकाल् इति कर्मधारयसमासः। एकाल् प्रत्ययः अपृक्तसंज्ञः भवतीति सूत्रार्थः। अर्थात् यस्य प्रत्ययस्य एकः एव वर्णः अस्ति स प्रत्ययः अपृक्तसंज्ञकः भवति।

**उदाहरणम्** - यथा धातोः शप् इति प्रत्ययः विधीयते। शप् इत्यत्र शकारः पकारः इत्संज्ञकौ। तयोः लोपः भवति। केवलम् अ इत्येव अवशिष्यते। अयम् 'अ' इति प्रत्ययः अपृक्तसंज्ञकः भवति।

## [ ४.१२] सुप्तिङन्तं पदम्॥ (१.४.१४)

**सूत्रार्थः** - सुबन्तं तिङन्तं च शब्दस्वरूपम् पदसंज्ञं स्यात्।

**सूत्रव्याख्या** - इदं संज्ञासूत्रम्। सूत्रेऽस्मिन् द्वे पदे स्तः। सुप्तिङन्तम् पदम् इति सूत्रगतपदच्छेदः। सुप् च तिङ् च सुप्तिङौ इति इतरेतरयोगद्वन्द्वसमासः। सुप्तिङौ अन्ते यस्य शब्दस्वरूपस्य तत् सुप्तिङन्तम्। **द्वन्द्वान्ते श्रूयमाणं पदं प्रत्येकमभिसंबध्यते**। इति नियमः। अर्थात् द्वन्द्वसमासस्य अन्ते विद्यमानम् द्वन्द्वसमासस्य अनङ्गभूतम् पदम् द्वन्द्वसमासे विद्यमानैः पदैः प्रत्येकम् अभिसम्बध्यते, अन्वेति इति। अन्ते इति पदं द्वन्द्वसमासस्य अवयवः नास्ति, किन्तु द्वन्द्वसमासस्य अन्ते अस्ति। अतः तस्य सुप् इति तिङ् इति द्वाभ्याम् पदाभ्याम् अभिसम्बन्धः अर्थात् अन्वयः भवति। अतः सूत्रार्थः भवति - सुबन्तं तिङन्तं च शब्दस्वरूपम् पदसंज्ञं स्यात्। सुप् इत्यस्यार्थः केवलम् सुप् इति सप्तमीबहुवचनस्य प्रत्ययमात्रम् न। अत्र सुप् इत्युक्ते सु औ जस् ... सुप् इति एषु सुप्रत्ययस्य सुप्-प्रत्ययस्थेन पकारेण प्रत्याहारः। तेन सुबादीनाम् एकविंशतेः प्रत्ययानां बोधः। तिङ् इत्युक्ते तिप् तस् झि ... इट् वहि महिङ् इति एषु तिपः ति इत्यस्य महिङ् इत्यस्य ङकारेण प्रत्याहारः। तेन तिबादीनाम् अष्टादशानां प्रत्ययानां बोधः।

यत् शब्दस्वरूपम् उद्दिश्य सुप् विधीयते तत् शब्दस्वरूपम् आदि यस्य समुदायस्य किञ्च स सुप् प्रत्ययः अन्ते यस्य समुदायस्य, तस्य पदसंज्ञा भवति। **तदादितदन्तस्य पदसंज्ञा** इति प्रचारः। अर्थात् उद्दिष्टशब्दस्वरूपादिः प्रत्ययान्तः यः समुदायः तस्य पदसंज्ञा भवति। न केवलं प्रकृतेः न वा केवलं प्रत्ययस्य पदसंज्ञा भवति।

**उदाहरणम् - सुबन्तम्** - रामः इति समुदायः पदसंज्ञकः। अत्र राम इति मूलशब्दः, ततः परं सु इति प्रत्ययः। रामः इति समुदायस्य अन्ते सुप्रत्ययः अस्ति। अतः समुदायः सुबन्तः। अतः समुदायस्य पदसंज्ञा फलति।



**तिङन्तम्** - पठति इत्यत्र पठ् अ ति इति स्थितिः। तत्र वस्तुतः धातुः+शप्+तिप् प्रकृतिप्रत्ययादिकम्। पठ् इति धातुम् उद्दिश्य तिप् इति प्रत्ययः विहितः। स धातुः आदिः यस्य (पठ्+अ+ति) समुदायस्य, तिप् च अन्ते यस्य समुदायस्य तत्समुदायस्य (पठ्+अ+ति) पदसंज्ञा भवति।

## [ ४.१३] अचोऽन्त्यादि टि॥ (१.१.६४)

**सूत्रार्थः** - अचां मध्ये यः अन्त्यः, स आदिः यस्य तत् टिसंज्ञं भवति।

**सूत्रव्याख्या** - इदं संज्ञासूत्रम्। सूत्रेऽस्मिन् त्रीणि पदानि सन्ति। अचः अन्त्यादि टि इति सूत्रगतपदच्छेदः। अचः इति षष्ठ्यन्तम् पदम्। अत्र निर्धारणे षष्ठी। अतः अर्थः भवति - अचां मध्ये इति। अन्ते भवः अन्त्यः। अन्त्यः आदिः यस्य तत् अन्त्यादि। अचां मध्ये यः अन्त्यः, स आदिः यस्य तत् टिसंज्ञं भवतीति सूत्रार्थः। अर्थात् कस्मिन्नपि शब्दे यावन्तः अचः सन्ति, तेषु यः अन्तिमः अच् स ग्राह्यः। अयम् अन्तिमः अच् शब्दस्यापि अन्ते अस्तु इति आग्रहः नास्ति। अस्माद् अन्तिमाद् अचः शब्दस्य अन्तपर्यन्तम् यच्च यावच्च भवति तत् अच्-सहितं टिसंज्ञं भवति।

**उदाहरणम्** - रामाद् इत्यत्र र् आ म् आ द् इति क्रमशः वर्णाः सन्ति। अस्मिन् शब्दे द्वौ अचौ स्तः। तयोः मध्ये अन्त्यः अच् भवति मकारात् परवर्ती आकारः। तम् आकारम् आदाय ततः परम् अन्तपर्यन्तम् यद् वर्तेते यावच्च वर्तते तत्सर्वम् टिसंज्ञं भवति। यथा अत्र 'आद्' इति समुदायस्य टि संज्ञा भवति।

नाम इति शब्दे न् आ म् अ इति क्रमशः वर्णाः सन्ति। तत्र आ अ इति द्वौ अचौ स्तः। तयोः मध्ये मकारात् परवर्ती अकारः एव अन्त्यः अच् अस्ति। तम् अकारम् आदाय शब्दस्य अन्तपर्यन्तं यदस्ति तत्सर्वम् टिसंज्ञं भवति। परन्तु अत्र अकारः शब्दस्यापि अन्त्यः अस्ति, ततः परं कोऽपि वर्णः नास्ति। तस्मात् केवलम् 'अ'कारस्य एव टि संज्ञा भवति।

## [ ४.१४] अलोऽन्त्यात् पूर्व उपधा॥ (१.१.६५)

**सूत्रार्थः** - अन्त्यात् अलः अव्यहितपूर्वः वर्णः उपधासंज्ञः भवति।

**सूत्रव्याख्या** - इदं संज्ञासूत्रम्। सूत्रेऽस्मिन् चत्वारि पदानि सन्ति। अलः अन्त्यात् पूर्वः उपधा इति सूत्रगतपदच्छेदः। अलः इति पञ्चम्यन्तम् पदम्। अन्ते भवः अन्त्यः। अन्त्यात् इति पञ्चम्येकवचनान्तं पदम्। पूर्वः इति प्रथमान्तम् पदम्। उपधा इति प्रथमान्तम् संज्ञापदम्। अल् इति वर्णपर्यायः। अर्थात् अल् इत्यक्ते सर्वे वर्णाः बोद्धव्याः। अलः अन्त्याद् इति द्वयोः पदयोः सामानाधिकरण्यम्। अर्थात् द्वयोः पदयोः विभक्तिः समाना। अत एव अन्त्याद् इति अलः इत्यस्य विशेषणम्। एवञ्च सूत्रार्थो भवति - अन्त्यात् अलः पूर्वः अव्यहितः अल् उपधासंज्ञः भवति। उपान्त्यः वर्णः उपधासंज्ञकः भवतीति भावः। अन्त्यः अपि अल् एव न तु अल्-समुदायः। ततः पूर्ववर्ती अपि अल् अर्थात् एकः एव वर्णः न तु वर्णसमुदायः। तस्य उपधासंज्ञा भवति। वर्णसमुदायस्य उपधासंज्ञा न भवति।

**उदाहरणम्** - रामाद् इत्यत्र र् आ म् आ द् इति क्रमशः वर्णाः सन्ति। तत्र अन्त्यः अल् भवति द्-वर्णः। ततः पूर्वः अल् भवति आ-कारः। तस्य प्रकृतसूत्रेण उपधा इति संज्ञा भवति।

नाम इति शब्दे न् आ म् अ इति क्रमशः वर्णाः सन्ति। तत्र मकारात् परवर्ती अकारः एव अन्त्यः अल् अस्ति। तस्मात् पूर्वः अल् भवति म् इति वर्णः। अस्य उपधा इति संज्ञा प्रकृतसूत्रेण भवति।



## पाठगतप्रश्नाः-३

२३. एकाल्-प्रत्ययस्य का संज्ञा।

२४. पदम् किम्।

२५. द्वन्द्वान्ते श्रूयमाणं पदं प्रत्येकमभिसंबध्यते इति वचनस्य कः अर्थः।

२६. पदं कतिविधम्। किं तद्।

२७. रामाणाम् इति पदे टि किम्।

२८. रामस्य इति पदे उपधा का।

२९. एकाल्-प्रत्ययस्य का संज्ञा।

१) अपृक्तः २) उपधा ३) टि ४) पदम्

३०. सुबन्तस्य का संज्ञा।

१) अपृक्तः २) उपधा ३) टि ४) पदम्

३१. भद्रकाल्यै इति शब्दे यकारस्य का संज्ञा।

१) अपृक्तः २) उपधा ३) टि ४) पदम्

३२. केन्द्रम् इत्यत्र टि किम्, उपधा च का।

१) टि-अम् , उपधा-म् २) टि-म् , उपधा-अ

३) टि-अम् , उपधा-अ ४) टि-अम् , उपधा-र्

---

## [ ४.१५] प्राग्रीश्वरान्निपाताः॥ (१.४.५६)

**सूत्रार्थः** - प्राग्रीश्वरान्निपाताः इति सूत्रात् प्रभृति अधिरीश्वरे इति सूत्रात् प्राक् मध्यपातिनां निपातसंज्ञा भवति।

**सूत्रव्याख्या** - इदं अधिकारसूत्रम्। अयं संज्ञाधिकारः। सूत्रेऽस्मिन् त्रीणि पदानि सन्ति। प्राक् रीश्वरात् निपाताः इति सूत्रगतपदच्छेदः। अधिरीश्वरे (१.४.९७) इति सूत्रस्य एकदेशः भवति रीश्वर इति शब्दः। प्राग्रीश्वरान्निपाताः इति सूत्रात् प्रभृति अधिरीश्वरे इति सूत्रात् प्राक् मध्यपातिनां निपातसंज्ञा भवति इति सूत्रार्थः। अधिरीश्वरे इति सूत्रात् प्राक् निपातपदमनुवर्तते इत्यर्थः।

## [ ४.१६] चादयोऽसत्त्वे॥ (१.४.५७)

**सूत्रार्थः** - चादिगणे पठिताः अद्रव्यवाचकाः शब्दाः निपातसंज्ञाः भवन्ति।



**सूत्रव्याख्या** - इदं संज्ञासूत्रम्। सूत्रेऽस्मिन् द्वे पदे स्तः। चादयः असत्त्वे इति सूत्रगतपदच्छेदः। चः आदिः येषां ते चादयः। पाणिनीयगणपाठे चादिगणः विद्यते। तस्मिन् गणे पठिताः शब्दाः चादयः भवन्ति। न सत्त्वम् असत्त्वम्। अद्रव्यम् इत्यर्थः। सत्त्वं द्रव्यम् भवति। यथा मृद् मरुद् जलम् वह्निः इत्यादिकं द्रव्यम्। संख्या गुणाः क्रिया इत्यादिकं न द्रव्यम्। प्राग्रीश्वरान्निपाताः (१.४.५६) इति सूत्रात् निपाताः इति अधिकारात् लब्धम् पदम्। तच्च संज्ञापदम्। चादिगणे पठिताः शब्दाः यदि द्रव्यवाचकाः न स्युः तर्हि तेषाम् निपातसंज्ञा भवतीति सूत्रार्थः। यदि कस्यचित् जनस्य घटस्य पशोः वा नाम 'च' इत्यादिकं न स्यात् तर्हि चादीनां निपातसंज्ञा भवतीति तात्पर्यार्थः। चादिगणे पशु इति शब्दः, सम्यक् इति तदर्थः। यदा गजः पशुः इति गजवाचकरूपेण पशुशब्दस्य व्यवहारः भवति तदा तत्र पशुशब्दस्य निपातसंज्ञा न भवति। परन्तु यदि पशु गजः इति प्रयोगः स्यात् तदा पशु शब्दस्य निपातसंज्ञा भवति। किञ्च सम्यक् गजः इति तस्य अर्थो भवति।

## [ ४.१७] प्रादयः॥ (१.४.५८)

**सूत्रार्थः** - प्रादिगणे पठिताः अद्रव्यवाचकाः शब्दाः निपातसंज्ञाः भवन्ति।

**सूत्रव्याख्या** - इदं संज्ञासूत्रम्। सूत्रेऽस्मिन् प्रादयः इति एकमेव पदमस्ति। प्र आदिः येषां ते प्रादयः। पाणिनीयगणपाठे प्रादिगणः विद्यते। तस्मिन् गणे पठिताः शब्दाः प्रादयः भवन्ति। चादयोऽसत्त्वे (१.४.५७) इति सूत्रात् असत्त्वे इति सप्तम्यन्तं पदमनुवर्तते। न सत्त्वम् असत्त्वम्। अद्रव्यम् इत्यर्थः। सत्त्वं द्रव्यम् भवति। यथा मृद् मरुद् जलम् वह्निः इत्यादिकं द्रव्यम्। संख्या गुणाः क्रिया इत्यादिकं न द्रव्यम्। प्राग्रीश्वरान्निपाताः (१.४.५६) इति सूत्रात् निपाताः इति अधिकारात् लब्धम् पदम्। तच्च संज्ञापदम्। प्रादिगणे पठिताः शब्दाः यदि द्रव्यवाचकाः न स्युः तर्हि तेषाम् निपातसंज्ञा भवतीति सूत्रार्थः। यदि कस्यचित् जनस्य घटस्य पशोः वा नाम 'अनु' इत्यादिकं न स्यात् तर्हि प्रादीनां निपातसंज्ञा भवतीति तात्पर्यार्थः। प्रादिगणे अनु इति शब्दः, पश्चाद् इति तदर्थः। यदा गजस्य नाम अनुः इति गजवाचकरूपेण अनुशब्दस्य व्यवहारः भवति तदा तत्र अनुशब्दस्य निपातसंज्ञा न भवति।

**प्रादयः** - प्र। परा। अप। सम्। अनु। अव। निस्। निर्। दुस्। दुर्। वि। आङ्। नि। अधि। अपि। अति। सु। उत्। अभि। प्रति। परि। उप।

## [ ४.१८] उपसर्गाः क्रियायोगे॥ (१.४.५९)

**सूत्रार्थः** - क्रियया अन्वितार्थाः प्रादयः उपसर्गसंज्ञाः भवन्ति।

**सूत्रव्याख्या** - इदं संज्ञासूत्रम्। सूत्रेऽस्मिन् उपसर्गाः क्रियायोगे इति द्वे पदे स्तः। प्रादयः (१.४.५८) इति सम्पूर्णं सूत्रमनुवर्तते। उपसर्गाः इति संज्ञापदम्। क्रियया योगः क्रियायोगः इति तृतीयातत्पुरुषसमासः। तस्मिन् क्रियायोगे इति। क्रियया सह अन्वये सति इति तदर्थः। प्राग्रीश्वरान्निपाताः (१.४.५६) इति सूत्रात् निपाताः इति अधिकारात् लब्धम् पदम्। तदपि संज्ञापदम्। क्रियया अन्वितार्थाः प्रादयः उपसर्गसंज्ञाः भवन्तीति सूत्रार्थः। यस्य धातोः अर्थेन प्रादीनाम् अर्थस्य अन्वयः भवति, तं धातुं प्रति प्रादीनाम् उपसर्गसंज्ञा, नान्यं प्रति इति तात्पर्यम्। निपातसंज्ञा चापि भवति।



**उदाहरणम्** - राममनुगच्छति लक्ष्मणः इति उदाहरणे रामम् अनु लक्ष्मणः गच्छति इति यदि अर्थः तर्हि अनु इति प्रादेः गमिधातुवाच्यायाम् गमनक्रियायाम् अन्वयः नास्ति। अतः न उपसर्गसंज्ञा। परन्तु यदि अनुगच्छति लक्ष्मणः रामम् इति यदि तात्पर्यम् तदा अनु इति प्रादेः गमिधातुवाच्यायाम् गमनक्रियायाम् अन्वयः अस्ति। अतः तदा अनु इत्यस्य गमिधातुं प्रति उपसर्गसंज्ञा भवत्येव।

## [ ४.१९] गतिश्च॥ (१.४.६०)

**सूत्रार्थः** - क्रियया अन्वितार्थाः प्रादयः गतिसंज्ञाः भवन्ति।

**सूत्रव्याख्या** - इदं संज्ञासूत्रम्। सूत्रेऽस्मिन् द्वे पदे स्तः। गतिः च इति सूत्रगतपदच्छेदः। प्रादयः (१.४.५८) इति सम्पूर्णं सूत्रमनुवर्तते। उपसर्गाः क्रियायोगे (१.४.५९) इति सूत्रात् क्रियायोगे इति पदमनुवर्तते। प्राग्रीश्वरान्निपाताः (१.४.५६) इति सूत्रात् निपाताः इति अधिकारात् लब्धम् पदम्। तदपि संज्ञापदम्। क्रियया अन्वितार्थाः प्रादयः गतिसंज्ञाः भवन्तीति सूत्रार्थः। यस्य धातोः अर्थेन प्रादीनाम् अर्थस्य अन्वयः भवति, तं धातुं प्रति प्रादीनाम् गतिसंज्ञा, नान्यं प्रति इति तात्पर्यम्। निपातसंज्ञा चापि भवति।

अष्टाध्याय्यां प्रथमाध्यायस्य चतुर्थपादे गतिसंज्ञाविधायकानि विंशतिः सूत्राणि विद्यन्ते।

## [ ४.२०] स्वरादिनिपातमव्ययम्॥ (१.१.३७)

**सूत्रार्थः** - स्वरादयः निपाताः च अव्ययसंज्ञाः भवन्ति।

**सूत्रव्याख्या** - संज्ञासूत्रमिदम्। अस्मिन् सूत्रे पदद्वयम् अस्ति। स्वरादिनिपातम् अव्ययम् इति सूत्रगतपदच्छेदः। स्वर् आदिः येषां ते स्वरादयः। ते च निपाताः च इति स्वरादिनिपातम् इति समाहारद्वन्द्वसमासः। पाणिनीयगणपाठे स्वरादिः कश्चिद् गणः वर्तते। तस्मिन् पठिताः शब्दाः स्वरादयः भवन्ति। सूत्रार्थो भवति - स्वरादयः निपाताः च अव्ययसंज्ञाः भवन्तीति।



## पाठगतप्रश्नाः-४

३३. निपाताः के।

३४. चादयोऽसत्त्वे इत्यत्र सत्त्वं किम्।

३५. प्रादयः कति के च।

३६. कस्य उपसर्गसंज्ञा।

३७. गतिसंज्ञा कस्य।

३८. अव्ययसंज्ञा केषाम्।

३९. प्रादिः धातोः प्राक् प्रयुक्तः किन्तु तद्धात्वर्थक्रियया अन्वयः नास्ति चेत् तस्य उपसर्गसंज्ञा भवति न वा।



४०. प्राग्रीश्वरान्निपाताः इति किम्प्रकारकम् सूत्रम्।

१) संज्ञा २) परिभाषा ३) विधिः ४) अधिकारः

४१. पशु गजः। पशुः गजः इति वाक्ययोः प्रथमपशुब्दः कीदृशः, द्वितीयः कीदृशः।

१) प्रथमः-निपातः , द्वितीयः - विशेष्यम्

२) प्रथमः-विशेषणम् , द्वितीयः - अव्ययम्

३) प्रथमः-विशेषणम्, द्वितीयः - निपातः

४) प्रथमः-निपातः , द्वितीयः - अव्ययम्

४२. प्रादयः इति सूत्रेण प्रादीनां का संज्ञा भवति।

१) गतिः २) उपसर्गः ३) निपातः ४) अव्ययम्

४३. क) यः य उपसर्गः स स गतिसंज्ञः भवति एव।

ख) यः यः गतिसंज्ञः स स उपसर्गः भवति एव।

अनयोः कथनयोः विषये युक्तम् युग्मं चिनुत।

१) (क) सत्यम् (ख) असत्यम् २) (क) सत्यम् (ख) सत्यम्

३) (क) असत्यम् (ख) सत्यम् ४) (क) असत्यम् (ख) असत्यम्

४४. क) स्वरादीनां निपातसंज्ञा भवति एव।

ख) निपातानाम् अव्ययसंज्ञा भवति एव।

अनयोः कथनयोः विषये युक्तम् युग्मं चिनुत।

१) (क) सत्यम् (ख) असत्यम् २) (क) सत्यम् (ख) सत्यम्

३) (क) असत्यम् (ख) सत्यम् ४) (क) असत्यम् (ख) असत्यम्

## [ ४.२१] यू स्त्र्याख्यौ नदी॥ (१.४.३)

**सूत्रार्थः** - ईदूदन्तौ नित्यस्त्रीलिङ्गौ नदीसंज्ञौ स्तः।

**सूत्रव्याख्या** - संज्ञासूत्रमिदम्। अस्मिन् सूत्रे त्रीणि पदानि सन्ति। तत्र यू इति प्रथमाद्विचनान्तम्, स्त्र्याख्यौ इति प्रथमाद्विवचनान्तम्, नदी इति प्रथमैकवचनान्तम् पदमस्ति। समासः - ई च ऊ च यू इति इतरेतरयोगद्वन्द्वसमासः। स्त्रियाम् आचक्षाते इति स्त्र्याख्यौ। अस्मिन् सूत्रे तदन्तविधिः भवति। यथा - यू इति विशेषणम्। कस्य विशेषणम्। स्त्र्याख्ययोः, अर्थात् स्त्रीलिङ्गिनोः। कौ तौ। व्याकरणं शब्दशास्त्रम्। अतः शब्दशास्त्रस्य प्रस्तावः, विषयः अस्ति। अतः शब्दौ इति पदम् आक्षिप्यते। अधुना यू इति विशेषणम्, शब्दौ इति विशेष्यम्। विशेषणं तदन्तस्य संज्ञा भवति। अतः तादृशौ शब्दौ अत्र ग्राह्यौ ययोः अन्ते यू स्तः। अर्थात् ईदन्तः - ईकारान्तः शब्दः, ऊदन्तः - ऊकारान्तः च शब्दः ग्राह्यः। तदा सूत्रार्थो भवति - ईदन्तः ऊदन्तः च इति एतौ नित्यस्त्रीलिङ्गिनौ शब्दौ नदीसंज्ञकौ स्तः।

**उदाहरणम्** - श्रेयसी। नदी। गौरी। वधू।



## [ ४.२२] शेषो घ्यसखि॥ (१.४.७)

**सूत्रार्थः** - नदीसंज्ञकभिन्नः सखिभिन्नः च इदन्तः उदन्तः घिसंज्ञः भवति।

**सूत्रव्याख्या** - संज्ञासूत्रमिदम्। अस्मिन् सूत्रे त्रीणि पदानि सन्ति। शेषः घि असखि इति सूत्रस्थेषु पदेषु विद्यमानस्य सन्धेः विच्छेदः। शेषः इति प्रथमान्तं पदम्। घि इति प्रथमान्तं संज्ञापदम्। न सखि असखि इति नञ्तत्पुरुषसमासः। ङिति ह्रस्वश्च इति सूत्रात् ह्रस्वः इति प्रथमान्तं पदमनुवर्तते। यू स्त्र्याख्यौ नदी इति सूत्रात् यू इति प्रथमाद्विवचनान्तं पदमनुवर्तते। इः च उः च यू इति इतरेतरयोगद्वन्द्वसमासः। एतावता पदानि लब्धानि - असखि यू ह्रस्वः शेषः घि। अत्र कः शेषः, अवशिष्टः। शेषो घ्यसखि (१.४.७) इति अस्मात् सूत्रात् पूर्वं यू स्त्र्याख्यौ नदी (१.४.३) इति, नेयङुवङ्स्थानावस्त्री (१.४.४) इति, वामि (१.४.५) इति, ङिति ह्रस्वश्च (१.४.६) इति सूत्राणि गतानि। तत्र येषां ह्रस्वानां नदी संज्ञा नाभवत् ते शब्दाः अत्र बोद्धव्याः। किञ्च नदीसंज्ञाभिन्नाः अन्ये इदन्तः ह्रस्वः उदन्तः ह्रस्वः च ग्राह्यः। तत्रापि सखिशब्दः इदन्तः ह्रस्वः, तस्य ग्रहणं न कर्तव्यम्। असखि यू ह्रस्वः शेषः इत्यत्र कः शेषः इति ज्ञातम्। परन्तु कः सः इति चेत् उच्यते - इदम् व्याकरणं शब्दशास्त्रम्। अतः शब्दशास्त्रस्य प्रस्तावः, विषयः अस्ति। अतः शब्दौ इति पदम् आक्षिप्यते। किञ्च असखि ह्रस्वः शेषः यू इति विशेषणम् अस्ति, शब्दौ इति विशेष्यम् अस्ति। अतः तदन्तविधिना तथा सखिभिन्नः शेषः (नदीसंज्ञाभिन्नः) शब्दः ग्राह्यः यस्य अन्ते ह्रस्वः इकारः अस्ति, ह्रस्वः उकारः च अस्ति। तदा सूत्रार्थो भवति - नदीसंज्ञाभिन्नः सखिभिन्नः च इदन्तः उदन्तः च शब्दः घिसंज्ञकः भवति।

**उदाहरणम्** - हरि। मुनि। कवि। भानु। विष्णु।

## [ ४.२३] इग्यणः सम्प्रसारणम्॥ (१.१.४४)

**सूत्रार्थ** – यणः स्थाने प्रयुज्यमानो य इक् स सम्प्रसारणसंज्ञः भवति।

**सूत्रव्याख्या** - संज्ञासूत्रमिदम्। अस्मिन् सूत्रे त्रीणि पदानि सन्ति। इक् यणः सम्प्रसारणम् इति सूत्रगतपदच्छेदः। इक् इति (१/१) प्रथमैकवचनान्तं पदम्। यणः इति (६/१) षष्ठ्येकवचनान्तं पदम्। सम्प्रसारणम् इति प्रथमान्तं संज्ञापदम्। सूत्रार्थो भवति - यणः स्थाने इक् सम्प्रसारणसंज्ञः भवति। अर्थात् यण् - य व र ल एषां स्थाने इक् - इ उ ऋ ऌ एते विधीयन्ते चेत् तस्य इकः सम्प्रसारणसंज्ञा भवति।

सम्प्रसारणस्य क्षेत्रम् - १) विधिः - कदाचित् उच्यते सम्प्रसारणं कुरु। तदा यणः स्थाने इकः विधानं कर्तव्यम्। यणः स्थाने विहितस्य इकः सम्प्रसारणसंज्ञा भवति। परन्तु यत्र यावता विधानमेव न जातं तत्र कथं सम्प्रसारणं कर्तव्यम् इति। अतः संप्रसारणं कुरु इत्यस्य अर्थः तथा कुरु येन यणः स्थाने इक् स्यात्।

२) अनुवादः - कदाचित् उच्यते यत् सम्प्रसारणम् अस्ति चेत् अन्यत् किमपि कार्यं कुरु इति। अर्थात् यदि यणः स्थाने इक् विहितः अस्ति तर्हि पूर्वरूपादिकं कुरु इति। अत्र सम्प्रसारणस्य विधानं नास्ति। पूर्वतः कृतस्य सम्प्रसारणस्य उपयोगः क्रियते। एवम् विहितस्य व्यवहारः अनुवादः कथ्यते।



## [ ४.२४] यस्मात् प्रत्ययविधिस्तदादि प्रत्ययेऽङ्गम्॥ (१.४.१३)

**सूत्रार्थ** – यः प्रत्ययः यस्मात् क्रियते तदादि शब्दस्वरूपम् तस्मिन् प्रत्यये अङ्गसंज्ञं भवति।

**सूत्रव्याख्या** - संज्ञासूत्रमिदम्। अस्मिन् सूत्रे पञ्च पदानि सन्ति। यस्मात् इति यत्-सर्वनाम्नः पञ्चम्येकवचनान्तं पदम्। प्रत्ययविधिः इति प्रथमान्तं पदम्। तदादि इत्यपि प्रथमान्तं पदम्। प्रत्यये इति सप्तम्येकवचनान्तं पदम्। अङ्गम् इति प्रथमान्तं संज्ञापदम्। समासः - प्रत्ययस्य विधिः प्रत्ययविधिः इति षष्ठीतत्पुरुषः समासः। तत् (प्रकृतिः) आदिः यस्य (शब्दस्वरूपस्य) तत् तदादि इति तद्गुणसंविज्ञानबहुव्रीहिसमासः। सूत्रार्थो भवति - यः प्रत्ययः यस्मात् क्रियते तदादि शब्दस्वरूपम् तस्मिन् अङ्गसंज्ञं भवति।

**सूत्रार्थविवरणम्** - यस्मात् प्रत्ययविधिः - प्रत्ययाधिकरे यः कोऽपि प्रत्ययः विधीयते तदा काञ्चित् प्रकृतिम् उद्दिश्य विधीयते। किञ्च प्रकृतिवाचकशब्दः पञ्चम्यन्तः भवति। यथा धातोः इति पञ्चम्यन्तं पदमस्ति। तस्मात् परं तिङ् विधीयते। तस्मात् परं शप् इत्यादिप्रत्ययाः विधीयन्ते। ङ्याप्प्रातिपदिकात् इति अत्र पञ्चमी अस्ति। प्रातिपदिकात् सुप् इत्यादिप्रत्ययाः विधीयन्ते। अतः काचित् प्रकृतिः, किमपि शब्दस्वरूपम् उल्लिख्यते, तस्मात् परं प्रत्ययः विधीयते। एवम् भूधातोः तिङ् विधीयते, तदा भू ति इति स्थितिः भवति। अत्र भू इत्यस्मात् तिप् इति प्रत्ययः विहितः। एतावता 'यस्मात् प्रत्ययविधिः' इति अंशः आलोचितः।

**तदादि** - तद् आदि यस्य शब्दस्वरूपस्य तत् तदादि इति समासः दृष्टः। किं तद्। यस्मात् प्रत्ययः विहितः तद्। यथा भू इति अस्मात् तिप् प्रत्ययः विहितः। अतः भू इति तद्। तद् भू आदि यस्य, कस्य। भू ति इति स्थितिः अस्ति। किं भू+ति इति समुदायः ग्राह्यः। अतः सूत्रे उक्तम् 'प्रत्यये' इति। अर्थात् यः प्रत्ययः विहितः तस्मिन् प्रत्यये परे सति पूर्ववर्ती अंशः ग्राह्यः। अत्र तिप् इति प्रत्यये परे सति पूर्ववर्ती अंशः भू इति। अतः भू इति अंशस्य अङ्गसंज्ञा फलति।

**सूत्रार्थसमन्वयः** - 'भू ति' इति स्थिते धातोः शप् प्रत्ययः अपि विधीयते। तदा 'भू अ ति' इति स्थितिः जायते। अधुना 'भू' इति अस्मात् अ(शप्) इत्यपि प्रत्ययः विहितः, 'ति' (तिप्) इत्यपि प्रत्ययः विहितः। तदा अङ्गं किमिति प्रश्नः उदियात्। अत्र अङ्गनिर्णयाय यः प्रत्ययः आश्रीयते तत्प्रत्ययात् पूर्ववर्ती भागः अङ्गम् भवति। यथा 'भू अ ति' इति स्थिते तिप्रत्यये किमङ्गमिति चेत् 'भू अ' इति समुदायः अङ्गम्। अ(शप्) प्रत्यये किमङ्गमिति चेत् 'भू' इति अङ्गम्। ति-प्रत्ययः भू इत्यस्मात् विहितः। तिप्रत्यये परे भू आदि यस्य तत् अङ्गम्। ति-प्रत्यये परे 'भू अ' इति समुदायस्य भू आदि अस्ति। अतः 'भू अ' इति समुदायः अङ्गसंज्ञः भवति।

अङ्गस्य (६.४.१) इति अधिकारसूत्रम्। अयमधिकारः ई च गणः (७.४.९७) इति सूत्रं यावद् व्याप्नोति। अङ्गाधिकारे ५ पादाः सन्ति। अङ्गमाश्रित्य बहूनि कार्याणि भवन्ति। अतः अङ्गसंज्ञा सम्यक् बोद्धव्या।

### प्रसिद्धा अधिकाराः



अधः पट्टिकायां केचित् प्रसिद्धाः अधिकाराः प्रदत्ताः सन्ति, न तु सर्वे। व्याकरणस्य छात्रेण एते अधिकाराः सदा धारणीयाः। कः अधिकारः, कुतः आरभ्य कियद्दूरं गच्छति इति विषयस्य ज्ञानं व्याकरणशास्त्रे अतीव उपयोगि अस्ति।

| अनुक्र. | अधिकारः | इतः आरभ्य | एतावत् पर्यन्तम् |
|---|---|---|---|
| १ | कारके | १.४.२३ | १.४.५५ |
| २ | समासः | २.१.३ | २.२.३८ (पादान्तः) |
| ३ | अनभिहिते | २.३.१ | २.३.७३ (पादान्तः) |
| ४ | प्रत्ययः | ३.१.१ | ५.४.१६० (पादान्तः) |
| ५ | परश्च | ३.१.२ | ५.४.१६० (पादान्तः) |
| ६ | आद्युदात्तश्च | ३.१.३ | ५.४.१६० (पादान्तः) |
| ७ | धातोः | ३.१.२२ | ३.१.९० |
| ८ | धातोः | ३.१.९१ | ३.४.११७ (पादान्तः) |
| ९ | कृत् | ३.१.९३ | ३.४.११७ (पादान्तः) |
| १० | कृत्याः | ३.१.९५ | ३.१.१३३ |
| ११ | भूते | ३.२.८४ | ३.२.१२२ |
| १२ | ङ्याप्प्रातिपदिकात् | ४.१.१ | ५.४.१६० (पादान्तः) |
| १३ | स्त्रियाम् | ४.१.३ | ४.१.८१ |
| १४ | तद्धिताः | ४.१.७६ | ५.४.१६० (पादान्तः) |
| १५ | संहितायाम् | ६.१.७२ | ६.१.१५८ |
| १६ | अङ्गस्य | ६.४.१ | ७.४.९७ (पादान्तः) |
| १७ | पदस्य | ८.१.१६ | ८.३.५४ |
| १८ | पदात् | ८.१.१७ | ८.१.६९ |
| १९ | पूर्वत्रासिद्धम् | ८.२.१ | ८.४.६८ (पादान्तः) |
| २० | संहितायाम् | ८.२.१०८ | ८.४.६८ (पादान्तः) |



## पाठगतप्रश्नाः-५

४५. नदीसंज्ञा कस्य।



४६. हरिशब्दस्य नदी संज्ञा भवति न वा।

४७. यणः स्थाने इक् भवति चेत् तस्य का संज्ञा।

४८. अङ्गसंज्ञाविधायकं सूत्रं किम्।

४९. अङ्गस्य इति अधिकारः कियद्दूरं व्याप्नोति।

५०. प्रत्ययः इति अधिकारः कियद्दूरं व्याप्तः।

५१. अस्य नदी संज्ञा न भवति।

१) हरि २) नदी ३) गौरी ४) वधू

५२. ईदन्तस्य नित्यस्त्रीलिङ्गिनः का संज्ञा।

१) नदी २) घि ३) पदम् ४) टि

५३. क) ऊदन्तस्य नित्यस्त्रीलिङ्गिनः घिसंज्ञा भवति।

ख) उदन्तस्य घिसंज्ञा भवति।

अनयोः कथनयोः विषये युक्तम् युग्मं चिनुत।

१) (क) सत्यम् (ख) असत्यम् २) (क) सत्यम् (ख) सत्यम्

३) (क) असत्यम् (ख) सत्यम् ४) (क) असत्यम् (ख) असत्यम्

५४. अधोलिखितानां केन सह कस्य सम्बन्धः इति युक्तां तालिकां चिनुत।

| | |
|---|---|
| (क) नदी | (i) रामान् इत्यत्र आन् |
| (ख) घि | (ii) वधू |
| (ग) टि | (iii) पठ् अ ति इत्यत्र पठ् अ समुदायः |
| (घ) अङ्गम् | (iv) कवि |

| | **(क)** | **(ख)** | **(ग)** | **(घ)** |
|---|---|---|---|---|
| १) | (ii) | (iv) | (i) | (iii) |
| २) | (ii) | (iv) | (iii) | (i) |
| ३) | (iii) | (ii) | (i) | (iv) |
| ४) | (ii) | (iii) | (iv) | (i) |

५५. अधोलिखितानां केन सह कस्य सम्बन्धः इति युक्तां तालिकां चिनुत।

| | |
|---|---|
| (क) धातुः | (i) पदम् |
| (ख) तिङन्तम् | (ii) अपृक्तः |
| (ग) दीर्घः अच् | (iii) क्रियावाचकः |
| (घ) एकाल् प्रत्ययः | (iv) गुरु |

| | (क) | (ख) | (ग) | (घ) |
|---|---|---|---|---|
| १) | (iii) | (ii) | (i) | (iv) |
| २) | (ii) | (i) | (iii) | (iv) |

३) (iii) (i) (iv) (ii)

४) (ii) (iii) (iv) (I)



## पाठसारः

आ ऐ औ इति वर्णानाम् वृद्धिसंज्ञा भवति। अ ए ओ इति वर्णानाम् गुणसंज्ञा भवति। पाणिनिविरचिते धातुपाठे पठितानां शब्दानाम् धातुसंज्ञा भूवादयो धातव इति सूत्रेण भवति। सनादिप्रत्ययः यस्य अन्ते भवति स सनाद्यन्तः। सनाद्यन्तस्य शब्दस्वरूपस्य धातुसंज्ञा सनाद्यन्ता धातवः इति सूत्रेण भवति।

वर्णानाम् उच्चारणाभावः अवसानसंज्ञकः भवतीति विरामोऽवसानम् इति सूत्रस्यार्थः। द्वयोः वर्णयोः मध्ये न्यूनतः अर्धमात्रातः अधिकं कालिकव्यवधानं यदि न भवति तर्हि तावत् सामीप्यमेव सन्निकर्षः, स एव संहिता इत्युच्यते।

द्वयोः व्यञ्जनयोः स्वररहितं युग्ममेव संयोगः। यथा कृष्ण इति शब्दे ष्+ण् इति द्वे व्यञ्जने स्तः। तयोः युग्मम् अस्ति। परन्तु तस्मिन् युग्मे स्वरः नास्ति। स्वरः तु पूर्वं वा परं वा अस्ति, न तु मध्ये। अतः ष्ण् इति संयोगः।

दीर्घस्वरस्य गुरु इति संज्ञा भवति। यदि ह्रस्वस्वरात् परं संयोगः अस्ति तर्हि ह्रस्वस्य गुरु इति संज्ञा भवति। यदि ह्रस्वस्वरात् परं संयोगः नास्ति तर्हि ह्रस्वस्य लघु इति संज्ञा भवति।

यस्य प्रत्ययस्य एकः एव वर्णः अस्ति स प्रत्ययः अपृक्तसंज्ञकः भवति।

यत् शब्दस्वरूपम् उद्दिश्य सुप् विधीयते तत् शब्दस्वरूपम् आदि यस्य समुदायस्य किञ्च स सुप् प्रत्ययः अन्ते यस्य समुदायस्य, तस्य पदसंज्ञा भवति। अर्थात् शब्दस्वरूपादिः प्रत्ययान्तः यः समुदायः तस्य पदसंज्ञा भवति। न केवलं प्रकृतेः न वा केवलं प्रत्ययस्य पदसंज्ञा भवति।

कस्मिन्नपि शब्दे विद्यमानेषु स्वरेषु यः अन्तिमः स्वरः भवति, तस्मात् स्वरात् शब्दस्य अन्तिमवर्णं यावत् तत्स्वरसहितः समुदायः टिसंज्ञः भवति।

कस्यापि शब्दस्वरूपस्य अन्तिमवर्णात् पूर्ववर्ती, उपान्त्यः वर्णः उपधासंज्ञकः भवति ।

प्राग्रीश्वरान्निपाताः (१.४.५६) इति सूत्रात् प्रभृति अधिरीश्वरे (१.४.९७) इति सूत्रात् प्राक् मध्यपातिनां निपतसंज्ञा भवति। सत्त्वं द्रव्यम् भवति। द्रव्यभिन्नार्थे प्रयुक्ताः चादयः अपि निपातसंज्ञकाः भवन्ति। द्वाविंशतिः प्रादयः अपि निपाताः एव। क्रियया अन्वितार्थाः प्रादयः उपसर्गसंज्ञाः भवन्ति निपातसंज्ञाः च भवन्ति। क्रियया अन्विताार्थाः प्रादयः गतिसंज्ञाः भवन्ति निपातसंज्ञाः च भवन्ति। स्वरादयः निपाताः च अव्ययसंज्ञाः भवन्ति।



ईकारान्तः ऊकारन्तः च यः नित्यस्त्रीलिङ्गी शब्दः तस्य नदी संज्ञा यू स्त्र्याख्यौ नदी इति सूत्रेण कृता। अन्यानि अपि कानिचन सूत्राणि अष्टाध्याय्यां सन्ति यैः नदी संज्ञा क्रियते। ततः अवशिष्टानाम् इकारान्ताम् उकारान्तानाम् च शब्दानां घि संज्ञा भवति सखिशब्दं विहाय। घिसंज्ञा शेषो घ्यसखि इति सूत्रेण भवति।

यणः य व र ल एषां स्थाने इक् इ उ ऋ ऌ एते विधीयन्ते। विधानमपि सम्प्रसारणसंज्ञं भवति। विहिताः इ उ ऋ ऌ एते अपि सम्प्रसारणसंज्ञाः भवन्ति।

यस्मात् प्रत्ययविधिस्तदादि प्रत्ययेऽङ्गम् इति सूत्रेण प्रत्ययः यस्मात् क्रियते, तद् आदि यस्य, तत् शब्दस्वरूपम्, तस्मिन् प्रत्यये परे, अङ्गसंज्ञं भवति। यथा भू अ ति इति स्थिते अप्रत्यये भू इति अङ्गम्। तिप्रत्यये भू अ इति समुदायः हि अङ्गम् भवति।

व्याकरणस्य छात्रेण नूनं स्मर्तव्याः केचित् सुप्रसिद्धाः अधिकाराः अस्मिन् पाठे पट्टिकायाम् दत्ताः सन्ति।



## योग्यतावर्धनम्

छात्रः स्वस्य योग्यतां वर्धयितुम् किं किं कर्तुं शक्नोति इति विषयकमेकं सुबोधं सुभाषितमस्ति -

**काकचेष्टा बकध्यानं श्वाननिद्रा तथैव च।**

**अल्पाहारी ब्रह्मचारी विद्यार्थी पञ्चलक्षणम्॥**

**व्याख्या** - काकस्य वायसस्य चेष्टा क्रिया काकचेष्टा। बकस्य ध्यानम् एकाग्रता बकध्यानम्। श्वानस्य कुक्कुरस्य निद्रा स्वापः श्वाननिद्रा तथा एव च। अल्पम् न्यूनम् आहरति सेवते भुङ्क्ते सः अल्पाहारी। ब्रह्मचर्यव्रतं चरति स ब्रह्मचारी। इति एतानि पञ्च विद्यार्थिनः छात्रस्य लक्षणानि लिङ्गानि चिह्नानि।

छात्रः कः इति प्रश्नस्य तात्पर्यमस्ति तस्य कानि लक्षणनानि सन्तीति। अस्मिन् सुभाषिते पञ्च लक्षणानि उक्तानि। तानि लक्षणानि यस्य स विद्यार्थी नान्यः। अतः एव छात्रेण एतानि लक्षणानि नित्यम् अभ्यासेन आत्मसात् कर्तव्यानि। तदा सः अध्ययनस्य उत्तमं फलं लब्धुं शक्नोति। योग्यः छात्रः भवेत्। अत्र एकैकं लक्षणम् अधः स्पष्टीक्रियते।

**काकचेष्टा** - काकः वायसः यथा सर्वदा चेष्टारतः भवति। कर्मणि निरतः भवति। आलस्यं न करोति। पुनः पुनः यतते। जनैः ताड्यते तथापि पुनः प्रवर्तते। अतः कर्मतत्परः काकः। यथा काकः आलस्यं त्यक्त्वा स्वस्य कर्मणि प्रवर्तते तथा छात्रेण आलस्यं हित्वा स्वस्य कर्म यद् अध्ययनं तस्मिन् प्रवृत्तिः कर्तव्या।



**बकध्यानम् -** बकः बलाका यथा ध्यानं करोति तथा ध्यानं विद्यार्थिना कर्तव्यम्। बकः जले स्थित्वा स्वभक्ष्यं ग्रहीतुम् शिला इव तिष्ठति। मत्साः अन्ये च जलचराः सन्देहमपि न कुर्वन्ति यत् अत्रायं बकः इति। परन्तु स्वभक्ष्यस्य निरीक्षणे रतः बकः समीपम् आगतं भक्ष्यम् अत्यन्तं निपुणतया गृह्णाति। बकः एकत्र स्थिरः सर्वत्र स्वलक्ष्ये भक्ष्ये एव दृष्टिं करोति। तद्वत् विद्यार्थी स्वस्य लक्ष्यम् अध्ययनम्, तस्मिन् सर्वत्र दृष्टिं कुर्यात्, अन्यत्र दृष्टिं नैव कुर्यात्। चित्तस्य विक्षेपस्य बहूनि कारणानि आयान्ति, परन्तु तानि सर्वाणि सुदूरीकृत्य अध्ययनैकपरायणः भवेत् छात्रः।

**श्वाननिद्रा -** श्वानः कुक्कुरः यथा निद्राति तथा निद्रा छात्रस्य स्यात्। अर्थात् सारमेयः निद्रितः चेदपि अल्पेन शब्देन ध्वनिना प्रबोधति। संकटात् च प्राणान् रक्षति। अत्यन्तं निद्रालुः न भवति सारमेयः। अधिकनिद्रा तमोगुणं वर्धयति। ज्ञानार्जनं कर्तव्यं चेत् सत्त्वगुणस्य आवश्यकता अस्ति। अतः सत्त्वगुणस्य उपार्जनं कथं स्यादिति अवश्यं चिन्तयेत् छात्रः। सत्त्वगुणं विना विद्याग्रहणं विद्याधारणं काले काले विद्याप्रयोगं कर्तुं न प्रभवति जनः। अत एव छात्रः अधिकनिद्रां त्यक्त्वा आरोग्यरक्षणाय यावती निद्रा युक्ता तावतीं निद्रामेव सेवेत।

**अल्पाहारी -** युक्तः परिमितः आहारः विद्यार्थिना कर्तव्यः। प्रति छात्रं आहारस्य परिमाणं भिन्नं भवितुम् अर्हति तथापि येन आहारेण निद्रा वर्धते, आलस्यं वर्धते, शरीरस्य स्थूलता वर्धते तथा आहारे आधिक्यं न कर्तव्यम्। आहारः शरीरं चित्तं च पोषयति। अतः आहारनियन्त्रणं मुख्यं भवति। न केवलम् अल्पः आहारः अपि तु आरोग्यवर्धकः रोगप्रतिकारक्षमतावर्धकः शक्तिवर्धकः बुद्धिवर्धकः मनसः चाञ्चल्यनिवारकः च स्यात्। यथा अत्युष्णम् अति कटुम् अति तीक्ष्णम् वा आहारं करोति चेत् मनः चञ्चलं तत्क्षणमेव भवति। अतः आहारस्य परिणामाः भवन्ति एव इति विचिन्त्य आहारनियन्त्रणम् विद्याध्ययनानुकूलम् अस्तु इति तात्पर्यम्।

**ब्रह्मचारी -** पुरा गुरुकुले उषित्वा भिक्षाम् आनीय विद्यार्जनं कुर्वन्ति स्म बटवः। रामः वशिष्ठाश्रमं गत्वा विद्योपार्जनं कृतवान् इति वयं सर्वे जानीमः एव। विद्यायाः ग्रहणाय धारणाय स्मरणाय च बुद्धिबलम् आवश्यकम्। एकाग्रता तीक्ष्णता च आवश्यकी। एतासां क्षमतानां वर्धनं ब्रह्मचर्यव्रतेन भवति इति परम्परा। वीर्यरक्षणम् मन्त्रजपः कामक्रोधादीनां परित्यागः, ब्राह्मे मुहूर्ते प्रबोधः, दिवा निद्रायाः असेवनम्, राक्षसकालीनभोजनस्य त्यागः, आचार्यसेवा, देवसेवा इति नैके विषयाः ब्रह्मचर्यव्रते अन्तर्भवन्ति। ब्रह्मचर्यस्य पालनेन विद्यायाः कृते यत् बुद्धिवैभवम् आवश्यकम् तद् लभ्यते।

इत्थम् विद्यार्थिना किं किं कर्तव्यं येन विद्यायाः ग्रहणे धारणे स्मरणे प्रयोगे च पाटवं तस्य स्यात्, तस्य योग्यता येन वर्धेत तथा पञ्च उपायाः सविस्तरम् आलोचिताः। अत्यन्तं श्रद्धया एते उपायाः अवलम्बनीयाः छात्रेण। क्षणाभ्यन्तरे तु फलं न भवति। दीर्घकालम् इत्थम् उपासना आवश्यकी। तदा एव परिणामाः स्पष्टं प्रकटिताः भवन्ति।

अस्मिन् पाठे ये ये विषयाः आलोचिताः तेषु योग्यत्वं सम्पादयितुम् किं किं कर्तुं शक्यं तदत्र उच्यते।



- संस्कृतं यदा पठ्यते तदा तत्र गुणसंज्ञकवर्णान् वृद्धिसंज्ञकवर्णान् चिनुयात्।
- यत्र किमपि क्रियापदं प्रयुक्तं पठ्यते तदा तत्र धातुः कः, केन सूत्रेण तस्य धातुसंज्ञा भवतीति निर्णयं कुर्यात्।
- संस्कृताध्ययनकाले यत्र यत्र संयोगः लभ्यते तदा तस्य अवधारणं कुर्यात्।
- श्लोकेषु सुभाषितेषु लघुगुरुवर्णान् चिह्नितान् कुर्यात्।
- कोऽपि शब्दः लभ्यते चेत् स शब्दः पदं न वा निर्णीय तस्मिन् टि किम्, उपाधा का इति ज्ञानं सम्पादयेत्।
- संस्कृताध्ययने आगतानाम् निपातानाम् अव्ययानाम् उपसर्गाणां गतीनां च चयनं परिचयं च कृत्वा पृथक् तालिकां च कृत्वा तेषाम् अर्थं कोशतः लिखेत्। अपिच अन्यत्र प्रयोगं कुर्यात्।
- सूत्रस्य व्याख्यानस्य विशिष्टः क्रमः भवति। तस्य क्रमस्य अवलोकनं कुर्यात्। तेन क्रमेण अन्येषामपि सूत्राणां व्याख्यां कुर्यात्।
- पठितानि सूत्राणि अष्टाध्याय्याम् यत्र सन्ति तत् स्थलम् अष्टाध्याय्याम् उद्घाट्य कस्मात् सूत्रात् किम् पदम् अनुवर्तते, कः अधिकारः आयाति इति पश्येत्।



## पाठान्तप्रश्नाः

१. वृद्धिरादैच् इति सूत्रं व्याख्यात।
२. अदेङ् गुणः इति सूत्रं व्याख्यात।
३. परः सन्निकर्षः संहिता इति सूत्रं व्याख्यात।
४. हलोऽनन्तराः संयोगः इति सूत्रं व्याख्यात।
५. सुप्तिङन्तं पदम् इति सूत्रं व्याख्यात।
६. प्राग्रीश्वरान्निपाताः इति सूत्रं व्याख्यात।
७. उपसर्गाः क्रियायोगे इति सूत्रं व्याख्यात।
८. यू स्त्र्याख्यौ नदी इति सूत्रं व्याख्यात।
९. यस्मात् प्रत्ययविधिस्तदादि प्रत्ययेऽङ्गम् इति सूत्रं व्याख्यात।

१०. स्तम्भयोः स्थितान् परस्परसम्बद्धान् मेलयत।

| क-स्तम्भः | ख-स्तम्भः |
| --- | --- |



| | |
|---|---|
| १) इक्श्तिपौ धातुनिर्देशे | क) गुरुसंज्ञाविधायकं सूत्रम् |
| २) हलन्त्यम् | ख) ग्रहणकशास्त्रम् |
| ३) न विभक्तौ तुस्माः | ग) अ ए औ एते गुणसंज्ञकाः |
| ४) आदिरन्त्येन सहेता | घ) निपातसंज्ञाविधायकं सूत्रम् |
| ५) अणुदित्सवर्णस्य चाप्रत्ययः | ङ) धातुपाठे पठितानां धातुसंज्ञा |
| ६) वृद्धिरादैच् | च) धातुप्रकटनम् |
| ७) अदेङ् गुणः | छ) इत्ससंज्ञाविधायकं सूत्रम् |
| ८) दीर्घं च | ज) प्रत्याहारनिर्माणाय सूत्रम् |
| ९) चादयोऽसत्त्वे | झ) आ ऐ औ एते वृद्धिसंज्ञकाः |
| १०) भूवादयो धातवः | ञ) इत्संज्ञानिषेधसूत्रम् |

११. स्तम्भयोः स्थितान् परस्परसम्बद्धान् मेलयत।

| क-स्तम्भः | ख-स्तम्भः |
|---|---|
| १) सूत्रे विशेषणम् | क) दन्तोष्ठम् |
| २) सूत्रे तपरः | ख) तदन्तविधिः |
| ३) सूत्रे अन्त्यः हल् | ग) परेण णकारेण |
| ४) अविधीयमानः अण् | घ) कण्ठतालु |
| ५) सूत्रे समानविभक्तिकं पदद्वयम् | ङ) कण्ठोष्ठम् |
| ६) अण् | च) तदन्तस्य संज्ञा |
| ७) इण् | छ) तत्कालस्य सवर्णस्य संज्ञा |
| ८) वकारः | ज) सवर्णस्य संज्ञा |
| ९) एकारः | झ) पूर्वेण णकारेण |
| १०) ओ | ञ) इत्संज्ञा |

१२. स्तम्भयोः स्थितान् परस्परसम्बद्धान् मेलयत।

| क-स्तम्भः | ख-स्तम्भः |
|---|---|
| १) चादयः | क) अवसानम् |



| | |
|---|---|
| २) यणः इक् | ख) संयोगः |
| ३) क्रियान्वितः प्रादिः | ग) संहिता |
| ४) स्वरादि | घ) लोपः |
| ५) अव्यवहितं हल्द्वयम् | ङ) तदादिविधिः |
| ६) तिङन्तम् | च) निपात इति संज्ञा |
| ७) अव्यवहितम् अच्-द्वयम् | छ) सम्प्रसारणम् |
| ८) वर्णोच्चारणाभावः | ज) अव्ययम् |
| ९) प्रसक्तस्य उच्चारणाभावः | झ) पदम् |
| १०) सूत्रे सप्तम्यन्तं पदद्वयम् | ञ) उपसर्गः |

स्तम्भप्रश्नानाम् सूचकोत्तराणि -

१०) १)-च), २)-छ), ३)-ञ), ४)-ज), ५)-ख), ६)-झ), ७)-ग), ८)-क), ९)-घ), १०)-ङ)

११) १)-ज), २)-ङ), ३)-छ), ४)-झ), ५)-ञ), ६)-क), ७)-ख), ८)-घ), ९)-च), १०)-ग)

१२) १)-च), २)-छ), ३)-ञ), ४)-ज), ५)-ख), ६)-झ), ७)-ग), ८)-क), ९)-घ), १०)-ङ)



## पाठगतप्रश्नानाम् उत्तराणि

### उत्तराणि-१

१. आ ऐ औ।

२. अ ए ओ।

३. भूवादयो धातवः।

४. सनाद्यन्ता धातवः।

५. १)

६. २)

७. १)

८. १)

### उत्तराणि-२

९. वर्णानाम् उच्चारणाभावः अवसानसंज्ञकः भवति।

१०. द्वयोः वर्णयोः मध्ये अर्धमात्राकालिकव्यवधानं यदि भवति तर्हि स सन्निकर्षः संहिता इत्युच्यते।

११. भवति।



१२. द्वौ।

१३. न।

१४. नमो नारायणाय इति मन्त्रे न् अ (लघु) म् ओ (गुरु) न् आ (गुरु) र् आ (गुरु) य् अ (लघु) ण् आ (गुरु) य् अ (लघु)।

१५. गुरु।

१६. २)

१७. ४)

१८. २)

१९. २)

२०. ४)

२१. ३)

२२. १)

**उत्तराणि-३**

२३. अपृक्तः।

२४. सुबन्तं तिङन्तं च।

२५. द्वन्द्वसमासस्य अन्ते विद्यमानम् द्वन्द्वसमासस्य अनङ्गभूतम् पदम् द्वन्द्वसमासे विद्यमानैः पदैः प्रत्येकम् अभिसम्बध्यते, अन्वेति इति।

२६. द्विविधम् पदम्। सुबन्तं तिङन्तं चेति।

२७. आम्।

२८. य् ।

२९. प्राग्रीश्वरान्निपाताः (१.४.५६) इति सूत्रात् प्रभृति अधिरीश्वरे (१.४.९७) इति सूत्रात् प्राक् मध्यपातिनां निपतसंज्ञा भवति।

३०. ४)

३१. २)

३२. ३)

**उत्तराणि-४**

३३. प्राग्रीश्वरान्निपाताः इति सूत्रात् प्रभृति अधिरीश्वरे इति सूत्रात् प्राक् मध्यपातिनां निपातसंज्ञा भवति।

३४. सत्त्वं द्रव्यम् भवति। यथा मृद् मरुद् जलम् वह्निः इत्यादिकं द्रव्यम्।



३५. प्रादयः द्वाविंशतिः। ते च - प्र। परा। अप। सम्। अनु। अव। निस्। निर्। दुस्। दुर्। वि। आङ्। नि। अधि। अपि। अति। सु। उत्। अभि। प्रति। परि। उप।

३६. क्रियया अन्वितार्थाः प्रादयः उपसर्गसंज्ञाः भवन्ति।

३७. क्रियया अन्वितार्थाः प्रादयः गतिसंज्ञाः भवन्ति।

३८. स्वरादयः निपाताः च अव्ययसंज्ञाः भवन्ति।

३९. न।

४०. ४)

४१. १)

४२. ३)

४३. १)

४४. ३)

**उत्तराणि-५**

४५. ईदूदन्तयोः नित्यस्त्रीलिङ्गयोः नदी इति संज्ञा।

४६. न।

४७. सम्प्रसारणम्।

४८. यस्मात् प्रत्ययविधिस्तदादि प्रत्ययेऽङ्गम्।

४९. ई च गणः (७.४.९७) इति सप्तमाध्यायस्य अन्तिमसूत्रं यावत् पञ्चसु पादेषु व्याप्नोति।

५०. निष्प्रवाणिश्च (५.४.१६०) इति पञ्चमाध्यायस्य अन्तिमसूत्रं यावत् त्रयाणाम् अध्यायानाम् द्वादशसु पादेषु व्याप्तः।

५१. १), ५२. १), ५३. ३), ५४. १), ५५) ३)

।।इति चतुर्थः पाठः।।





# ५

# परिभाषाप्रकरणम्

## प्रस्तावना

पूर्वस्मिन् पाठे काश्चन मुख्याः संज्ञाः याः व्याकरणे यत्र तत्र प्रयुक्ताः ताः आलोचिताः। तस्मिन् पाठे संज्ञासूत्राणि सन्ति। अस्मिन् पाठे परिभाषासूत्राणि आलोच्यन्ते। सूत्रस्य प्रकाराः यत्र आलोचिताः तत्र परिभाषाविषये किञ्चित् परिचयः जातः। अनियमे नियमकारिणी परिभाषा इति तत्र पठितम्। अनियमः कथं भवति। अनियमः उत्पन्नः चेत् तद्दूरीकरणाय का परिभाषा प्रयोक्तव्या इति एतेषां विषयाणां स्पष्टं ज्ञानम् आवश्यकम्। परिभाषायाः च चिह्नम् लिङ्गम् वा भवति। यत्र यत्परिभाषायाः लिङ्गम् उपलभ्यते तत्र सा परिभाषा संचार्यते। अतः परिभाषालिङ्गज्ञानम् आवश्यकम्।

पाणिनिव्याकरणे पञ्चमी षष्ठी सप्तमी एतासां विभक्तीनाम् अर्थाः लौकिकव्याकरणतः भिन्नाः सन्ति। तासाम् अर्थनिर्णयाय काश्चन परिभाषाः अस्मिन् पाठे सन्ति।

यदा एकस्य स्थानिनः एकाधिकाः सम्बन्धिनः आदेशाः वा भवन्ति तदा कस्य केन सम्बन्धः, कस्य कः आदेशः इति निर्णयाय काश्चन परिभाषाः सन्ति।

कदाचित् एकं कार्यं कर्तुम् एकाधिकानि सूत्राणि आयान्ति। तदा तेषां बलाबलविचारः आवश्यकः भवति। परिभाषा एव विरोधे सति व्यवस्थां करोति। एवं विरोधपरिहाराय काश्चन परिभाषाः सन्ति।

यथा पारिभाषिकशब्दानां ज्ञानं विना न किमपि शास्त्रं बोद्धुं शक्यते तथैव परिभाषाणां ज्ञानं विना व्याकरणशास्त्रे अनियमपरिहारः नैव कर्तुं शक्यते। अतः परिभाषाध्ययनम् अत्यन्तं महत्त्वपूर्णविषयः अस्ति। तस्मात् परिभाषाणाम् सम्यक् अध्ययनं कृत्वा अग्रिमप्रकरणानि पठनीयानि इति किम्वु वक्तव्यम्।

सूत्रे यानि पदानि सन्ति, किञ्च यानि पदानि अनुवृत्त्यादिभिः लभ्यन्ते, तेषां समेषामपि विभक्तिवचनादिकम् सूत्रव्याख्यायाम् उच्यते। यथा - इको यणचि इति सूत्रे इकः इति षष्ठ्येकवचनान्तम् पदम्। यण् इति प्रथमैकवचनान्तं पदम्। अचि इति सप्तम्येकवचनान्तं पदम्। अस्य प्रकटनस्य लाघवाय इकः (६/१), यण् (१/१), अचि (७/१) इत्यपि उपायावलम्बः क्रियते। तत्र इकः (षष्ठी/एकवचनम्) इत्येव इकः (६/१) इति रूपेण प्रकट्यते। अचि (सप्तमी/एकवचनम्) इत्येव अचि (७/१) इति रूपेण प्रकट्यते। अयमुपायः तत्र तत्र अवगन्तव्यः।



## उद्देश्यानि

अमुम् पाठम् पठित्वा भवान् -

- परिभाषा का भवति इति जानीयात्।
- परिभाषाणां लिङ्गानि जानीयात्



- सूत्रे प्रक्रियायाम् अनियमे सति अनियमं परिहर्तुं प्रभवेत्।
- एकत्र उपस्थितानां विधीनां विरोधे सति विरोधं परिहर्तुं समर्थो भविष्यति।
- परिभाषासूत्राणि व्याख्यातुं प्रभवेत्।
- व्यारकणसम्बद्धानां बहून् नूतनविषयान् ज्ञास्यति।

## प्रस्तुतिः

### व्याकरणस्य सरणी

शिष्टजनैः व्यवहृताः शब्दाः एव साधुशब्दाः कथ्यन्ते। साधुशब्दाः के इति ज्ञानं व्याकरणशास्त्रं कारयति। शब्दाः तु शिष्टानां व्यवहारे सिद्धाः एव सन्ति। बहवः शब्दाः सन्ति। परन्तु तेषां समेषां ज्ञानं लघुना उपायेन भवतु इति उद्देश्येन एकैकस्य शब्दस्य विभागं परिकल्प्य इयं प्रकृतिः अयं प्रत्ययः इति व्यवस्था कृता। एतयोः प्रकृतिप्रत्यययोः मेलनेन यद् शब्दस्वरूपं निष्पद्यते तद् रूपं साधु इति व्याकरणप्रक्रियायाः सारः। प्रकृतिप्रत्ययानां मेलनाय सूत्राणि लिखितानि। तेषां मेलनाय तानि सूत्राणि कार्याणि कुर्वन्ति।

### शब्दस्वरूपम्

शब्दे क्रमशः विद्यामानाः वर्णाः शब्दस्य स्वरूपम् भवति। यथा 'रामाद्' इति पदस्य स्वरूपम् भवति 'र् आ म् आ द्' इति क्रमशः विद्यमानाः वर्णाः। एवं रामाद् इति शब्दस्य स्वरूपं भवति - पञ्चानां वर्णानाम् समुदायः। सदा समुदायः एव स्वरूपं भवतीति न। एकः वर्णः अपि शब्दस्वरूपं भवितुम् अर्हति। वर्णसमुदायः वा शब्दस्वरूपं भवितुमर्हति। यथा 'राम' इति वर्णसमुदायात्मकं शब्दस्वरूम्। तस्मात् परं 'भ्याम्' इति प्रत्ययः भवति। 'भ्याम्' इति प्रत्ययः अपि वर्णसमुदायः एव। 'भ्याम्' इति एकं शब्दस्वरूपम्। रामशब्दात् परम् 'औ' इति प्रत्ययः भवति। अत्र 'औ' इति एकः वर्णः, न तु वर्णसमुदायः। अतः 'औ' इति एकं शब्दस्वरूम्।

### आगमादिकम्

कस्माच्चित् शब्दस्वरूपात् परम् किमपि शब्दस्वरूपं योज्यते। यद् योज्यते तत् शब्दस्वरूपमेव **प्रत्ययः** इति कथ्यते। क्वचित् एकं शब्दस्वरूपम् अपरस्य अवयवरूपेण योज्यते। अयमवयवः एव **आगमः** इति कथ्यते। क्वचित् एकं शब्दस्वरूम् अपसार्य तस्य स्थाने अपरं शब्दस्वरूपं विधीयते। यस्य अपसारणं क्रियते, यः निवर्तते, स **स्थानी** इति कथ्यते। यत् शब्दस्वरूपम् विधीयते, स्थानिनं निवर्तयति, स **आदेशः** इति कथ्यते। क्वचित् किमपि शब्दस्वरूपं केवलं लुप्यते। इदं शब्दस्य अभावसाधनम् प्रायः **लोपः** इति कथ्यते।

इत्थम् किमपि शब्दस्वरूपं केवलम् आनीयते, किमपि केवलम् अपसार्यते, किमपि अपसार्य तस्य स्थाने अपरं शब्दस्वरूपम् आनीयते, किमपि शब्दस्वरूपम् अवयवरूपेण योज्यते इति एवंविधानि वस्तुतः कार्याणि सूत्रद्वारा भवन्ति।



### टित् कित् मित् ङित् शित्

इत् इति काचित् संज्ञा अस्ति इति संज्ञाप्रकरणे भूयः आलोचितम्। यस्य शब्दस्वरूपस्य टकारः इत्-संज्ञकः भवति तत् शब्दस्वरूपम् टित् इति कथ्यते। टकारः इत् यस्य स टित् इति समासः प्रदर्श्यते। यथा अट् इति, अत्र हलन्त्यम् इति सूत्रेण टकारः इत्-संज्ञकः। अतः अट् टित् इति कथ्यते। ककारः इत् यस्य स कित्। यथा वुक् इति। मकारः इत् यस्य स मित्। यथा नुम् इति। शकारः इत् यस्य स शित्। यथा शप् इति। ङकारः इत् यस्य स ङित्। यथा अवङ् इति।

### अल्-बोधकम् पदम् , अल्-समुदायबोधकम् पदम्

शब्दस्वरूपबोधनाय किमपि पदं प्रयुज्यते। तत् पदं बोधकं भवति। शब्दस्वरूपं च तस्य बोध्यः अर्थः भवति। यथा कमेर्णिङ् इति एकं सूत्रम्। अत्र कमेः इति 'कमि'शब्दस्य पञ्चम्यन्तम् रूपम्। अत्र कमिशब्दस्य अर्थः अस्ति कम् इति धातुः। अतः एव कमि इति शब्दः बोधकः वाचकः अस्ति। कम् इति धातुः तस्य बोध्यः वाच्यः अर्थः अस्ति। कमि इति शब्दः कम् इति धातुसमर्पकः इत्यपि कथ्यते। संज्ञा संज्ञिनं समर्पयति। कमि इति संज्ञा कम् इति शब्दस्वरूपं समर्पयति। कम् इति शब्दस्वरूपम् अल्-समुदायः अस्ति अर्थात् वर्ण-समुदायः अस्ति। अत एव कमि इति पदम् अल्-समुदायसमर्पकम् अथवा अल्-समुदायबोधकम् इति कथ्यते। णिङ् इत्यस्य ङकारः इत्-संज्ञकः, णकारः इत्-संज्ञकः। ङकारणकारयोः लोपः भवति। अतः केवलम् इकारः अवशिष्यते। अत्र णिङ् संज्ञा, इ संज्ञी। णिङ् इति पदम् इकारम् समर्पयति। इ इति शब्दस्वरूपम् केवलम् एकः अल् अस्ति, न तु अल्-समुदायः। अतः णिङ् इति पदम् अल्-बोधकम् अस्ति।

### विधीयमानस्य स्वरूपम्

यः विधीयते तस्य परिभाषाप्रकरणोपयोगि स्वरूपमत्र उच्यते। यत् कार्यं विधीयते तस्य एवं स्वरूपं भवति - १) एकाल् (एकः वर्णः), २) अनेकाल् (वर्णसमुदायः), ३) ङित् , ४) शित् , ५) टित् , ६) कित् , ७) मित् , ८) लोपः। तत्रापि - प्रत्ययः आदेशः आगमः लोपः इति चातुर्विध्यम् विधीयमानस्य।

### अविधीयमानस्य स्वरूपम्

यः अविधीयमानः तस्य परिभाषाप्रकरणोपयोगि स्वरूपमत्र उच्यते। १) स्थानी - अर्थात् यस्य अपसारणं भवति सः।, २) आगमी - यत् शब्दस्वरूपम् उद्दिश्य आगमः विधीयते तत् शब्दस्वरूपम्।

प्रकारान्तरेण - १) एकः वर्णः - एकाल् , २) एकाधिकः वर्णः - अल्समुदायः।

### अल्-बोधकम् अल्-समुदायबोधकम् च

यत् पदम् एकम् अलम् समर्पयति, बोधयति, तत् पदम् अल्-समर्पकम् अथवा अल्-बोधकम्। यथा त्यदादीनामः इत्यत्र। त्यदादीनाम् अः इति पदच्छेदः। त्यद् तद् इत्यादिशब्दानाम् अन्त्यस्य वर्णस्य



स्थाने अ इति एकः अल् आयाति। अतः अः इति पदम् अल्-बोधकम्। इको यणचि इति सूत्रे इक् इति प्रत्याहारः। तस्य अर्थस्तु इ उ ऋ ऌ इति चत्वारः वर्णाः। परन्तु लक्ष्ये एककालं सर्वे चत्वारः वर्णाः एकत्र नोपलभ्यन्ते। अतः कोऽपि एकः वर्णः अस्ति चेत् पर्याप्तम्। अतः एव इक् इति शब्दः लक्ष्ये एकवारम् एकम् एव वर्णम् समर्पयति। अतः एतादृशाः प्रत्याहाराः सर्वेऽपि अल्-बोधकाः। मिदेर्गुणः इत्यस्य अर्थः मिद्-धातोः गुणः भवतु इति। तत्र गुणः इति पदम् एककालम् अ ए ओ इति त्रयाणां योजनं न करोति। एकवारम् केवलम् एकः एव वर्णः योज्यते। तस्मात् गुणः इति पदम् अल्-बोधकम्।

यत् पदम् अल्समुदायं समर्पयति, बोधयति, तत् पदम् अल्-समुदाय-समर्पकम् अथवा अल्-समुदाय-बोधकम्। यथा त्यदादीनामः इत्यत्र। त्यदादीनाम् अः इति पदच्छेदः। त्यद् तद् इत्यादिशब्दानाम् अन्त्यस्य वर्णस्य स्थाने अकारः विधीयते। त्यदादीनाम् इति पदम् - त्यद् तद् इत्यादिशब्दान् समर्पयति। अतः त्यदादीनाम् इति पदम् अल्-समुदाय-बोधकम्। मिदेर्गुणः इत्यस्य अर्थः मिद्-धातोः गुणः भवतु इति। तत्र मिदेः इति पदम् मिद् इति धातुं बोधयति, समर्पयति। मिद् इति धातुः तु वर्णसमुदायः। तस्मात् मिदेः इति पदम् अल्-समुदाय-बोधकम्।

### विभक्तिनिर्दिष्टम् पदम्

सूत्रे पदस्य काचित्तु विभक्तिः भवति एव। इको यणचि इति सूत्रे इकः इति षष्ठ्यन्तम् पदम्। अर्थात् षष्ठीनिर्दिष्टम् पदम्। अच् इति शब्दस्य अचि इति सप्तमी अस्ति। अचि इति सप्तम्यन्तम् पदम् अर्थात् सप्तमीनिर्दिष्टम् पदम्। यण् इति प्रथमानिर्दिष्टम् पदम्। षष्ठीनिर्दिष्टस्य इकः इति पदस्य अर्थः - इ उ ऋ ऌ इति वर्णाः।

पञ्चमी भयेन इति सूत्रे पञ्चमी इति प्रथमान्तं पदम्, अर्थात् प्रथमानिर्दिष्टम् पदम्। भयेन इति तृतीयान्तम् पदम्। सिंहभयम् इत्यस्य समासस्य सिंहाद् भीतः इति विग्रहः। प्रथमानिर्दिष्टस्य पञ्चमी इति पदस्य अर्थः भवति अत्र सिंहाद् इति पञ्चम्यन्तम् पदम्।

### अनिर्धारितसम्बन्धविशेषा षष्ठी

यदा कुत्रापि कश्चन सम्बन्धः भवति तदा स सम्बन्धः सदा द्वयोः पदार्थयोः मध्ये एव भवति। एकस्य एव पदार्थस्य सम्बन्धः नाङ्गीक्रियते। सदैव एकस्य पदार्थस्य सम्बन्धः अपरेण पदार्थेन सह एव भवति।

षष्ठ्याः अर्थः सम्बन्धः इति सुविदितम् समेषाम्। पदस्य, धातोः, प्रत्ययस्य, इकः, झलाम् इत्यादीनि पदानि षष्ठ्यन्तानि। अत्र धातु+षष्ठी अस्ति अर्थात् धातु+सम्बन्धः इति अस्ति। अत्र कश्चन धातुः अस्ति, तस्य सम्बन्धः इति तदर्थः। परन्तु यावत् अपरः पदार्थः न उल्लिख्यते तावत् अयं सम्बन्धः केन सह अस्ति इति निर्धारणं निश्चयः वा न भवति। किञ्च कीदृशः सम्बन्धः इत्यपि निर्णेतुं न शक्यते। अर्थात् सम्बन्धस्य कः प्रकारः, कः सम्बन्धविशेषः इति अज्ञानम् तदवस्थम्। परन्तु षष्ठीप्रयोगेन इदं तु ज्ञायते यत् कश्चन सम्बन्धः अस्ति, अर्थात् सम्बन्धसामान्यम् अस्ति, परन्तु सम्बन्धविशेषः न ज्ञायते



इति। कदा सम्बन्धविशेषस्य ज्ञानं भविष्यति। येन अपरेण पदार्थेन सम्बन्धः अस्ति तस्य यदि उल्लेखः स्यात् तर्हि सम्बन्धविशेषः सुबोधः। अयम् अपरः पदार्थः अनुयोगी इति कथ्यते।

यथा - रामस्य इति एतावन्मात्रम् उक्तम्। तदा इदन्तु ज्ञायते यत् राम इति जनः अस्ति, तस्य केनचित् सम्बन्धः अस्ति। परन्तु सम्बन्धस्य कः प्रकारः, कः सम्बन्धविशेषः इति न ज्ञायते। कुतः एवम्। अपरः पदार्थः, अनुयोगी नोल्लिखितः इति हेतोः। यदि तत्र अपरः पदार्थः, अनुयोगी उल्लिख्यते तदा सम्बन्धस्य प्रकारः, कतमः सम्बन्धः इति अपि सुस्पष्टं भवेत्। यथा - रामस्य धनम् इति। अत्र राम+षष्ठी, धनम् इति अस्ति। अत्र धनम् इति अपरः पदार्थः, अनुयोगी उल्लिखितः अस्ति। तदा रामस्य धनेन कः सम्बन्धः इति निर्धारयितुम् शक्यते। स च सम्बन्धः स्वस्वामिभावसम्बन्धः इति।

सूत्रे षष्ठ्यन्तम् पदम् अस्ति, अर्थात् षष्ठीनिर्दिष्टं पदम् अस्ति। परन्तु अनुयोगी न उल्लिखितः। तत्र सम्बन्धविशेषः कः इति निर्धारणं न भवति। अतः अत्र विद्यमाना षष्ठी अनिर्धारितसम्बन्धविशेषा षष्ठी अस्ति। न निर्धारितः सम्बन्धविशेषः यस्याः सा इति विग्रहार्थः। ईदृशी षष्ठी स्थानषष्ठी इति उच्यते।

## [ ५.१]  आद्यन्तौ टकितौ॥ (१.१.४६)

**सूत्रार्थः** - टित्कितौ यस्य विहितौ तस्य आद्यन्तावयवौ स्तः।

**सूत्रव्याख्या** - परिभाषासूत्रमिदम्। आद्यन्तौ टकितौ इति द्वे पदे अस्मिन् सूत्रे। आदिः च अन्तः च इति आद्यन्तौ इति इतरेतरयोगद्वन्द्वसमासः। टः च कः च इति टकौ इति इतरेतरयोगद्वन्द्वसमासः। टः इत्यत्र टकाराद् अकारः अनायासेन उच्चारणाय अस्ति। इत् च इत् च इति इतौ इति एकशेषः। टकौ इतौ ययोः तौ टकितौ इति बहुव्रीहिसमासः। **द्वन्द्वादौ द्वन्द्वमध्ये द्वन्द्वान्ते श्रूयमाणं पदं प्रत्येकमभिसंबध्यते** इति नियमः। अर्थात् द्वन्द्वसमासस्य आदौ मध्ये अन्ते वा विद्यमानम् द्वन्द्वसमासस्य अनङ्गभूतम् पदम् द्वन्द्वसमासे विद्यमानैः पदैः प्रत्येकम् अभिसम्बध्यते, अन्वेति इति। इत् इति पदं द्वन्द्वसमासस्य अवयवः नास्ति, किन्तु द्वन्द्वसमासस्य अन्ते अस्ति। अतः तस्य ट् इति क् इति द्वाभ्याम् शब्दाभ्याम् अभिसम्बन्धः अर्थात् अन्वयः भवति। एवञ्च टित् कित् इति निष्पद्यते। किञ्च सूत्रार्थो भवति - टित्कितौ ययोः विहितौ तस्य आद्यन्तावयवौ स्तः। अर्थात् यम् उद्दिश्य टित् विहितः स टित् तस्य आद्यावयवः भवति। यम् उद्दिश्य कित् विहितः स कित् तस्य अन्त्यावयवः भवति। यः षष्ठीनिर्दिष्टः तस्य टित् आदिः भवति, कित् अन्तः भवति इति सुगमः अर्थः।

**उदाहरणम्** - १) आर्धधातुकस्येड्वलादेः (७.२.३५) इति एकं सूत्रम्। अनेन सूत्रेण इट् विधीयते। भविष्यति इति रूपसाधनप्रक्रियायाम् 'भू स्य ति' इति स्थितिः भवति। तत्र 'स्य' इति आर्धधातुकसंज्ञकः प्रत्ययः अस्ति। वलादिः अपि अस्ति। अत्र स्य इति आर्धधातुकम् उद्दिश्य इट् विहितः अस्ति। अतः 'स्य' इत्यस्य 'इट्' भवति। 'इट्' टित् अस्ति। अतः स आदिः अवयवः भवति। तेन 'इस्य' इति लभ्यते।

२) भुवो वुग् लुङ्लिटोः (६.४.८८) इति एकं सूत्रम्। बभूव इति रूपसाधनप्रक्रियायाम् भू अ इति स्थितिः भवति। तत्र 'भू' इत्यस्य 'वुक्' विधीयते। 'वुक्' कित् अस्ति। अत्र भू इति धातुम् उद्दिश्य वुक्



विहितः अस्ति। अतः स 'भू' इत्यस्य अन्त्यः अवयवः भवति। 'वुक्' इत्यनेन केवलं वकारः एव भवति। 'भू' इत्यस्य ऊकारात् परं वकारः योज्यते। तदा भूव्' अ इति स्थितिः जायते।

**परिभाषायाः प्रवृतिक्षेत्रम् -** अष्टाध्याय्याम् प्रत्ययः(३.१.१) परश्च (३.१.२) इति अधिकारसूत्रद्वयमस्ति। तयोः अधिकारः पञ्चमाध्यायस्य समाप्तिं यावद् अस्ति। अतः तृतीयचतुर्थपञ्चमेषु एषु त्रिषु अध्यायेषु आद्यन्तौ टकितौ इति परिभाषा कार्यं न करोति। एतान् त्रीन् अध्यायान् विहाय अन्यत्र इयं परिभाषा सञ्चारणीया। अयं बाध्यविशेषचिन्तापक्षः इति उच्यते। षष्ठी स्थानेयोगा इत्यस्य इयं परिभाषा अपवादः। अर्थात् यत्र स्थानषष्ठी अस्ति तत्र इयं परिभाषा न प्रवर्तते।

## [ ५.२] मिदचोऽन्त्यात् परः॥ (१.१.४७)

**सूत्रार्थः -** अचां मध्ये यः अन्त्यः अच्, तस्मात् परः मित् भवति। किञ्च यम् समुदायम् उद्दिश्य मित् विहितः तस्य समुदायस्य अन्तावयवः भवति।

**सूत्रव्याख्या -** परिभाषासूत्रमिदम्। अस्मिन् सूत्रे चत्वारि पदानि सन्ति। मित् अचः अन्त्यात् परः इति सूत्रगतपदच्छेदः। मित् इति प्रथमान्तं पदम्। मकारः इत् यस्य स मित् इति बहुव्रीहिसमासः। अचः इति षष्ठ्येकवचनान्तम् पदम्। अत्र इयं षष्ठी निर्धारणे। अन्त्यात् इति पञ्चम्येकवचनान्तं पदम्। परः इति प्रथमैकवचनान्तम् पदम्। आद्यन्तौ टकितौ (१.१.४६) इति सूत्रात् समासघटकः अन्तः इति शब्दः अनुवर्तते। सूत्रार्थो भवति - अचां मध्ये यः अन्त्यः अच्, तस्मात् परः यम् समुदायम् उद्दिश्य मित् विहितः, स मित् तस्य समुदायस्य अन्तावयवः भवति।

अत्र अंशद्वयम् अस्ति। १) समुदायस्य अन्तिमात् अच्-वर्णात् परं मित् योज्यते। २) मित् समुदायस्य अन्तावयवः भवति।

**उदाहरणम् -** इदितो नुम् धातोः इति एकं सूत्रम्। धातुपाठे पठितः धातुः यदि इदित् स्यात् अर्थात् तस्य इत् (इकारः) इत्संज्ञकः स्यात् तर्हि तस्य धातोः नुम् भवति इति तत्सूत्रार्थः। 'टु नदि' इति धातोः इत् इत्-संज्ञकः अस्ति। नद् इति शेषः। नद् इति वर्णसमुदाये नकारात् परः अकारः अच् अस्ति। स एक एव अच् अस्ति। अतः स एव अचां मध्ये अन्त्यः अच् अस्ति। नद् इति समुदायम् उद्दिश्य विहितः नुम् अस्ति। स मित् अस्ति। तस्य प्रयोगः अकारात् परं भवति। अतः 'न् अ न् द्' इति स्थितिः भवति। ततः परं प्रक्रियया नकारस्य अनुस्वारः, अनुस्वारस्य परसवर्णः च भवति। तेन नन्द् इति निष्पद्यते। नन्दति इत्यादिरूपाणि भवन्ति।

**परिभाषायाः प्रवृतिक्षेत्रम् -** समग्रायाम् अष्टाध्याय्याम् यत्र कुत्रापि मित् विधीयते चेत् प्रकृतपरिभाषायाः तत्र सञ्चारः कर्तव्यः। स्थानेयोगत्वस्य प्रत्ययपरत्वस्य च इयं परिभाषा अपवादः अस्ति। अस्याः बाध्यसामान्यचिन्तापक्षः अस्ति। अर्थात् मद्विषये यद् यत् प्राप्तं तत् सर्वं मया बाध्यम् इति।





## पाठगतप्रश्नाः-१

१. द्वन्द्वादौ द्वन्द्वमध्ये द्वन्द्वान्ते श्रूयमाणं पदं प्रत्येकमभिसंबध्यते इत्यस्य अर्थः कः।

२. आद्यन्तौ टकितौ इति परिभाषा कदा प्रवर्तते।

३. मिदचोऽन्त्यात् परः इति परिभाषा कदा प्रवर्तते।

४. आद्यन्तौ टकितौ इति मिदचोऽन्त्यात् परः इति अनयोः परिभाषयोः प्रवृत्तिक्षेत्रम् उच्यताम्।

५. क) विधीयमानः टित् आद्यावयवः एव भवति।

ख) विधीयमानः मित् अचः अन्त्यात् परः एव भवति।

अनयोः कथनयोः विषये युक्तम् युग्मं चिनुत।

१) (क) सत्यम् (ख) असत्यम्   २) (क) सत्यम् (ख) सत्यम्

३) (क) असत्यम् (ख) सत्यम्   ४) (क) असत्यम् (ख) असत्यम्

६. क) प्रत्ययाधिकारे विहितः टित् आद्यावयवः भवति।

ख) प्रत्ययाधिकारे विहितः मित् अन्त्यावयवः भवति।

अनयोः कथनयोः विषये युक्तम् युग्मं चिनुत।

१) (क) सत्यम् (ख) असत्यम्   २) (क) सत्यम् (ख) सत्यम्

३) (क) असत्यम् (ख) सत्यम्   ४) (क) असत्यम् (ख) असत्यम्

७. सम्बन्धार्थे षष्ठी अस्ति, किन्तु सम्बन्धस्य अनुयोगी नास्ति चेत् सा...

१) स्थानषष्ठी   २) अवयवषष्ठी   ३) अभेदषष्ठी   ४) कारकषष्ठी

८. सम्बन्धविशेषस्य निर्धारणं कदा भवति।

१) अनुयोगिसत्त्वे   २) प्रतियोगिसत्त्वे

३) अनुयोगिप्रतियोगिसत्त्वे   ४) अनुयोगिनः अभावे

९. अन्त्यात् इति कीदृशं पदम्।

१) प्रथमानिर्दिष्टम्   २) तृतीयानिर्दिष्टम्

३) पञ्चमीनिर्दिष्टम्   ४) सप्तमीनिर्दिष्टम्

## [ ५.३]   षष्ठी स्थानेयोगा॥ (१.१.४९)

**सूत्रार्थः** - अनिर्धारितसम्बन्धविशेषा या षष्ठी सा स्थानेयोगा बोद्ध्या।

**सूत्रव्याख्या** - परिभाषासूत्रमिदम्। अस्मिन् सूत्रे षष्ठी स्थानेयोगा इति पदद्वयम् अस्ति। षष्ठी इति प्रथमान्तं पदम्। स्थानेन योगः अस्याः इति स्थानेयोगा इति बहुव्रीहिसमासः। स्थानेयोगा इत्यत्र स्थाने इत्यस्य एकारः निपातनात् इति। षष्ठ्याः अर्थः सम्बन्धः इति। स्थानशब्दस्यार्थः प्रसङ्गः इति।



शब्दशास्त्रे या षष्ठी सा स्थानेयोगा बोद्ध्या इति सूत्रार्थः। सूत्रे किमपि षष्ठ्यन्तं पदम् अस्ति चेत् तस्य यः अर्थः तस्य स्थाने कार्यं कर्तव्यम् इति भावः।

यदा १) अल्-बोधकशब्दः। २) स षष्ठ्यन्तः अस्ति, ३) सा च षष्ठी स्थानषष्ठी अस्ति। ४) यः आदेशः अस्ति स यदि एकाल् अथवा लोपः अस्ति। तदा स आदेशः तम् अलम् अपसार्य निवर्त्य तस्य स्थाने भवति। अयमपि विशेषः अवधेयः यद् यत्र स्थानषष्ठी श्रूयते तत्र अनया परिभाषया स्थाने इति पदम् उपस्थाप्यते।

**उदाहरणम्** - इको यणचि।

**सूत्रार्थसमन्वयः** - इको यणचि इति एकं सूत्रम्। तस्मिन् -

१) इक् इति अल्-बोधकं पदम्। तस्य अर्थस्तु - इ उ ऋ लृ इति चत्वारः एवञ्च तेषां सवर्णाः च इति।

२) इकः इति षष्ठ्यन्तम् पदम्।

३) येन सह इक् इत्यस्य सम्बन्धः अस्ति तदपरं पदम्, अनुयोगि सूत्रे नोल्लिखितम्। अतः एषा षष्ठी अनिर्धारितिसम्बन्धविशेषा अर्थात् स्थानषष्ठी अस्ति।

४) यण् विधेयः अस्ति, अतः स आदेशः अस्ति। तस्य अर्थः तु य् व् र् ल् इति वर्णाः। एक एव वर्णः विधीयते। अतः आदेशः एकाल् अस्ति।

अधुना तत्र - इ उ ऋ लृ इत्येषां वर्णानाम् स्थाने य् व् र् ल् इति वर्णाः क्रमशः विधेयाः इति अर्थः लभ्यते। शम्भु+अर्चा इति उदाहरणे भकारात् परवर्ती यः उकारः सः इक्। स च स्थानी इति कथ्यते। तस्य स्थाने यण् भवति। स च आदेशः इति कथ्यते। उकारस्य स्थाने प्रकृतपरिभाषया वकारः विधीयते। तदा शम्भ्-व्+अर्चा इति स्थितिः भवति। शम्भ्वर्चा इति शब्दः निष्पद्यते।

इको यणचि इत्यादीनि अत्रान्यानि उदाहरणानि।

जसः शी इत्यादिस्थलेषु अनेकाल्शित् सर्वस्य इति परिभाषा प्रवर्तते। तत्र षष्ठी स्थानेयोगा इति परिभाषया स्थाने इति पदम् उपस्थाप्यते।

## [ ५.४] अलोऽन्त्यस्य॥ (१.१.५२)

**सूत्रार्थः** - स्थाने विधीयमानः आदेशः षष्ठ्या निर्दिष्टस्य अन्त्यस्य अलः स्थाने भवति।

**सूत्रव्याख्या** - परिभाषासूत्रमिदम्। अस्मिन् सूत्रे पदद्वयम् अस्ति। अलः अन्त्यस्य इति सूत्रगतपदच्छेदः। अल् इति प्रत्याहारः वर्णपर्यायः। अलः इति षष्ठ्यन्तम् पदम्। अन्ते भवः अन्त्यः। अन्त्यस्य इति षष्ठ्यन्तं पदम्। षष्ठी स्थानेयोगा इति अस्मात् सूत्रात् षष्ठी इति प्रथमान्तम्, स्थाने इति सप्तम्यन्तम् चेति पदद्वयमनुवर्तते। षष्ठी इति प्रथमान्तं तृतीयान्ततया विपरिणमते। 'निर्दिष्टस्य' इति षष्ठ्यन्तम् पदम् अध्याह्रियते। स्थाने इति पदोत्तरं 'विधीयमानः आदेशः' इति प्रथमान्तं पदद्वयम्



अध्याह्रियते। तदा वाक्ययोजना भवति - स्थाने विधीयमानः आदेशः षष्ठ्या निर्दिष्टस्य यः अन्त्यः अल् तस्य स्थाने भवतीति।

अष्टाध्याय्याम् कस्यापि सूत्रस्य व्याख्या यदा क्रियते तदा तस्मिन् विविधानि पदानि इतस्ततः आयान्ति। अत एव सूत्रे यानि पदानि सन्ति ततः अधिकानि पदानि सूत्रस्य अर्थे दृश्यन्ते। तत्र एतैः षड्भिः प्रकारैः पदानि लभ्यन्ते। - १) सूत्रे साक्षात् उच्चारितानि, २) अधिकारेण लब्धानि, ३) अनुवृत्त्या लब्धानि, ४) परिभाषया उपस्थापितानि, ५) आक्षेपात् लब्धानि, ६) अध्याहृतानि। एवम् सर्वाणि पदानि लब्ध्वा या स्थितिः भवति सा पदयोजना इति कथ्यते।

पदयोजनानन्तरम् तत्र तेषु पदेषु यदि १) षष्ठ्यन्तं पदम् अस्ति २) तत् षष्ठ्यन्तम् पदम् अल्-समुदायबोधकम् अस्ति। ३) तत्र या षष्ठी सा स्थानषष्ठी अस्ति। ४) यः आदेशः स यदि एकाल् अथवा लोपः अस्ति। तर्हि इयं परिभाषा प्रवर्तते। अनया परिभाषया स आदेशः अल्-समुदायस्य अन्त्यस्य अलः स्थाने भवति। अत्र नियमद्वयं लभ्यते १) अन्त्यस्य एव आदेशः भवति, २) अलः एव आदेशः भवति इति। इति परिभाषासारः।

यदा एकाल् अथवा लोपरूपः आदेशः विधीयते तदा स कस्यचित् स्थाने भवतु इति निर्दिश्यते। यदि वर्णसमुदायस्य स्थाने आदेशः भवतु इति उक्तं तर्हि स आदेशः समग्रस्य समुदायस्य स्थाने न भवति। स आदेशः समुदायस्य अन्त्यवर्णस्य स्थाने भवति।

**उदाहरणम्** - त्यदादीनामः इति सूत्रे १) त्यदादीनाम् इति षष्ठ्यन्तम् पदम्। २) तत्पदं 'त्यद्' 'तद्' इत्यादिकम् अल्-समुदायं बोधयति। ३) येन अपरेण सह सम्बन्धः तादृशं पदम् अत्र नास्ति। अतः इयं षष्ठी स्थानषष्ठी। ४) अत्र अः अर्थात् अकारः आदेशः। स एकाल् अस्ति। अतः परिभाषायाः संज्ञाराय लिङ्गम् चिह्नं वा अत्र अस्ति। अत एव त्यद् इति समुदायस्य अन्तिमवर्णस्य दकारस्य स्थाने अकारः भवति। त्य+अ इति स्थितिः जायते। ततः परं व्याकरणप्रक्रिया भवति। अग्रे बहुत्र अनया परिभाषया नियमः भवति। तेषु स्थलेषु तथा विवरणमपि कृतमस्ति। अतः तत्र तत्र प्रदेशेषु अपि पठनेन विषयस्य इतोऽपि स्पष्टता भवेत्।

## [ ५.५] ङिच्च॥ (१.१.५३)

**सूत्रार्थः** - अनेकाल् यः ङित् आदेशः सः अन्त्यस्य अलः स्थाने भवति।

**सूत्रव्याख्या** - परिभाषासूत्रमिदम्। द्विपदात्मकं सूत्रम्। ङित् च इति सूत्रगतपदच्छेदः। ङकारः इत् यस्य स ङित्। च इति अव्ययपदम्। अलोऽन्त्यस्य (१.१.५२) इति समग्रं सूत्रमनुवर्तते। अलः इति अन्त्यस्य इति च पदद्वयमपि षष्ठ्यन्तम्। ङित् अन्त्यस्य अलः भवति इति पदयोजना। अनेकाल् ङित् आदेशः अन्त्यस्य अलः स्थाने भवति इति परिभाषार्थः।

**उदाहरणम्** - गो इन्द्रः इति स्थितिः। इन्द्रे च इति सूत्रम्। अनेन सूत्रेण पदान्ते यः एङ् तदन्तः यः गोशब्दः तस्य अवङ् भवति इन्द्रशब्दे परे। अवङ् अनेकाल् ङित् च अस्ति। अनेकाल् शित् सर्वस्य इति परिभाषया अवङ् सर्वस्य स्थाने प्राप्तः। अतः एव इदं सूत्रं सर्वादिशं प्रबाधते। अन्त्यस्य अलः स्थाने



आदेशं सम्पादयति। अत एव गोशब्दस्य अन्त्यः ओकारः तस्य स्थाने अवङ् भवति। तदा गव इन्द्रः इति स्थितिः भवति। ततश्च व्याकरणप्रक्रियया गवेन्द्रः इति रूपनिष्पत्तिः।

## [ ५.६] अनेकाल्शित् सर्वस्य॥ (१.१.५५)

**सूत्रार्थः** - अनेकाल् शित् च आदेशः सर्वस्य स्थाने भवति।

**सूत्रव्याख्या** - परिभाषासूत्रमिदम्। सूत्रेऽस्मिन् पदद्वयम् वर्तते। अनेकाल्शित् सर्वस्य इति पदच्छेदः। न एकः अनेकः इति नञ्-तत्पुरुषसमासः। अनेकः अल् यस्य सः अनेकाल् इति बहुव्रीहिसमासः। शकारः इत् यस्य स शित् इति बहुव्रीहिसमासः। अनेकाल् च शित् च इति अनेकाल्शित् इति समाहारद्वन्द्वसमासः। किमपि पदमत्र नानुवर्तते। अनेकाल् शित् च आदेशः सर्वस्य स्थाने भवतीति सूत्रार्थः।

**उदाहरणम्** - अस्तेर्भूः इति सूत्रम्। अस्तेः भूः इति आदेशः भवतीति तदर्थः। अस्-धातोः भू इति आदेशः विहितः, स भ्+ऊ इति अनेकाल् वर्तते। अतः एव सः सर्वस्य अस् इति धातोः स्थाने भवति।

अनेकाल्शित् सर्वस्य इति सूत्रम् अलोऽन्त्यस्य इति सूत्रस्यापवादः। ङिच्च इति सूत्रम् अनेकाल्शित् सर्वस्य इति सूत्रस्यापवादः अस्ति।

## [ ५.७] आदेः परस्य॥ (१.१.५४)

**सूत्रार्थः** - परस्य यत् विहितं तत् परस्य आदेः अलः स्थाने भवति।

**सूत्रव्याख्या** - परिभाषासूत्रमिदम्। आदेः परस्य इति द्वे पदे अस्मिन् सूत्रे। आदेः इति षष्ठ्येकवचनान्तं पदम्। परस्य इत्यपि षष्ठ्येकवचनान्तम् पदम्। अलोऽन्त्यस्य (१.१.५२) इति सूत्रात् अलः इति षष्ठ्यन्तम् पदमनुवर्तते। परस्य आदेः अलः इति पदयोजना भवति। परस्य यत् कार्यम् उच्यते तत् परस्य आदेः अलः स्थाने भवतीति सूत्रार्थः।

यदि क्वापि पञ्चमीनिर्देशः स्यात् तर्हि परस्य कार्यं विधीयते। तत् कार्यम् यस्य विहितं तस्य यः आद्यः अल् तस्य स्थाने भवति।

यदि क्वापि तस्मादित्युत्तरस्य इति परिभाषा प्रवर्तते तदा इयं परिभाषा प्रवर्तते।

**उदाहरणम्** - ईदासः इति सूत्रम्। अनेन सूत्रेण आसः परस्य शानच्प्रत्ययस्य ईकारः विधीयते। आसः इति पञ्चमीनिर्दिष्टं पदम्। तेन आस् इति अस्मात् परवर्ती यः शानच् (आन) तस्य कार्यम् प्राप्तम्। तेन शानच्-प्रत्ययस्य यः आद्यः अल् आकारः। तस्य स्थाने ईकारः भवति। तदा आस् ईन इति जाते आसीन इति शब्दः निष्पद्यते।



## पाठगतप्रश्नाः-२



१०. शब्दस्वरूपं किम्।

११. इको यणचि इति सूत्रे यण् इति किम् अल्बोधकम् अल्समुदायबोधकं वा पदम्।

१२. किम् अल्बोधकम् पदम्।

१३. का स्थानषष्ठी।

१४. षष्ठी स्थानेयोगा इति परिभाषार्थः लेख्यः।

१५. अलोऽन्त्यस्य इति परिभाषा कदा प्रवर्तते।

१६. ङिच्च इति परिभाषा कदा प्रवर्तते।

१७. अनेकाल्शित् सर्वस्य इति परिभाषा कदा प्रवर्तते।

१८. आदेः परस्य इति परिभाषा कदा प्रवर्तते।

१९. यदा स्थानी एकाल्, आदेशः च लोपः तदा का परिभाषा प्रवर्तते।

१) षष्ठी स्थानेयोगा  २) अलोऽन्त्यस्य

३) ङिच्च  ४) अनेकाल्शित् सर्वस्य

२०. अच् कीदृशं पदम्।

१) अल्-बोधकम्  २) अल्-समुदायबोधकम्

३) स्थानिबोधकम्  ४) प्रत्ययबोधकम्

२१. अल्-समुदायबोधकात् स्थानषष्ठी अस्ति, किञ्च आदेशः एकाल् अस्ति तदा का परिभाषा प्रवर्तते।

१) षष्ठी स्थानेयोगा  २) अलोऽन्त्यस्य

३) ङिच्च  ४) अनेकाल्शित् सर्वस्य

२२. विधीयमानः अनेकाल् शित् च अस्ति चेत् का परिभाषा प्रवर्तते।

१) षष्ठी स्थानेयोगा  २) अलोऽन्त्यस्य

३) मिदचोऽन्त्यात् परः  ४) अनेकाल्शित् सर्वस्य

२३. प्रत्ययभिन्नः विधीयमानः अनेकाल् टित् च अस्ति चेत् का परिभाषा प्रवर्तते।

१) आद्यन्तौ टकितौ  २) अलोऽन्त्यस्य

३) मिदचोऽन्त्यात् परः  ४) अनेकाल्शित् सर्वस्य

२४. इको यणचि इत्यत्र -

क) इक्-विधीयमानः, यण्-अविधीयमानः, अच्-विधीयमानः।

ख) इक्-अविधीयमानः, यण्-विधीयमानः, अच्-अविधीयमानः।



अनयोः कथनयोः विषये युक्तम् युग्मं चिनुत।

१) (क) सत्यम् (ख) असत्यम्  २) (क) सत्यम् (ख) सत्यम्

३) (क) असत्यम् (ख) सत्यम्  ४) (क) असत्यम् (ख) असत्यम्

२५. इको यणचि इत्यत्र कः विधीयमानः कश्च अविधीयमानः।

१) इक्-विधीयमानः, यण्-अविधीयमानः

२) इक्-विधीयमानः, अच्-अविधीयमानः

३) इक्-अविधीयमानः, यण्-विधीयमानः

४) यण्-अविधीयमानः, अच्-अविधीयमानः

२६. अधोलिखितानां केन सह कस्य सम्बन्धः इति युक्तमुत्तरं चिनुत।

| | |
|---|---|
| (क) आदेशः अनेकाल् | (i) षष्ठी स्थानेयोगा |
| (ख) स्थानी अनेकाल्, आदेशः लोपः | (ii) ङिच्च |
| (ग) आदेशः अनेकाल् ङिच्च | (iii) अलोऽन्त्यस्य |
| (घ) आदेशः एकाल् ङिच्च | (iv) अनेकाल्शित् सर्वस्य |

| | (क) | (ख) | (ग) | (घ) |
|---|---|---|---|---|
| १) | (i) | (ii) | (iii) | (iv) |
| २) | (iv) | (iii) | (ii) | (i) |
| ३) | (iii) | (ii) | (i) | (iv) |
| ४) | (ii) | (iii) | (iv) | (I) |

## [ ५.८] तस्मिन्निति निर्दिष्टे पूर्वस्य॥ (१.१.६६)

**सूत्रार्थः** - सप्तमीनिर्देशेन विधीयमानं कार्यं वर्णान्तरेण अव्यवहितस्य पूर्वस्य भवति।

**सूत्रव्याख्या** - परिभाषासूत्रमिदम्। अस्मिन् सूत्रे चत्वारि पदानि सन्ति। 'तस्मिन्' 'इति' 'निर्दिष्टे' 'पूर्वस्य' इति सूत्रगतपदच्छेदः। तस्मिन् इति तत्-सर्वनाम्नः सप्तम्येकवचनम्। तच्च सप्तम्यन्तस्य अनुकरणम्। 'इति' इति अव्ययम्। निर्दिष्टे इति सप्तम्येकवचनम्। पूर्वस्य इति षष्ठ्येकवचनम्। सूत्रार्थो भवति - सूत्रे सप्तम्यन्तं पदम् अस्ति चेत् तस्य यः अर्थः, तस्मात् वर्णान्तरेण अव्यवहितस्य पूर्वस्य कार्यं भवति। एतादृशी सप्तमी परसप्तमी इति उच्यते।

**उदाहरणम्** - इको यणचि। इति एकं सूत्रम्। अस्मिन् सूत्रे इकः इति षष्ठ्यन्तं पदम्। षष्ठीनिर्देशेन कार्यं विधीयते। इयं स्थानषष्ठी। अतः इकः स्थाने कार्यं भवति इति अर्थो लभ्यते। अचि इति सप्तमीनिर्दिष्टं पदम्। सप्तमीनिर्देशेन कार्यं विधीयते। तस्य अर्थः स्वराः इति। अतः अनया परिभाषया अचः



पूर्वस्य कार्यं भवति। वर्णानन्तरेण अव्यवहितस्य कार्यं भवति। अर्थात् अचः अव्यवहितपूर्वं यदि इक् स्यात् तर्हि इकः स्थाने यण् भवति इति समुदितः अर्थः।

इन्द्रे च (६.१.१२०) इति सूत्रे इन्द्रे इति सप्तमी। अत्र इन्द्रशब्दः स्वरूपपरः अर्थात् इन्द्रशब्देन 'इ न् द् र् अ' इति वर्णसमुदायः, आनुपूर्वी ग्राह्या। अत्र इन्द्रशब्देन देवराट् इन्द्रः न ग्राह्यः, नापि समानार्थकः कश्चित् पर्यायशब्दः ग्राह्यः। प्रकृतपरिभाषया सह एकवाक्यतया - इन्द्रशब्दे परे अव्यवहितपूर्वस्य कार्यं स्यादिति अर्थः सुलभः।

इयं परिभाषा कुत्र न प्रवर्तते - यद्यपि सूत्रे सप्तम्यन्तं पदं चेद् इयं परिभाषा प्रवर्तते इति उक्तं तथापि अतिशायने तमप् , कर्तृकर्मणोः कृति, कर्मणि द्वितीया इत्यादिस्थलेषु यत्र सप्तम्यन्तं पदं न स्वरूपपरं, नापि सप्तम्यन्तस्य अर्थे परे पूर्वस्य उक्तं कार्यं सम्भवति तत्र इयं परिभाषा न प्रवर्तते।

## [ ५.९] तस्मादित्युत्तरस्य॥ (१.१.६७)

**सूत्रार्थः** - पञ्चमीनिर्देशेन विधीयमानं कार्यं वर्णान्तरेण अव्यवहितस्य परस्य भवति।

**सूत्रव्याख्या** - परिभाषासूत्रमिदम्। अस्मिन् सूत्रे त्रीणि पदानि सन्ति। 'तस्माद्' 'इति' 'उत्तरस्य' इति सूत्रगतपदच्छेदः। तस्माद् इति पञ्चम्यन्तं पदम्। तच्च पञ्चम्यन्तस्य अनुकरणम्। 'इति' इति अव्ययम्। तस्मिन्निति निर्दिष्टे पूर्वस्य (१.१.६६) इति सूत्राद् निर्दिष्टे इति सप्तम्येकवचनान्तम् पदमनुवर्तते, तच्च पञ्चम्यन्ततया विपरिणमते। उत्तरस्य इति षष्ठ्येकवचनम्। सूत्रार्थो भवति - सूत्रे पञ्चम्यन्तं पदम् अस्ति चेत् , तस्य यः अर्थः तस्मात् वर्णान्तरेण अव्यवहितस्य परस्य कार्यं भवति। ईदृशी पञ्चमी दिग्योगपञ्चमी इत्युच्यते।

अत्र यत् पञ्चम्यन्तं पदम् उच्यते तत् संज्ञापदम् स्यात्। तस्य अर्थः कश्चिद् शब्दः वर्णः वा एव स्यात्। ईदासः इति सूत्रम्। अस्मिन् सूत्रे आसः इति पञ्चम्यन्तम् पदम्। तस्य अर्थः आस् इति शब्दस्वरूपम्। अतः अनया परिभाषया ईदासः इति सूत्रेण आसः परस्य शानच्प्रत्ययस्य ईकारः विधीयते।

**उदाहरणम्** - हलो यमां यमि लोपः (८.४.६४) इति एकं सूत्रम्। अत्र हलः इति पञ्चम्यन्तम् पदम्। तस्य अर्थः हल् इति। यमाम् इति षष्ठ्यन्तम् पदम्। यमि इति सप्तम्यन्तं पदम्। लोपः इति प्रथमान्तं पदम्। हलः इति पञ्चम्यन्तम्। अतः प्रकृतपरिभाषाबलात् हलः परस्य कार्यं भवति। वर्णान्तरेण अव्यवहितस्य कार्यं भवति। अर्थात् हलः अव्यवहितः परः यदि यम् स्यात् तर्हि यमः लोपः भवति, यदि अयं यम् यमः अव्यवहितः पूर्वः च स्यात् इति समुदितः अर्थः।

**इयं परिभाषा कुत्र न प्रवर्तते** - यद्यपि सूत्रे पञ्चम्यन्तं पदं चेद् इयं परिभाषा प्रवर्तते इति उक्तं तथापि पञ्चम्यन्तं पदं न स्वरूपपरं, नापि पञ्चम्यन्तस्य अर्थम् आदाय परस्य उक्तं कार्यं सम्भवति तत्र इयं परिभाषा न प्रवर्तते।





## पाठगतप्रश्नाः ३

२७. तस्मिन्निति निर्दिष्टे पूर्वस्य इति परिभाषायाः अर्थं लिखत।

२८. तस्मादित्युत्तरस्य इति परिभाषायाः अर्थं लिखत।

२९. तस्मिन्निति निर्दिष्टे पूर्वस्य इति परिभाषा कदा प्रवर्तते।

३०. तस्मादित्युत्तरस्य इति परिभाषा कदा प्रवर्तते।

३१. सूत्रे दिग्योगे पञ्चमी अस्ति चेत् कस्य कार्यं बोध्यम्।

१) अव्यवहितपरस्य  २) अव्यवहितपूर्वस्य

३) व्यवहितपरस्य  ४) व्यवहितपूर्वस्य

३२. सूत्रे परसप्तमी अस्ति चेत् कस्य कार्यं बोध्यम्।

१) अव्यवहितपरस्य  २) अव्यवहितपूर्वस्य

३) व्यवहितपरस्य  ४) व्यवहितपूर्वस्य

३३. क) सप्तमीनिर्देशेन विधीयमानं कार्यम् अव्यवहितपरस्य भवति।

ख) पञ्चमीनिर्देशेन विधीयमानं कार्यम् अव्यवहितपूर्वस्य भवति।

अनयोः कथनयोः विषये निम्नं युक्तम् युग्मं चिनुत।

१) (क) सत्यम् (ख) असत्यम्  २) (क) सत्यम् (ख) सत्यम्

३) (क) असत्यम् (ख) सत्यम्  ४) (क) असत्यम् (ख) असत्यम्

---

## [ ५.१०] यथासंख्यमनुदेशः समानाम्॥ (१.३.१०)

**सूत्रार्थः** - समसम्बन्धी विधिः यथासंख्यं स्याद्।

**सूत्रव्याख्या** - परिभाषासूत्रमिदम्। अस्मिन् सूत्रे त्रीणि पदानि सन्ति। यथासंख्यम् अनुदेशः समानाम् इति सूत्रगतपदच्छेदः। संख्याम् अनतिक्रम्य इति यथासंख्यम् इति अव्ययीभावसमासः। अनुदेशः इति प्रथमैकवचनान्तम् पदम्। विधिः विधानम् वा तदर्थः। समानाम् इति सम्बन्धार्थे षष्ठीबहुवचनम्। सूत्रार्थो भवति - समसम्बन्धी विधिः यथासंख्यं स्याद्। अर्थात् कुत्रापि सूत्रे केनचित् सह कस्यचित् सम्बन्धः प्रकटितः। सम्बन्धः यदा भवति तदा यस्य सम्बन्धः भवति स सम्बन्धस्य प्रतियोगी इति कथ्यते। यस्मिन् सम्बन्धः भवति सः अनुयोगी इति कथ्यते। अर्थात् प्रतियोगिनः अनुयोगिना सह सम्बन्धः भवति। यदा प्रतियोगिसंख्या अपिच अनुयोगिसंख्या समाना अस्ति तदा अस्याः परिभाषायाः सञ्चारः कर्तव्यः। किञ्च अर्थः भवति - प्रथमस्य प्रतियोगिनः प्रथमेन एव अनुयोगिना सह सम्बन्धः भवतु इति। द्वितीयस्य प्रतियोगिनः द्वितीयेन एव अनुयोगिना सह सम्बन्धः भवतु। एवम् अवशिष्टानां प्रतियोगिनाम् विषये बोद्ध्यम्। सर्वत्र प्रतियोगी स्थानी एव स्यात् किञ्च अनुयोगी आदेशः आगमः वा एव स्यादिति नियमः नास्ति।



**उदाहरणम् -** एचोऽयवायावः इति सूत्रे एचः इति पदेन ए ओ ऐ औ इति चत्वारः प्रतियोगिनः बोध्यन्ते। अयवायावः इत्यनेन पदेन अय् अव् आय् आव् इति चत्वारः अनुयोगिनः बोध्यन्ते। अतः प्रतियोगिसंख्या अपिच अनुयोगिसंख्या समाना अस्ति। अतः यथासंख्यमनुदेशः समानाम् इति परिभाषया ए इति यः प्रथमः प्रतियोगी, तस्य अय् इति प्रथमेन अनुयोगिना सम्बन्धः बोद्धव्यः। अतः एचोऽयवायावः इति सूत्रेण एकारस्य स्थाने अय् इति आदेशः भवति।

## [ ५.११] स्थानेऽन्तरतमः॥ (१.१.५०)

**सूत्रार्थः -** स्थान्यादेशयोः संख्यावैषम्ये प्रसक्ते स्थानार्थगुणप्रमाणतः स्थानिना सदृशतमः एव आदेशः भवति।

**सूत्रव्याख्या -** परिभाषासूत्रमिदम्। अस्मिन् सूत्रे द्वे पदे स्तः। स्थाने अन्तरतमः इति सूत्रगतपदच्छेदः। स्थाने इति सप्तम्यन्तम् पदम्। तस्य अर्थः प्रसङ्गः इति। अत्र सूत्रे अन्तरशब्दः सदृशपर्यायः। अतिशयितः अन्तरः अन्तरतमः। अतिशायने तमबिष्ठनौ(५.४.५५) इति सूत्रेण तमप् प्रत्ययः। अतः सदृशतमः इत्यर्थः। षष्ठी स्थानेयोगा(१.१.४८) इति सूत्रात् स्थाने इति सप्तम्यन्तं पदमनुवर्तते। सूत्रार्थो भवति - स्थान्यादेशयोः संख्यावैषम्ये प्रसक्ते स्थानार्थगुणप्रमाणतः स्थानिना सदृशतमः एव आदेशः भवतीति। स्थानार्थगुणप्रमाणतः इति शब्दे स्थानशब्दस्य अर्थः भवति - कण्ठादिस्थानानि। अर्थशब्दस्यार्थः - अभिधेयः। गुणशब्दस्यार्थः - बाह्ययत्नः। प्रमाणशब्दस्यार्थः - एकमात्रा द्विमात्रा त्रिमात्रा इति उच्चारणकालः। केनचित् विधिसूत्रेण यदा कस्यचित् स्थानिनः केचिद् आदेशाः विधीयन्ते, तत्र स्थानिसंख्या यदि आदेशसंख्यातः भिन्ना स्यात् तर्हि तत्र इयं परिभाषा सञ्चारणीया।

**उदाहरणम् -** झलां जश् झशि। इति एकं सूत्रम्। झल्-स्थाने जश् आदेशः भवति झशि परे इति सूत्रार्थः। अत्र स्थानिनः झलः सन्ति। ते च २४ सन्ति। आदेशाः जशः सन्ति। ते च ५ सन्ति। अतः स्थानिसंख्या २४, आदेशसंख्या ५ इति द्वयोः संख्यावैषम्यम् अस्ति। तत्र इयं परिभाषा सञ्चारणीया। अतः स्थानिनः स्थाने स्थानिसदृशतमः एव आदेशः विधेयः इति भावः।

इको यणचि। इति एकं सूत्रम्। इक्-स्थानी अस्ति। यण् आदेशः अस्ति। इक् अविधीयमानः अस्ति। अतः इकारस्य १८, उकारस्य १८, ऋकारस्य ३० इति ६६ वर्णाः स्थानिनः सन्ति। यण् विधीयमानः अस्ति। अतः य् व् र् ल् इति चत्वारः एव आदेशाः सन्ति। अत्र स्थानिसंख्यातः आदेशसंख्यायाः वैषम्यम् अस्ति। अत एव अत्र स्थानेऽन्तरतमः इति परिभाषा सञ्चारणीया। तद्यथा - सुधी उपास्यः इति स्थिते धकारात् परस्य ईकारस्य स्थाने ईकारेण सदृशतमः यकारः एव आदेशः भवति। अत्र ईकार-यकारयोः सादृश्यम् तालुस्थानकृतम् अस्ति। यतो हि ईकारस्य उच्चारणस्थानं तालु, यकारस्य च उच्चारणस्थानं तालु इति।

अस्याः परिभाषायाः समग्राणि स्थालानि तत्र तत्र उदाहरणेषु द्रष्टव्यानि। अत्र समेषामपि उदाहरणानाम् प्रतिपादनम् परवर्तिप्रकरणज्ञानाभावात् क्लिष्टं भवेत्। झलां जशोऽन्ते (८.२.३९) इति



सूत्रस्य उदाहरणे आन्तरतम्यपरीक्षा स्पष्टीकृता। क्रमशः तावद् पठ्यते चेत् तत्र तस्य बोधः सुकरः। इतः उत्प्लुत्य तत्र गत्वा पठनं क्रियते चेत् दुरवगमं स्यात्।



## पाठगतप्रश्नाः-४

३४. यथासंख्यमनुदेशः समानाम् इति परिभाषा कदा प्रवर्तते।

३५. कः प्रतियोगी को वा अनुयोगी।

३६. स्थानेऽन्तरतमः इति परिभाषा कदा प्रवर्तते।

३७. आन्तर्यं कतिविधम्। भेदान् लिखत।

३८. यस्य सम्बन्धः स कः। यस्मिन् सम्बन्धः स कः। (क्रमेण)

१) प्रतियोगी, अनुयोगी  २) अनुयोगी, प्रतियोगी

३) सम्बन्धः, सम्बन्धी  ४) प्रतियोगी, सम्बन्धः

३९. क) स्थानिसंख्यातः आदेशसंख्या भिन्ना चेत् स्थानेऽन्तरतमः इति परिभाषा प्रवर्तते।

ख) स्थानिसंख्या आदेशसंख्यया समाना चेत् यथासंख्यमनुदेशः समानाम् इति परिभाषा प्रवर्तते।

इति अनयोः कथनयोः विषये निम्नं युक्तम् युग्मं चिनुत।

१) (क) सत्यम् (ख) असत्यम्  २) (क) सत्यम् (ख) सत्यम्

३) (क) असत्यम् (ख) सत्यम्  ४) (क) असत्यम् (ख) असत्यम्

४०. अधोलिखितानां केन आन्तर्येण सह कस्य सम्बन्धः इति युक्तमुत्तरं चिनुत।

| | |
|---|---|
| (क) स्थानम् | (i) बाह्ययत्नः |
| (ख) अर्थः | (ii) उच्चारणकालः |
| (ग) गुणः | (iii) अभिधेयः |
| (घ) प्रमाणम् | (iv) उच्चारणस्थानम् |

| | (क) | (ख) | (ग) | (घ) |
|---|---|---|---|---|
| १) | (iv) | (ii) | (iii) | (i) |
| २) | (iv) | (i) | (iii) | (ii) |
| ३) | (iii) | (ii) | (i) | (iv) |
| ४) | (iv) | (iii) | (i) | (ii) |



## [ ५.१२] इको गुणवृद्धी॥ (१.१.३)

**सूत्रार्थः** - यत्र साक्षात् स्थानी न निर्दिष्टः, किञ्च गुणवृद्धिशब्दाभ्याम् गुणवृद्धी विधीयेते तत्र इकः इति षष्ठ्यन्तम् पदम् उपतिष्ठते।

**सूत्रव्याख्या** - परिभाषासूत्रमिदम्। अस्मिन् सूत्रे पदद्वयं वर्तते। इकः गुणवृद्धी इति सूत्रगतपदच्छेदः। इक् इत्यस्य इकस् (इकः) इति षष्ठ्यन्तम् रूपम्। अत्र अयम् इकस् इति नपुंसकलिङ्गः शब्दः मन्यते। इकस् इति नपुंसकलिङ्गिनः प्रथमान्तम् इकः इति रूपम्। उपतिष्ठते इति पदम् अध्याह्रियते। उपस्थितिक्रियायाः कर्ता इकस् इति शब्दः अस्ति। यद्यपि इकः इति षष्ठ्यन्तं तथापि उपतिष्ठते इति क्रियायाः तत् शब्दः कर्ता अस्ति। अतः एव तस्य प्रथमान्तं रूपमत्र मन्तव्यम्। गुणवृद्धी इति प्रथमाद्विवचनान्तम् पदम्। वृद्धिरादैच् (१.१.१) अदेङ् गुणः (१.१.२) इति सूत्राभ्याम् वृद्धिः इति गुणः इति च प्रथमान्तम् पदद्वयम् अनुवर्तते। अत्र 'इति' इति शब्दस्य अध्याहारः क्रियते। 'यत्र विधीयते तत्र' इत्यपि अध्याहरणीयानि। गुणः वृद्धिः इति उच्चार्य यत्र गुणवृद्धी विधीयते तत्र इकः इति षष्ठ्यन्तं पदमुपतिष्ठते इति योजना।

यस्मिन् सूत्रे साक्षात् स्थानी न निर्दिष्टः तत्र, अपिच गुणेन गुणः विधीयते अर्थात् तेन सूत्रेण गुणः इति शब्दम् उच्चार्य गुणः विधीयते अथवा वृद्ध्या वृद्धिः विधीयते अर्थात् वृद्धिः इति शब्दम् उच्चार्य वृद्धिः विधीयते, तस्मिन् सूत्रे इकः इति षष्ठ्यन्तम् पदम् उपतिष्ठते इति सुगमोऽर्थः सूत्रस्यास्य। इकः इति पदम् उपस्थापयति। अत इयं परिभाषा पदोपस्थापिका।

**उदाहरणम्** - मिदेर्गुणः (७.३.८१) इति सूत्रम्। अस्मिन् सूत्रे अङ्गस्य इति अधिकृतम्। तदा अङ्गस्य मिदेः गुणः इति पदानि लभ्यन्ते। अस्मिन् सूत्रे गुणः इति पदमुच्चार्य गुणः विधीयते। अत्र कस्य वर्णस्य स्थाने गुणः भवति इति साक्षात् नोक्तम्। अतः इको गुणवृद्धी इति सूत्रेण अस्मिन् इकः इति षष्ठ्यन्तं पदम् उपस्थाप्यते। तदा अर्थः भवति - अङ्गस्य मिदेः इकः गुणः भवति इति।

## [ ५.१३] अचश्च॥ (१.२.२८)

**सूत्रार्थः** - यत्र साक्षात् स्थानी न निर्दिष्टः, किञ्च ह्रस्वदीर्घप्लुतैः यत्र अच् विधीयते तत्र अचः इति षष्ठ्यन्तं पदम् उपतिष्ठते।

**सूत्रव्याख्या** - परिभाषासूत्रमिदम्। अस्मिन् सूत्रे द्वे पदे स्तः। अचः च इति सूत्रगतपदच्छेदः। अच् इत्यस्य अचस् (अचः) इति षष्ठ्यन्तम् रूपम्। अत्र अयम् अचस् इति नपुंसकलिङ्गः शब्दः मन्यते। अचस् इति नपुंसकलिङ्गिनः प्रथमान्तम् अचः इति रूपम्। यद्यपि अचः इति षष्ठ्यन्तं तथापि उपतिष्ठते इति क्रियायाः तत् शब्दः कर्ता। अतः एव तस्य प्रथमान्तं रूपमत्र मन्तव्यम्। च इति अव्ययपदम्। ऊकालोऽज्झ्रस्वदीर्घप्लुतः इति सूत्रात् अच् ह्रस्वदीर्घप्लुतः इति प्रथमान्तं पदद्वयमनुवर्तते। ह्रस्वदीर्घप्लुतः इति पदं तृतीयाबहुवचनान्तत्वेन विपरिणमते। अत्र 'इति' इति शब्दस्य अध्याहारः क्रियते। 'यत्र विधीयते तत्र' इत्यपि अध्याहरणीयानि। सूत्रार्थो भवति - ह्रस्वदीर्घप्लुतैः यत्र अच् विधीयते तत्र अचः इति षष्ठ्यन्तं पदम् उपतिष्ठते। बहुत्र अच् विधीयते। परन्तु साक्षात् ह्रस्वशब्दम् दीर्घशब्दम् प्लुतशब्दम् वा उच्चार्य यदा अच् विधीयते तत्र अचः इति षष्ठ्यन्तं पदम् उपतिष्ठते।



**उदाहरणम्** - ह्रस्वो नपुंसके प्रातिपदिकस्य इति एकं सूत्रम्। अत्र ह्रस्वः इति प्रथमान्तशब्दम् उच्चार्य अच् विधीयते। तस्मात् प्रकृतसूत्रेण अस्मिन् अचः इति षष्ठ्यन्तम् पदम् उपतिष्ठते। तदा ह्रस्वः नपुंसके अचः प्रातिपदिकस्य इति पदयोजना भवति। ततः परम् तदन्तविधिना अजन्तस्य प्रातिपदिकस्य नपुंसके ह्रस्वः भवति इति एवंरूपेण अर्थो भवति।



## पाठगतप्रश्नाः-५

४१. इको गुणवृद्धी इति परिभाषा कदा प्रवर्तते।

४२. अचश्च इति परिभाषा कदा प्रवर्तते।

४३. इको गुणवृद्धी इत्यत्र इकः इति का विभक्तिः।

४४. यत्र साक्षात् स्थानी न निर्दिष्टः, किन्त्व गुणवृद्धिशब्दाभ्याम् गुणवृद्धी विधीयेते तत्र किम् पदम् उपतिष्ठते।

१) गुणः  २) इकः  ३) वृद्धिः  ४) अचः

४५. ह्रस्वदीर्घप्लुतैः यत्र अच् विधीयते तत्र किम् पदम् उपतिष्ठते।

१) ह्रस्वः  २) दीर्घः  ३) इकः  ४) अचः

## [ ५.१४] विप्रतिषेधे परं कार्यम्॥ (१.४.२)

**सूत्रार्थः** - तुल्यबलविरोधे सति परशास्त्रेण विहितं कार्यं स्यादिति।

**सूत्रव्याख्या** - परिभाषासूत्रमिदम्। अस्मिन् सूत्रे त्रीणि पदानि सन्ति। विप्रतिषेधे इति सप्तम्यन्तं पदम्। परम् कार्यम् इति प्रथमान्तं पदद्वयम्। विप्रतिषेधशब्दस्य परस्परविरोधः इत्यर्थः। सूत्रार्थो भवति - तुल्यबलविरोधे सति परशास्त्रेण विहितं कार्यं स्यादिति। सूत्रम् शास्त्रमिति कथ्यते। यत् सूत्रम् अन्यत्र कुत्रचित् अन्ततः एकत्रापि कार्यं करोति चेत्, तत् सूत्रं लब्धावकाशम् इति कथ्यते। एकस्य एव लक्ष्यस्य संस्काराय सूत्रद्वयं युगपत् प्राप्तम् भवति क्वचित्। इत्थं लब्धावकाशं सूत्रद्वयम् एकस्य एव लक्ष्यस्य संस्काराय उपस्थितं भवति। तदा तयोः द्वयोः सूत्रयोः बलं तुल्यम् अस्ति इति बोद्धव्यम्। अधुना तयोः मध्ये यत् सूत्रम् अष्टाध्याय्याम् परं पठितम् अस्ति तेन सूत्रेण कार्यं भवति इति विस्तृतः अर्थः।

**उदाहरणम्** - संहिताप्रकरणे मनस् रथः इति स्थिते ससजुषो रुः इति सूत्रेण सकारस्य रुः भवति। तदा मनर् रथः इति जायते। तत्राधुना हशि च (६.१.११४) इति सूत्रेण रेफस्य स्थाने उत्वं प्राप्तम्। रो रि (८.३.१४) इति अपरेण सूत्रेण रेफस्य लोपः प्राप्तः। हशि च इति सूत्रम् अन्यत्र लक्ष्यसंस्कारं कृत्वा चरितार्थम् अस्ति अर्थात् लब्धावकाशम् अस्ति। तथैव रो रि इति सूत्रमपि अन्यत्र लक्ष्यसंस्कारं कृत्वा चरितार्थम् अस्ति अर्थात् लब्धावकाशम् अस्ति। मनर् रथः इति उदाहरणे सूत्रद्वयमपि युगपत् एकस्य एव रेफात्मकस्य लक्ष्यस्य भिन्नं संस्कारं कर्तुं प्रवर्तते। तदा द्वयोः मध्ये यत्

सूत्रम् अष्टाध्याय्याम् परं पठितं तस्य प्राबल्यम् बोद्धव्यम्। वस्तुतः अस्मिन् उदाहरणे पूर्वत्रासिद्धम् इत्यादिना हशि च इति सूत्रस्यैव प्रवृत्तिः भवतीति अन्यदेतत्।

एतावता परिभाषाप्रकरणे याः परिभाषाः आलोचिताः ताः पाणिनिमुनिना स्वयम् अष्टाध्याय्यां लिखिताः सन्ति। इतं परं याः परिभाषाः आलोच्यन्ते ताः पाणिनिमुनिना प्रकारान्तरेण ज्ञापिताः सन्ति, अथवा वार्तिककारेण उक्ताः सन्ति, अथवा पतञ्जलिमुनिना उक्ताः सन्ति।

## ५.१४.१) पूर्वपरनित्यान्तरङ्गापवादानामुत्तरोत्तरं बलीयः॥ (प.३९)

शास्त्रे बहुत्र लक्ष्यस्य संस्काराय एकाधिकं सूत्रं शास्त्रं वा युगपत् उपतिष्ठते। तदा द्वयोः मध्ये कस्य सूत्रस्य बलम् अधिकं कस्य वा न्यूनम् इति जिज्ञासा उदेति। सौकर्याय सूत्राणाम् इत्थं विभाजनं क्रियते।

१) पूर्वसूत्रम् , २) परसूत्रम् , ३) नित्यकार्यविधायकं सूत्रम् , ४) अन्तरङ्गकार्यविधायकं सूत्रम् , ५) अपवादसूत्रम् इति पञ्चधा विभज्यते।

एतेषां किञ्चित् परिचयः प्रस्तूयते।

१) पूर्वसूत्रम् - यत् सूत्रम् अष्टाध्याय्याम् पूर्वं पठितम् तत्

२) परसूत्रम् - यत् सूत्रम् अष्टाध्याय्याम् परं पठितम् तत्

३) नित्यकार्यविधायकं सूत्रम् - कृताकृतप्रसङ्गी यो विधिः स नित्यः। अन्येन सूत्रेण कार्यं कृतं, नापि कृतं चेद् यः विधिः प्रसज्यते स नित्यः कथ्यते।

४) अन्तरङ्गकार्यविधायकं सूत्रम् - अन्तः मद्ध्ये शास्त्रीयबहिरङ्गनिमित्तसमुदायमध्ये अन्तर्भूतान्यङ्गानि निमित्तानि यस्य तदन्तरङ्गम्। एवं तदीयनिमित्तसमुदायाद् बहिर्भूताङ्गकं बहिरङ्गम्। अथवा स्वल्पापेक्षत्वम् अन्तरङ्गत्वम्, अधिकापेक्षत्वं बहिरङ्गत्वम्।

५) अपवादसूत्रम् - निरवकाशो विधिरपवादः। येन नाप्राप्ते यो विधिराभ्यते स तस्य बाधको भवति। यदि किमपि सूत्रम् कुत्रापि अन्यत्र कार्यं नैव लभते। तदा तत् सूत्रं निरवकाशं कथ्यते। अत एव अपवादः इति कथ्यते। स च अपवादः अधुना एकस्य कस्यचित् लक्ष्यस्य संस्काराय उपतिष्ठते। तदा स सर्वप्रबलः गण्यते। यदि इदं सूत्रम् अस्यापि लक्ष्यस्य संस्कारं न कुर्यात् तर्हि पाणिनेः सूत्रप्रणयनम् एव व्यर्थं भवेत्। यतो हि पाणिनेः वचनं व्यर्थं न भवति। अत एव वचनप्रामाण्यात् स विधिः अपवादः इति गण्यते। अपिच लब्धस्य लक्ष्यस्य संस्कारं करोति। तत्रायं लौकिकः दृष्टान्तः - कश्चिद् गृहस्वामी ब्राहणान् भोजयति। तदा सूदान् आदिशति - (१) ब्राह्मणेभ्यो दधि दीयताम्, (२) तक्रं कौण्डिन्याय इति वाक्यद्वयेन। कौण्डिन्यः अपि ब्राह्मण एव। प्रथमवाक्यानुसारं कौण्डिन्याय अपि दधि एव देयम्। परन्तु द्वितीयं वाक्यं विशिष्टम् यद् कौण्डिन्याय तक्रं देयम्। तत्राधुना विशयः यद् कौण्डिन्याय किं देयम्। का वा तत्र युक्तिः इति। प्रथमवाक्यं सामान्यविधानं करोति। द्वितीयवाक्यं विशेषविधानं करोति। एकस्य एव स्वामिनः वाक्यद्वयमस्ति। न किमपि वाक्यं विफलं स्यात्। तदा द्वितीयवाक्येन कृतं विशेषविधानं प्रथमवाक्येन कृतस्य सामान्यविधानस्य अंशतः बाधं करोति। कौण्डिन्यभिन्नेभ्यः ब्राह्मणेभ्यः दधि देयम्



इति एवम् अर्थस्य संकोचः भवति। विधानद्वयेन कौण्डिन्यः विषयीकृतः। परन्तु भिन्नं कार्यं प्राप्तम्। द्वितीयविधानस्य केवलं कौण्डिन्यः एव विषयः। परन्तु प्रथमविधानस्य तु विषयः कौण्डिन्योऽपि अस्ति, अन्येऽपि ब्राह्मणाः सन्ति। अतः प्रथमविधिः अधिकदेशव्यापकः विधिः। स उत्सर्गविधिः इति उच्यते। द्वितीयविधिः अल्पदेशव्यापकः विधिः। सः अपवादः इति उच्यते। तत्राधुना निम्नविरोधाः सम्भवन्ति।

| कस्य | केन | विरोधः | कः प्रबलः |
|---|---|---|---|
| पूर्वस्य | परेण | विरोधः | परः |
| पूर्वस्य | नित्येन | विरोधः | नित्यः |
| पूर्वस्य | अन्तरङ्गेन | विरोधः | अन्तरङ्गः |
| पूर्वस्य | अपवादेन | विरोधः | अपवादः |
| परस्य | नित्येन | विरोधः | नित्यः |
| परस्य | अन्तरङ्गेन | विरोधः | अन्तरङ्गः |
| परस्य | अपवादेन | विरोधः | अपवादः |
| नित्यस्य | अन्तरङ्गेन | विरोधः | अन्तरङ्गः |
| नित्यस्य | अपवादेन | विरोधः | अपवादः |
| अन्तरङ्गस्य | अपवादेन | विरोधः | अपवादः |



## पाठगतप्रश्नाः-६

४६. सूत्रयोः विप्रतिषेधः कदा भवति।

४७. नित्यादपि बलीयः किम्।

४८. परादपि बलीयः किं किम्।

४९. किं नित्यम्।

५०. कः उत्सर्गविधिः।

५१. कः अपवादविधिः।

५२. अधोलिखितानां कस्मात् किं बलवत् इति युक्तमुत्तरं चिनुत।

| | |
|---|---|
| (क) अन्तरङ्गात् | (i) अन्तरङ्गम् बलवत् |
| (ख) नित्याद् | (ii) परं बलवत् |
| (ग) पराद् | (iii) नित्यं बलवत् |
| (घ) पूर्वाद् | (iv) अपवादः बलीयान् |

| | (क) | (ख) | (ग) | (घ) |
|---|---|---|---|---|
| १) | (iv) | (ii) | (iii) | (iv) |
| २) | (iv) | (i) | (iii) | (ii) |



| | | | | |
|---|---|---|---|---|
| ३) | (iii) | (ii) | (i) | (iv) |
| ४) | (iv) | (iii) | (i) | (ii) |

## ५.१४.२) प्रत्ययग्रहणे तदादेस्तदन्तस्य ग्रहणम्।

सूत्रेषु बहुत्र प्रत्ययानाम् उल्लेखः भवति। क्वचित् तम् प्रत्ययम् उद्दिश्य संज्ञा विधीयते। क्वचित् तम् प्रत्ययम् उद्दिश्य किमपि आगमादिकं विधीयते। कदाचित् केवलं प्रत्ययः विधीयते। कदाचित् प्रत्ययः निमित्तत्वेन गृह्यते। कदाचित् प्रत्ययः स्थानित्वेन गृह्यते। अतः तत्र तत्र प्रत्ययेन केवलं प्रत्ययस्यैव ग्रहणम् अथवा तदन्तस्य ग्रहणम् इति प्रतिपादयितुम् इयं परिभाषा आगच्छति।

**परिभाषार्थः** - यस्मात् प्रकृतिभूतात् शब्दाद् यः प्रत्ययो विहितः, तदादेः - स प्रकृतिभूतः शब्दः आदिर्यस्य, तदन्तस्य – स प्रत्ययः अन्तो यस्य समुदायस्य तस्य च ग्रहणम्। प्रकृतिप्रत्ययसमुदायस्य तन्मध्यवर्तिनश्च ग्रहणम् इत्यर्थः। अनया परिभाषया जायमानः तदन्तविधिः तदादिविशेष्यकतदन्तविधिः इति कथ्यते। एवञ्च बहुत्र इयं परिभाषा प्रत्ययग्रहणे तदन्ता ग्राह्याः इति आकारेण प्रकट्यते।

याम् प्रकृतिम् उद्दिश्य प्रत्ययः विहितः सा प्रकृतिः स प्रत्ययश्च इति अनयोः समुदायः, तयोः मध्ये वर्तमानाश्च प्रत्ययग्रहणेन गृह्यन्ते, अर्थात् सूत्रे गृहीतः उच्चारितः प्रत्ययः तादृशसमुदायस्य संज्ञा भवतीति तात्पर्यम्। स्वप्रकृत्याद्यावयक-तत्प्रत्ययान्तावयवक-समुदायस्य ग्रहणम् भवति।

**उदाहरणम्** - सह सुपा इति एकं सूत्रम्। अत्र सुबामन्त्रिते पराङ्गवत्स्वरे इति सूत्रात् सुप् इति प्रथमान्तं पदमायाति। समासः इति अधिकृतम् अस्ति। तेन सुप् सुपा सह समाससंज्ञां लभते इति वाक्ययोजना भवति। अत्र सुप् इति प्रत्ययबोधकं पदमस्ति। सुपा इत्यपि प्रत्ययबोधकम् अस्ति। अतः प्रकृतपरिभाषया सुप् इति पदेन यस्मात् प्रकृतिभूतात् शब्दात् सुप् प्रत्ययः विहितः, तदादेः - स प्रकृतिभूतः शब्दः आदिः यस्य, स सुप् प्रत्ययः अन्तः यस्य समुदायस्य, तस्य ग्रहणं भवति। अर्थात् सुबन्तस्य ग्रहणं भवति। एवं सुपा इत्यत्रापि तदादिविशेष्यकतदन्तविधिः भवति। तेन सुबन्तेन इत्यर्थो लभ्यते। एवञ्च सह सुपा इत्यस्य समुदितः अर्थः भवति - सुबन्तं सुबन्तेन सह समाससंज्ञं भवति।

अतः सह सुपा इति सूत्रे सुप् इत्यनेन यस्मात् प्रकृतिभूतात् सुप् विहितः अस्ति स प्रकृतिभूतः समुदायः आदिः यस्य समुदायस्य, स सुप् प्रत्ययः अन्तः यस्य समुदायस्य तस्य ग्रहणं भवति। यथा पूर्व अम् इत्यत्र पूर्व इति प्रकृतिभूतात् समुदायात् अम् इति सुप् प्रत्ययः विहितः अस्ति। स प्रकृतिभूतः पूर्व इति शब्दः आदिः यस्य समुदायस्य (पूर्व अम् इति समुदायस्य), स अम् प्रत्ययः अन्तः यस्य समुदायस्य (पूर्व अम् इति समुदायस्य), सुप् इति ग्रहणेन तस्य समुदायस्य (पूर्व अम् इत्यस्य) ग्रहणं भवति, बोधः भवति।



यदा केनपि सूत्रेण कमपि प्रत्ययमुद्दिश्य काचित् संज्ञा विधीयते तत्र इयं परिभाषा न प्रवर्तते। अतः तत्र प्रत्ययेन केवलं प्रत्ययस्यैव बोधो भवति, न तु तदन्तस्य। यथा क्तक्तवतू निष्ठा इति एकं सूत्रम्। अनेन क्तप्रत्ययम् उद्दिश्य क्तवतु प्रत्ययं च उद्दिश्य निष्ठा इति संज्ञा विधीयते। अतः अस्मिन् सूत्रेण क्त इत्यनेन क्तप्रत्ययमात्रस्य ग्रहणं भवति, न तु क्तान्तस्य। एवं क्तवतु इत्यनेनापि। तस्मात् निष्ठा संज्ञा क्त इति क्तवतु इति प्रत्यययोरेव भवति। क्वचित् संज्ञाविधौ अपि प्रत्ययग्रहणेन तदन्तविधिः भवति। तदूर्ध्वग्रन्थेषु द्रष्टव्यम्।

## ५.१४.३) यदागमास्तद्गुणीभूतास्तद्ग्रहणेन गृह्यन्ते।

यत् शब्दस्वरूपम् उद्दिश्य आगमः विधीयते तस्य अवयवत्वेन आगमः गण्यते। यदि क्वापि तत् शब्दस्वरूपम् उल्लिख्यते तर्हि आगमसहितस्य ग्रहणं कर्तव्यम्।

टित् कित् मित् इति त्रिविधाः आगमाः। सर्वेषाम् इति रूपसाधनप्रक्रियायाम् सर्व आम् इति स्थिते आमः सुट् आगमः भवति। तदा सर्व साम् इति स्थितिः भवति। तत्र बहुवचने झल्येत् इति सूत्रेण झलादिबहुवचने परे अदन्ताङ्गस्य एकारः विधीयते। आम् इत्यस्य सुट् इति अंशभूतः तदवयवः अस्ति इति मन्यते। तेन आम् इति बहुवचनम् इति उक्तेऽपि तद् झलादि भवति। ततः एकारो भवति। सर्वेषाम् इति रूपं च सिद्ध्यति।

## ५.१४.४) निरनुबन्धकग्रहणे सानुबन्धकस्य।

यदि कश्चित् स्वामी भृत्यम् आदिशति पात्राणि आनय इति। स भृत्यः काचपात्राणि ताम्रपात्राणि इति सर्वाणि पात्राणि आनयति। यदि स्वामी आदिशति ताम्रपात्राणि आनय इति। तदा स भृत्यः काचादिपात्राणि नानयति, परन्तु ताम्रनिर्मितानि भोजनस्य स्नानस्य पाकस्य पानस्य पात्राणि यथा कंसः द्रोणी चषकः स्थाली इत्यादीनि आनयति। तत्रापि यदि स्वामी आदिशति भोजनस्य ताम्रपात्राणि आनय इति। तदा तु स केवलं भोजनाय आवश्यकानि एव पात्राणि आनयति। एवमेव व्याकरणेऽपि आचार्यः पाणिनिः करोति। तत्र लट् लिट् लुट् लृट् लेट् लोट् लङ् लिङ् लुङ् लृङ् इति दश लकाराः सन्ति। तत्र यदि मुनिः वदति लः इति। तदा येषु लकारेषु लवर्णः अस्ति ते सर्वेऽपि बोद्ध्यन्ते। यदा आचार्यः वदति लृ इति तदा लृट् लृङ् इति द्वौ एव लकारौ बोध्येते। यतो हि तयोर्मध्ये एव लृ इति वर्णः अस्ति। तदर्थं परिभाषा काचिद् अस्ति - निरनुबन्धकग्रहणे सानुबन्धकस्य इति। सरलार्थस्तु - यत्र अनुबन्धरहितस्य शब्दस्वरूपस्य उच्चारणं भवति तत्र तत् शब्दस्वरूपम् अनुबन्धसहितं बोद्ध्यम्।

## ५.१४.५) नानुबन्धकृतमनेकाल्त्वम्।

यदि आदेशः अनेकाल् भवति तर्हि स सर्वस्य स्थाने भवति इति पूर्वं पठितम्। आदेशः एकाल् अनेकाल् वा इति कथं बोद्धव्यम्। बहुत्र आदेशाः सानुबन्धाः उपलभ्यन्ते। अर्थात् आदेशेषु इत्-संज्ञकवर्णाः सन्ति। तदा कस्मिन्नपि उपदेशे कति वर्णाः सन्ति इति गणनीयं चेत् अनुबन्धस्य गणना न कर्तव्याः इति तात्पर्यम्। यथा धातुपाठे कृधातुः डुकृञ् इति उल्लिखितः। तस्य डु ञ् इति द्वौ अनुबन्धौ। यदि अनुबन्धस्य उकारेण सह कृधातोः स्वरगणनां कुर्मः तर्हि कृधातोः अच्-द्वयम् भवति। तेन एकाच

उपदेशेनुदात्तात् इति सूत्रेण कृतः इडागमनिषेधः कृधातोः न स्यात्। इष्टश्च निषेधः। अतः अनुबन्धं त्यक्त्वा कृधातोः वर्णाः गण्यन्ते। तदा कृधातुः एकाच् भवति।



## पाठसारः

शब्दे विशिष्टक्रमेण विद्यामानः वर्णानां समुदायः शब्दस्य स्वरूपम् भवति। यत् पदम् एकम् अलम् समर्पयति, बोधयति, तत् पदम् अल्-समर्पकम् अथवा अल्-बोधकम्। यत् पदम् अल्समुदायं समर्पयति, बोधयति, तत् पदम् अल्-समुदाय-समर्पकम् अथवा अल्-समुदाय-बोधकम्। या विभक्तिः पदे प्रयुक्ता भवति तत्पदं तद्विभक्तिनिर्दिष्टम् इति उच्यते। यदि पदम् पञ्चम्यन्तम् तर्हि तत् पञ्चमीनिर्दिष्टम् इति कथ्यते।

सूत्रपाठे पाणिनिना पञ्चमी षष्ठी सप्तमी एतासां विभक्तीनां विशिष्टाः अर्थाः उक्ताः। षष्ठी एव क्लिष्टा।

### षष्ठी -

षष्ठीनिर्दिष्टं पदमस्ति चेत् विधीयमानस्य मुख्यं भागद्वयं भवति - आगमः आदेशः च। टित् कित् मित् इति आगमः भवति। अन्ये आदेशाः भवन्ति।

### आगमः - टित् कित् मित् -

यः विधीयते स किमपि शब्दस्वरूपम् उद्दिश्य विधीयते। टित् यस्य विधीयते तस्य आद्यावयवः भवति। कित् यस्य विधीयते तस्य अन्त्यावयवः भवति। एतत् कार्यद्वयम् आद्यन्तौ टकितौ इति परिभाषया भवति।

मित् यस्य विधीयते तस्य ये अचः सन्ति, तेषु अन्तिमात् अचः अव्यवहितपरं विधीयते, किञ्च यम् उद्दिश्य विहितः तस्य अन्त्यावयवः भवति। एतत् कार्यम् मिदचोऽन्त्यात् परः इति परिभाषया भवति।

### आदेशः -

षष्ठ्यन्तपदे प्रयुक्तायाः षष्ठ्याः अर्थः सम्बन्धः अस्ति चेत् , किञ्च सम्बन्धस्य अनुयोगी नास्ति चेत् सा स्थानषष्ठी गण्यते व्याकरणे।

विधीयमानः आदेशः कस्य निवर्तकः, अपसारकः इति प्रश्नः। तदा तत्र आदेशः कीदृशः किञ्च स्थानी कथं निर्दिष्टः इति एतदुभयं द्रष्टव्यं भवति।

### तत्रायं समुदितः विवेकः -

यदि स्थानी एकः एव अल् अस्ति तदा आदेशः कीदृशः अस्ति इति दर्शनस्य आवश्यकता नास्ति। तस्य स्थानिनः अलः निवृत्तिः भवति एव।



यदि स्थानिनिर्देशः अल्समुदायबोधकपदे षष्ठीप्रयोगेन कृतः तदा १) यदि आदेशः एकाल् लोपः ङित् (ङित् अनेकालेव) एषु अन्यतमः अस्ति तर्हि सः अन्त्यस्य वर्णस्य स्थाने भवति न तु सर्वस्य। २) यदि आदेशः अनेकाल् शित् वा अस्ति तर्हि सः सर्वस्य षष्ठीनिर्दिष्टस्य स्थाने भवति। यदा स्थानषष्ठी तदा षष्ठी स्थानेयोगा इति परिभाषा।

यदि स्थानिनिर्देशः अल्समुदायबोधकपदे षष्ठीप्रयोगेन कृतः तदा -

१) आदेशः एकाल् लोपः वा अस्ति तदा अलोऽन्त्यस्य इति परिभाषा।

२) आदेशः अनेकाल् ङित् च अस्ति तदा ङिच्च इति परिभाषा।

३) आदेशः अनेकाल् शित् वा अस्ति किन्तु ङित् नास्ति तदा अनेकाल्शित् सर्वस्य इति परिभाषा। इति विवेकः।

**सप्तमी -**

यदि किमपि पदं सप्तम्यन्तम् अस्ति तर्हि तस्य पदस्य यः अर्थः तस्मात् अव्यवहितपूर्वस्य कार्यम् कर्तव्यमिति तस्मिन्निति निर्दिष्टे पूर्वस्य इति परिभाषायाः तात्पर्यमस्ति।

**पञ्चमी -**

यदि किमपि पदं पञ्चम्यन्तम् अस्ति तर्हि तस्य पदस्य यः अर्थः तस्मात् अव्यवहितपरस्य कार्यम् कर्तव्यमिति तस्मादित्युत्तरस्य इति परिभाषायाः तात्पर्यमस्ति।

षष्ठ्याः अर्थः सम्बन्धः अस्ति चेत् सम्बन्धस्य एकः अनुयोगी अपरः प्रतियोगी च स्यात्। यदि प्रतियोगिसंख्या अनुयोगिसंख्या च समाना तर्हि यथासंख्यमनुदेशः समानाम् इति परिभाषा प्रवर्तते। तया च प्रथमस्य प्रतियोगिनः सम्बन्धः प्रथमेन अनुयोगिना इति एवं क्रमेण सम्बन्धः बोध्यः।

केनचित् विधिसूत्रेण कस्यचित् स्थानिनः केचिद् आदेशाः विधीयन्ते, तत्र स्थानिसंख्या यदि आदेशसंख्यातः भिन्ना स्यात् तर्हि तत्र स्थानेऽन्तरतमः इति परिभाषा सञ्चारणीया। किञ्च स्थानिना सदृशतमः आदेशः कर्तव्यः।

यत्र साक्षात् स्थानी न निर्दिष्टः, किञ्च गुणशब्देन गुणः, वृद्धिशब्देन वृद्धिः च विधीयेते तत्र इकः इति षष्ठ्यन्तम् पदम् इको गुणवृद्धी इति परिभाषया उपतिष्ठते।

ह्रस्वशब्देन दीर्घशब्देन प्लुतशब्देन वा यत्र अच् विधीयते तत्र अचः इति षष्ठ्यन्तं पदम् अचश्च इति परिभाषया उपतिष्ठते।

एकस्य एव लक्ष्यस्य संस्काराय सूत्रद्वयं युगपत् प्राप्तम् भवति क्वचित्। तदा तयोः विरोधः भवति। विरोधः बहुविधः अस्ति। किञ्च निर्णयाय विभिन्नाः परिभाषाः सन्ति इति विषयः सविस्तरम् आलोचितः अस्मिन् पाठे।



## पाठान्तप्रश्नाः

१. स्थानषष्ठी कथं निर्णेया।

२. षष्ठी स्थानेयोगा इति सूत्रं व्याख्यात।

३. अलोऽन्त्यस्य इति सूत्रं व्याख्यात।

४. अनेकाल्शित् सर्वस्य इति सूत्रं व्याख्यात।

५. षष्ठी स्थानेयोगा, अलोऽन्त्यस्य, ङिच्च, अनेकाल्शित् सर्वस्य इति चतुर्णां सूत्राणां परस्परं बाध्यबाधकभावः स्पष्टीकरणीयः।

६. आद्यन्तौ टकितौ इति सूत्रं व्याख्यात।

७. मिदचोऽन्त्यात् परः इति सूत्रं व्याख्यात।

८. स्थानेऽन्तरतमः इति सूत्रं व्याख्यात।

९. तस्मिन्निति निर्दिष्टे पूर्वस्य इति सूत्रं व्याख्यात।



## पाठगतप्रश्नानाम् उत्तराणि

**उत्तराणि-१**

१. द्वन्द्वादौ द्वन्द्वमध्ये द्वन्द्वान्ते श्रूयमाणं पदं प्रत्येकमभिसंबध्यते इत्यस्य अर्थस्तावत् - द्वन्द्वसमासस्य आदौ मध्ये अन्ते वा विद्यमानम् द्वन्द्वसमासस्य अनङ्गभूतम् पदम् द्वन्द्वसमासे विद्यमानैः पदैः प्रत्येकम् अभिसम्बध्यते, अन्वेति इति।

२. प्रत्ययः(३.१.१) परश्च (३.१.२) इति अधिकाराद् बहिर्भूतेन सूत्रेण विधीयमानः यदि टित् कित् वा स्यात् तर्हि आद्यन्तौ टकितौ इति परिभाषा प्रवर्तते।

३. केनापि सूत्रेण विधीयमानः यदि मित् स्यात् तर्हि मिदचोऽन्त्यात् परः इति परिभाषा प्रवर्तते।

४. प्रत्ययः(३.१.१) परश्च (३.१.२) इति अधिकाराद् बहिः आद्यन्तौ टकितौ इति परिभाषायाः प्रवृत्तिक्षेत्रम्। समग्रायाम् अष्टाध्याय्याम् मिदचोऽन्त्यात् परः इति परिभाषायाः प्रवृत्तिक्षेत्रम्।

५. ३)

६. ४)

७. १)

८. ३)

९. ३)



**उत्तराणि-२**

१०. शब्दे क्रमशः विद्यामानाः वर्णाः शब्दस्य स्वरूपम् भवति।

११. अल्बोधकम्।

१२. यस्य पदस्य अर्थः लक्ष्ये एकः अल् एव लभ्यते तत् पदम् अल्बोधकम्।

१३. सूत्रे षष्ठीनिर्दिष्टं पदम् अस्ति। परन्तु अनुयोगी न उल्लिखितः। तत्र सम्बन्धविशेषः कः इति निर्धारणं न भवति। अतः अत्र विद्यमाना षष्ठी अनिर्धारितसम्बन्धविशेषा षष्ठी अस्ति। ईदृशी षष्ठी स्थानषष्ठी इति उच्यते।

१४. शब्दशास्त्रे या षष्ठी सा स्थानेयोगा बोद्ध्या।

१५. अल्समुदायबोधकात् पदात् स्थानषष्ठी अस्ति चेत्, आदेशः च एकाल् लोपः वा स्यात् चेत् अलोऽन्त्यस्य इति परिभाषा प्रवर्तते।

१६. अल्समुदायबोधकात् पदात् स्थानषष्ठी अस्ति चेत्, आदेशः च अनेकाल् किञ्च ङित् स्यात् चेत् ङिच्च इति परिभाषा प्रवर्तते।

१७. अल्समुदायबोधकात् पदात् स्थानषष्ठी अस्ति चेत्, आदेशः च अनेकाल् ङिद्भिन्नः अथवा शित् स्यात् चेत् अनेकाल्शित् सर्वस्य इति परिभाषा प्रवर्तते।

१८. पञ्चमीनिर्देशेन परस्य कार्यं विधीयते चेत् आदेः परस्य इति परिभाषा प्रवर्तते।

१९. १)

२०. १)

२१. २)

२२. ३)

२३. १)

२४. ३)

२५. ३)

२६. २)

**उत्तराणि-३**

२७. सप्तमीनिर्देशेन विधीयमानं कार्यं वर्णान्तरेण अव्यवहितस्य पूर्वस्य भवति इति तस्मिन्निति निर्दिष्टे पूर्वस्य इति परिभाषायाः अर्थः।

२८. पञ्चमीनिर्देशेन विधीयमानं कार्यं वर्णान्तरेण अव्यवहितस्य परस्य भवति इति तस्मादित्युत्तरस्य इति परिभाषायाः अर्थः।

२९. सूत्रे सप्तम्यन्तं पदम् यदि संज्ञापदम् स्यात्। तस्य अर्थः कश्चिद् शब्दः वर्णः वा एव स्यात् तर्हि तस्मिन्निति निर्दिष्टे पूर्वस्य इति परिभाषा प्रवर्तते।



३०. सूत्रे पञ्चम्यन्तं पदम् यदि संज्ञापदम् स्यात्। तस्य अर्थः कश्चिद् शब्दः वर्णः वा एव स्यात् तर्हि तस्मादित्युत्तरस्य इति परिभाषा प्रवर्तते।

३१. १)

३२. २)

३३. २)

**उत्तराणि-४**

३४. षष्ठ्याः सम्बन्धस्य प्रतियोगि-अनुयोगिसंख्या यदि समाना स्यात् तर्हि यथासंख्यमनुदेशः समानाम् इति परिभाषा प्रवर्तते।

३५. सम्बन्धः सदा न्यूनतः द्वयोः भवति। यदा सम्बन्धः भवति तदा यस्य सम्बन्धः भवति स सम्बन्धस्य प्रतियोगी इति कथ्यते। यस्मिन् सम्बन्धः भवति सः अनुयोगी इति कथ्यते। अर्थात् प्रतियोगिनः सम्बन्धः अनुयोगिना सह भवति।

३६. षष्ठ्याः सम्बन्धस्य प्रतियोगि-अनुयोगिसंख्या यदि विषमा स्यात् तर्हि स्थानेऽन्तरतमः इति परिभाषा प्रवर्तते।

३७. स्थानार्थगुणप्रमाणकृदान्तर्यं चतुर्विधम्।

३८. १)

३९. २)

४०. ४)

**उत्तराणि-५**

४१. यत्र साक्षात् स्थानी न निर्दिष्टः, किञ्च गुणवृद्धिशब्दाभ्याम् गुणवृद्धी विधीयेते तत्र इको गुणवृद्धी इति परिभाषा प्रवर्तते।

४२. ह्रस्वदीर्घप्लुतैः यत्र अच् विधीयते तत्र अचश्च इति परिभाषा प्रवर्तते।

४३. इकः इति षष्ठ्यन्तात् प्रथमा विभक्तिः।

४४. ४)

४५. ४)

**उत्तराणि-६**

४६. एकस्य एव लक्ष्यस्य संस्काराय यदि सूत्रद्वयं युगपत् प्राप्तम् भवति। किञ्च तत् सूत्रद्वयमपि लब्धावकाशम् एकस्य एव लक्ष्यस्य संस्काराय उपस्थितं भवति। तदा तयोः द्वयोः सूत्रयोः बलं तुल्यम् अस्ति इति भवति तयोः विप्रतिषेधः।

४७. नित्यादपि बलीयः अन्तरङ्गम् अपवादश्च।

४८. परादपि प्रबलत्वम् नित्यस्य अन्तरङ्गस्य अपवादस्य च।



४९. कृताकृतप्रसङ्गी यो विधिः स नित्यः। अन्येन सूत्रेण कार्यं कृतं, नापि कृतं चेद् यः विधिः प्रसज्यते स नित्यः कथ्यते।

५०. अधिकदेशव्यापकः विधिः उत्सर्गविधिः इति उच्यते।

५१. उत्सर्गविधिदेशे अन्तर्भूतः अल्पदेशव्यापकः विधिः अपवादः उच्यते।

५२. २)

।।इति पञ्चमः पाठः।।





# संहिता

## भूमिका

द्वयोः वर्णयोः मध्ये न्यूनतः अर्धमात्रिकमेव उच्चारणकालिकं व्यवधानं सम्भवति। अतः ययोः द्वयोः वर्णयोः मध्ये अर्धमात्राकालिकं व्यवधानं यदि भवति तर्हि तयोः वर्णयोः मध्ये संहिता अस्ति। संहिता च द्वयोः स्वरयोः, द्वयोः व्यञ्जनयोः, स्वरव्यञ्जनयोः अपि सम्भवति।

इतः परं यदा रूपाणि साध्यन्ते तत्र सम्पूर्णस्य रूपस्य साधनाय क्रमशः बहूनि सूत्राणि आवश्यकानि भवन्ति। यानि सन्धिप्रकरणस्य सन्ति तानि सूत्राणि आनीय समग्रं रूपं साध्यते। परन्तु बहूनि सूत्राणि अग्रिमेषु पाठेषु सन्ति। तानि एतावता न आलोचितानि। नापि तानि सन्धिप्रकरणे सन्ति। अतः यथासम्भवं तानि सूत्राणि त्यक्त्वा एव रूपाणि साधितानि सन्ति। सन्धिप्रकरणेऽपि यद्यपि स्वरसन्धिः - अच्सन्धिः, प्रकृतिभावसन्धिः; व्यञ्जनसन्धिः - हल्सन्धिः, विसर्गसन्धिः, अनुस्वारसन्धिः, रुत्वसन्धिः, अनुनासिकसन्धिः इत्यादीनि नामानि सन्ति। किञ्च तेषु तेषु स्वकीयानि सूत्राणि सन्ति। तथापि किमपि रूपं साधनीयं चेत् सकलानि सूत्राणि अच्-सन्धिप्रकरणस्यैव उपयुज्यन्ते इति तु न। तत्र एकं सूत्रम् अच्-सन्धिप्रकरणस्य, अपरं सूत्रं हल्सन्धिप्रकरणस्य, अन्यत् सूत्रं पुनः अन्यप्रकरणस्य आवश्यकम् भवति। मध्ये मध्ये संज्ञासूत्राणि, परिभाषासूत्राणि च अपि आवश्यकानि भवन्ति। एवं बहूनि सूत्राणि प्रयुज्य किमपि रूपं सिद्ध्यति। अतः यद्यपि प्रकरणस्य नाम अच्-सन्धिः, हल्सन्धिः इत्यादिकम् अस्ति तथापि संकरः अपि महान् अस्ति। इदं तत्र बोध्यम् यत् अच्सन्धिप्रकरणे प्रामुख्येन अच्सन्धिप्रकरणस्य सूत्राणि आलोचितानि इति। किञ्च यदा एकं रूपं सिद्ध्यति ततः परम् यद् नूतनं सूत्रम् आदीयते व्याख्यानाय तत् अच्सन्धिप्रकरणस्य इति।

६

# अच्सन्धौ यण्-अयवायावादिसन्धिः

## प्रस्तावना

प्रकृतिप्रत्यययोः पदयोः वा मेलने कृते पूर्वपदस्य यः अन्तिमः वर्णः तस्य, परवर्ति यत् पदं तस्य यः आदिमः वर्णः तस्य समीपम् आयाति। इदं समीप्यम् द्वयोः पदयोः मेलनं विहाय अन्यत्र सर्वत्र अर्धमात्राकालिकम् एव अनिवार्यम्। यद्वा भवतु। यदि इदं सामीप्यम् अर्धमात्राकालिकम् एव भवति तर्हि तत्र संहिता अस्ति। तदा समीपम् आगतयोः पूर्वपरयोः द्वयोः वर्णयोः मध्ये एकस्य द्वयोः वा विकारः, परिवर्तनम् उत्पद्यते। अयं विकारः एव सन्धिकार्यम्। अर्थात् संहितावशात् वर्णपरिणामः। आदेशः आगमः द्वित्वं लोपः इत्येषु अन्यतमः विकारः भवति। यदा स्वरस्य विकारः भवति तदा स स्वरसन्धिः अच्सन्धिः वा कथ्यते। यदा व्यञ्जनस्य विकारः भवति तदा स व्यञ्जनसन्धिः हल्सन्धिः वा उच्यते। अस्मिन् पाठे अच्-सन्धिः आलोच्यते।

सूत्रे यानि पदानि सन्ति, किञ्च यानि पदानि अनुवृत्त्यादिभिः लभ्यन्ते, तेषां समेषामपि विभक्तिवचनादिकम् सूत्रव्याख्यायाम् उच्यते। यथा - इको यणचि इति सूत्रे इकः इति षष्ठ्येकवचनान्तम् पदम्। यण् इति प्रथमैकवचनान्तं पदम्। अचि इति सप्तम्येकवचनान्तं पदम्। अस्य प्रकटनस्य लाघवाय इकः (६/१), यण् (१/१), अचि (७/१) इत्यपि उपायावलम्बः क्रियते। तत्र इकः (षष्ठी/एकवचनम्) इत्येव इकः (६/१) इति रूपेण प्रकट्यते। अचि (सप्तमी/एकवचनम्) इत्येव अचि (७/१) इति रूपेण प्रकट्यते। अयमुपायः तत्र तत्र अवगन्तव्यः।



## उद्देश्यानि

इमं पाठं पठित्वा भवान् -

- द्वयोः स्वरयोः यदा संहिता भवति तदा किं किं परिवर्तनं भवति तद् ज्ञास्यति।
- यण्-सन्धिं कर्तुं समर्थो भवेत्।
- गुणसन्धिं वृद्धिसन्धिं च कर्तुम् प्रभवेत्।
- गुणस्य अपवादः वृद्धिः कथम् इति बोद्धुं शक्नुयात्।
- वृद्धेः अपि अवपादाः सन्ति इति जानीयात्।
- सवर्णदीर्घसन्धिं कर्तुम् पारयेत्।
- दूरतः कस्यापि आह्वानं संस्कृतभाषानुसारं कर्तुं प्रभवेत्।
- प्रकृतिभावं ज्ञात्वा कुत्र प्रकृतिभावः भवतीति अवगच्छेत्।

## [ ६.१] संहितायाम्॥ (६.१.७२)

अधिकारसूत्रमिदम्। इत आरभ्य अनुदात्तं पदमेकवर्जम् (६.१.१५८) इति अस्य पादस्य अन्तिमसूत्रं यावदयमधिकारः। संहितायाम् (६.१.७२) इति सूत्रादारभ्य अनुदात्तं पदमेकवर्जम् (६.१.१५८) इति सूत्रात् प्राग् यद् वक्ष्यते तत् संहितायाम् इत्येवं तद् वेदितव्यम्।

परः सन्निकर्षः संहिता इति सूत्रे संहिता का इति व्याख्यातमेव।

द्वयोः वर्णयोः मध्ये न्यूनतः अर्धमात्रिकमेव उच्चारणकालिकं व्यवधानं सम्भवति न तु ततोऽपि न्यूनम्। अतः ययोः द्वयोः वर्णयोः मध्ये अर्धमात्राकालिकं व्यवधानं यदि भवति तर्हि तयोः वर्णयोः मध्ये संहिता अस्ति। संहिता च द्वयोः स्वरयोः, द्वयोः व्यञ्जनयोः, स्वरव्यञ्जनयोः अपि सम्भवति।

संहितैकपदे नित्या नित्या धातूपसर्गयोः।

नित्या समासे वाक्ये तु सा विवक्षामपेक्षते।।

वाक्यस्य वक्ता वाक्ये पदानाम् उच्चारणं व्यवधानम् विना अपि कर्तुं शक्नोति, व्यवधानं कृत्वा अपि कर्तुं शक्नोति। परन्तु यदा समासः भवति तदा समासे स्थितानां पदानाम् उच्चारणे विलम्बः अनुचितः शास्त्रविरुद्धः च। तथैव यत्र धातुना सह उपसर्गः युक्तः अस्ति तत्र सति प्रसङ्गे धातूपसर्गयोः उच्चारणं व्यवधानं विना एव कर्तव्यम्। यस्य पदस्य विभागं कृत्वा अधिकानि पदानि कर्तुं न शक्यन्ते तद् एकपदम् इति कथ्यते। अथवा यत् पदं द्वयोः पदयोः मेलनेन न निष्पन्नं तद् एकपदम् इति बोध्यम्। एकपदे स्थितानां वर्णानाम् उच्चारणे विलम्बः अर्थात् व्यवधानं न कर्तव्यम्। यदा विलम्बरहितम् उच्चारणं भवति तदा द्वयोः वर्णयोः मध्ये अर्धमात्राकालिकं व्यवधानम् भवति। यदा द्वयोः वर्णयोः मध्ये एतावत् सामीप्यं भवति तदा द्वयोः वर्णयोः मध्ये संहिता अस्ति इति बोध्यम्। इदं सामीप्यमेव संहिता। तत्र संहितायाः विषयो भवति। यत्र संहितायाः विषयो भवति तत्र संहिताधिकारे उक्तानि सूत्राणि कार्यं कुर्वन्ति। संहितायां सत्याम् यदा वर्णस्य वर्णयोः वा विपरिणामः भवति तदा अयं विपरिणामः अपि संहिता, सन्धिः इति व्यपदिश्यते व्यवहारे।

यदा द्वयोः स्वरयोः संहिता भवति तदा **अच्सन्धिः** इति उच्यते।

यदा द्वयोः व्यञ्जनयोः संहिता भवति तदा **हल्सन्धिः** इति उच्यते।

यदा विसर्गः निष्पद्यते अथवा विसर्गस्य अन्यः परिणामः भवति तदा **विसर्गसन्धिः** इति उच्यते।

यदा संहिता भवति परन्तु वर्णपरिणामः न भवति तदा **प्रकृतिभावसन्धिः** इति उच्यते।

यद्यपि सन्धीनाम् भेदाः उपभेदाश्च अनेके सन्ति तथापि सन्धयः पञ्च सन्ति इति व्याकरणसम्प्रदाये प्रसिद्धिः। चत्वारः सन्धयः उक्ता एव। पञ्चमः सन्धिस्तु **स्वादिसन्धिः** कथ्यते।

सामान्यतः व्याकरणेन एकैकस्य पदस्य संस्कारः क्रियते। तदा पदसंस्कारपक्षः पदान्वाख्यानपक्षः वा कथ्यते। परन्तु सन्धिप्रकरणे बाहुल्येन समासे वाक्ये वा स्थितयोः द्वयोः पदयोः संस्कारः क्रियते। अयं वाक्यसंस्कारपक्षः वाक्यान्वाख्यानपक्षः वा उच्यते।



## [ ६.२] इको यणचि॥ (६.१.७७)

**सूत्रार्थः** - अचि परे इकः स्थाने यण् भवति संहितायां सत्याम्।

**अवधेयम्** - अस्मिन् ग्रन्थे इदमेव प्रथमम् विधिसूत्रमिदम्। अतः इदम् अपि च अन्यानि कानिचन सूत्राणि सविस्तरं व्याख्यातानि। एकत्र कृतं व्याख्यानं विभिन्नेषु स्थानेषु अध्येता स्वयम् ऊहेत।

**सूत्रव्याख्या** - विधिसूत्रमिदम्। अस्मिन् सूत्रे त्रीणि पदानि सन्ति। इकः यण् अचि इति सूत्रगतपदच्छेदः।

इकः इति षष्ठ्येकवचनान्तम् पदम्। अत्र षष्ठ्याः अर्थः सम्बन्धः। सम्बन्धस्य एकः प्रतियोगी अपरः अनुयोगी भवति। प्रतियोगिनः सम्बन्धः अनुयोगिना सह भवति। अस्मिन् सूत्रे अनुयोगी न उल्लिखितः। अतः अनुयोगिविरहात् इयं स्थानषष्ठी। किञ्च इक् अल्बोधकं पदमस्ति। अतः षष्ठी स्थानेयोगा इति परिभाषया स्थाने इति पदम् उपतिष्ठते। तदा इकः स्थाने इत्यर्थः लभ्यते।

यण् इति प्रथमैकवचनान्तं पदम्। यण् अत्र विधेयः अस्ति।

अचि इति सप्तम्येकवचनान्तम् पदम्, इयं परसप्तमी। अतः तस्मिन्निति निर्दिष्टे पूर्वस्य इति परिभाषया अचः अव्यवहितपूर्वस्य इति अर्थः लभ्यते।

संहितायाम् (७/१) इति अधिकृतम्। 'भवति' इति क्रियापदम् अध्याह्रियते। सूत्रघटकं पदत्रयमपि प्रत्याहाररूपम्। अतः इक् इति संज्ञा, इ उ ऋ ऌ इति संज्ञिनः अत्र बोद्धव्याः। तदा पदयोजना भवति - संहितायाम् अचि परे अव्यवहितपूर्वस्य इकः स्थाने यण् भवति। सूत्रार्थो भवति - संहिता चेत् अचि परे इकः स्थाने यण् भवति। अर्थात् इकः परम् अच् अस्ति चेत्, इक् अच् इति अनयोः मध्ये अर्धमात्राधिककालव्यवधानाभावः अस्ति चेत्, इकः स्थाने यण् भवति इति। अ इ उ ऋ ऌ ए ओ ऐ औ इति एषु एकस्मिन् परे इ उ ऋ ऌ एषां वर्णानां स्थाने य् व् र् ल् एते वर्णाः आदेशाः स्युः इति सूत्रार्थः सम्पद्यते।

इक् अविधीयमानः अस्ति। अतः इकारस्य १८, उकारस्य १८, ऋकारस्य ३० इति ६६ वर्णाः स्थानिनः सन्ति। यण् विधीयमानः अस्ति। अतः य् व् र् ल् इति चत्वारः एव आदेशाः सन्ति। अत्र स्थानिसंख्यातः आदेशसंख्यायाः वैषम्यम् अस्ति। अत एव अत्र स्थानेऽन्तरतमः इति परिभाषा सञ्चारणीया। तथा च - सुधी उपास्यः इत्यादिषु लक्ष्येषु स्थानकृतम् सादृश्यम् आदाय इवर्णस्य स्थाने यकारः, उवर्णस्य स्थाने वकारः, ऋवर्णस्य स्थाने रेफः, ऌवर्णस्य स्थाने लकारः भवन्ति।

इक्पदेन ६६ वर्णानाम् उपस्थितिः अणुदित्सवर्णस्य चाप्रत्ययः इति सूत्रसञ्चारणात् परं भवति। प्रथमं तु इक्पदेन चतुर्णामेव उपस्थितिः भवति। यण्-पदेन चतुर्णामेव उपस्थितिः भवति। अतः प्राथमिकीम् उपस्थितिम् आदाय स्थानिनः चत्वारः, आदेशाः अपि चत्वारः एव। अत एव यथासंख्यमनुदेशः समानाम् इति परिभाषया इकारस्य यकारः, उकारस्य वकारः, ऋकारस्य रेफः, ऌकारस्य लकारः इति उद्देशक्रमेण आदेशाः प्रवर्तन्ते। अचि इत्यस्य संख्या न इका नापि यणा समाना। अतः न कोऽपि क्रमः। अर्थात् इकः परम् अच्-मध्यात् यः कोऽपि स्वरः अस्ति चेत् यणादेशो भवति।



**उदाहरणम्** - मह्याकारः। महय्याकारः।

**सूत्रार्थसमन्वयः** - मह्याः आकारः इति समासविग्रहः। षष्ठीतत्पुरुषसमासे कृते समासे स्थितेभ्यः शब्देभ्यः विद्यामानानां विभक्तीनां लुक् भवति अर्थात् विभक्तयः लुप्ताः भवन्ति। यथा मही इति शब्दात् परं विद्यामाना षष्ठी लुप्ता। तथापि प्रत्ययलोपे प्रत्ययलक्षणम् इति परिभाषया सा विभक्तिः तत्र अस्ति इति मत्वा मही इत्यस्य सुप्तिङन्तं पदम् इति सूत्रेण पदसंज्ञा भवति। समासार्थः - मही पृथिवी। तस्याः आकारः परिमाणम्। पृथिव्याः परिमाणम् इति। अत्र समासः अस्ति। अतः द्वयोः पदयोः परः सन्निधिः अनिवार्यः एव। एवमत्र संहिता अस्ति। मही आकारः इति स्थिते आकारात् अव्यवहितपूर्वः ईकारः अस्ति। यद्यपि इकः इति प्रत्याहारे ईकारः नास्ति तथापि इक् अविधीयमानः अस्ति। अतः अणुदित्सवर्णस्य चाप्रत्ययः इति ग्रहणकशास्त्रेण इक् दीर्घस्यापि ईकारस्य बोधको भवति। अतः इको यणचि इति प्रकृतसूत्रेण ईकारस्य स्थाने यकारे कृते मह् य् आकारः इति स्थितिः जायते। तदा -

## [ ६.३] संयोगान्तस्य लोपः॥ (८.२.२३)

**सूत्रार्थः** - संयोगान्तं यत् पदम् तदन्त्यस्य अलः लोपः भवति

**सूत्रव्याख्या** - विधिसूत्रमिदम्। संयोगान्तस्य लोपः इति पदद्वयम् अस्मिन् सूत्रे। संयोगान्तस्य (६/१), लोपः (१/१)। पदस्य इति अधिकृतम्। संयोगः अन्ते यस्य तत् संयोगान्तम् इति बहुव्रीहिसमासः। संयोगान्तस्य पदस्य लोपः इति पदयोजना। अत्र संयोगान्तस्य पदस्य इति समानविभक्तिकं पदद्वयम् अस्ति। तयोः एकं विशेषणम् अपरं च विशेष्यम्। अतः तदन्तविधिः भवति। तदा तथा विशेष्यं ग्राह्यम् यस्य अन्ते विशेषणम् अस्ति। अत्र संयोगान्तस्य इति विशेषणम्। पदस्य इति विशेष्यम्। तदन्तविधिना तथा पदं ग्राह्यम् यस्य अन्ते संयोगः अस्ति। तदा सूत्रस्य अर्थः भवति - संयोगान्तं यत् पदं तस्य लोपः। (वस्तुतः सूत्रे संयोगान्तस्य इति अनुक्त्वा संयोगस्य इति वक्तव्यम्। तावता अपि कार्यं सिद्ध्यति।) 'संयोगान्तं यत् पदं तस्य' इत्यस्य प्रकटनं संयोगान्तपदस्य इति भवति। तत्राधुना संयोगान्तपदस्य इति पदं षष्ठ्यन्तम् अस्ति। तत्पदम् अल्समुदायबोधकम् अस्ति। अर्थात् संयोगान्तपदस्य इति शब्दस्य अर्थः केवलम् एक एव वर्णः इति न, अपि तु वर्णसमुदायः इति। अनुयोगिविरहात् तत्र या षष्ठी सा स्थानषष्ठी अस्ति। अपि च यः आदेशः स लोपः अस्ति। अतः एव अलोन्त्यस्य इति परिभाषासञ्चारेण अर्थः भवति - संयोगान्तं यत् पदम् तदन्त्यस्य अलः लोपः भवति इति।

**उदाहरणम्** - मह् य् आकारः इति स्थितिः। पूर्वसूत्रे उक्तमेव यत् मह् य् इति पदम् अस्ति। किञ्च तस्य अन्ते ह्+य् इति संयोगः अस्ति। अतः प्रकृतसूत्रेण यकारस्य लोपः प्राप्तः। तदा -

### ६.३.१) यणः प्रतिषेधो वाच्यः। (वार्तिकम्)

संयोगान्तस्य यणः लोपस्य प्रतिषेधः, निषेधः अस्तु इति वार्तिकार्थः। अनेन वार्तिकेन यकारलोपस्य निषेधः भवति। एवञ्च मह् य् आकारः इति स्थितिः जायते। तदा -



## [ ६.४] अचो रहाभ्यां द्वे॥ (८.४.४६)

**सूत्रार्थः** - अचः पराभ्याम् रेफहकाराभ्याम् परस्य यरः द्वे वा भवतः।

**सूत्रव्याख्या** - विधिसूत्रमिदम्। अस्मिन् त्रीणि पदानि सन्ति। अचः रहाभ्याम् द्वे इति सूत्रगतपदच्छेदः। अचः (५/१), रहाभ्याम् (५/२), द्वे (१/२)। यरोऽनुनासिकेऽनुनासिको वा इति सूत्रात् यरः इति षष्ठ्यन्तं पदमनुवर्तते। वा इति अव्ययञ्चानुवर्तते। पदयोजना - अचः रहाभ्याम् यरः द्वे इति। अचः इति पञ्चमीनिर्दिष्टं पदम्। इयं दिग्योगपञ्चमी। अतः अचः पराभ्याम् इति अर्थो लभ्यते। रहाभ्याम् इति पञ्चमीनिर्दिष्टं पदम्। इयं दिग्योगपञ्चमी। अतः रहाभ्याम् परस्य इति अर्थो लभ्यते। सूत्रार्थो भवति - अचः पराभ्याम् रेफहकाराभ्याम् परस्य यरः द्वे वा भवतः इति।

**उदाहरणम्** - मह् य् आकारः इत्यत्र मकारात् परम् अच् अकारः अस्ति। ततः परम् हकारः अस्ति। ततः परम् यर् यकारः अस्ति। अतः प्रकृतसूत्रेण यरः यकारस्य विकल्पेन द्वित्वम् भवति। तेन पक्षद्वयम् उपतिष्ठते - द्वित्वाभावपक्षः, द्वित्वपक्षः च। यदा द्वित्वाभावपक्षः तदा मह् य् आकारः इति स्थिते वर्णानां मेलनेन मह्याकारः इति साधु रूपं सिद्ध्यति। द्वित्वपक्षे मह् य् य् आकारः इति स्थितिः भवति। तदा -

## [ ६.५] हलो यमां यमि लोपः॥ (८.४.६४)

**सूत्रार्थः** - हलः परस्य यमः लोपः वा स्याद् यमि परे।

**सूत्रव्याख्या** - विधिसूत्रमिदम्। अस्मिन् चत्वारि पदानि सन्ति। हलः यमाम् यमि लोपः इति सूत्रगतपदच्छेदः। हलः (५/१), यमाम् (६/३), यमि (७/१), लोपः (१/१)। झयो होऽन्यतरस्याम् इति सूत्रात् अन्यतरस्याम् इति विभक्तिप्रतिरूपकम् अव्ययम् अनुवर्तते तस्य विकल्पः इत्यर्थः। सूत्रार्थः - हलः परस्य यमः लोपः वा स्याद् यमि परे।

**उदाहरणम्** - मह् य् य् आकारः इत्यत्र हल् हकारः। ततः परम् यम् यकारः। अपरः यकारः यम् परे अस्ति। अतः तस्य स्थाने विकल्पेन लोपः भवति। अर्थात् हकारात् परवर्तिनः यकारस्य विकल्पेन लोपः भवति। तदा लोपपक्षे मह् य् आकारः, वर्णमेलनेन मह्याकारः इति रूपं निष्पद्यते। लोपाभावपक्षे मह्य्याकारः इति द्वियकारयुक्तम् रूपं निष्पद्यते।

इत्थम् मह्याकारः मह्य्याकारः इति रूपद्वयं सिद्ध्यति।

## [ ६.६] अनचि च॥ (८.४.४७)

**सूत्रार्थः** - अचः परस्य यरः द्वे वा स्तः न तु अचि।

**सूत्रव्याख्या** - विधिसूत्रमिदम्। अस्मिन् सूत्रे द्वे पदे स्तः। न अच् अनच् , तस्मिन् अनचि इति नञ्-तत्पुरुषसमासः। च इत्यव्ययपदम्। यरोऽनुनासिकेऽनुनासिको वा (८.४.४४) इति सूत्रात् यरः इति षष्ठ्येकवचनान्तं पदमनुवर्तते। किञ्च वा इति अव्ययमनुवर्तते। अचो रहाभ्यां द्वे इति सूत्रात् अचः इति पञ्चम्येकवचनान्तं पदम् , द्वे इति प्रथमाद्विवचनान्तं पदञ्चानुवर्तेते। तदा पदयोजना भवति - अचः यरः द्वे



वा अनचि। अनचि च इत्यत्र प्रजस्यप्रतिषेधः अस्ति। तेन अर्थः भवति - अचि न भवति इति। सामग्रिकः सूत्रार्थस्तु - अचः परस्य यरः द्वे वा स्तः न तु अचि।

**उदाहरणम् -** मधोः अरिः इति विग्रहः। समासे कृते सपां लुकि पुनः सुप्रत्यये मधु अरिः इति स्थितिः उद्भवति। अत्र इक् उकारः अचः अकारात् अव्यवहितपूर्वः अस्ति। अतः इको यणचि इति सूत्रेण उकारस्य स्थाने स्थानेऽन्तरतमः इति परिभाषाबलेन वकारः भवति। तदा मध् व् अरिः इति स्थितिः भवति। अत्राधुना मकारात् परः यः अकारः सः अच् अस्ति। तस्मात् परं यर् धकारः अस्ति। तस्मात् परम् अच् नास्ति। अतः अनचि च इति सूत्रेण धकारस्य द्वौ धकारौ भवतः। अर्थात् द्वित्वं भवति। इदं द्वित्वम् अस्ति परन्तु आदेशत्वेन न गण्यते। द्वित्वे कृते मध् ध् व् अरिः इति स्थितिः जायते। तदा - (अग्रिमसूत्रस्य उदाहरणं द्रष्टव्यम्)

[**सन्धिप्रकरणे समासस्य प्रस्तुतिः -** सन्धिप्रकरणे बहुत्र समासं कृत्वा सन्धिः प्रदर्श्यते। अतः समासविषये किञ्चित् ज्ञानम् आवश्यकम्। अतः तद् अत्र उच्यते। इदं केवलं ज्ञानार्थमेव उच्यते न तु परीक्षायाः कृते।

मधोः अरिः इति विग्रहः। समासे कृते द्वयोः पदयोः मध्ये एकस्य पूर्वं निपातः अपरस्य परं निपातः भवति। कस्य पदस्य कुत्र स्थापनमिति विषये पाणिनिमुनेः व्यवस्था अस्ति। तेन मधोः इति पदस्य पूर्वं स्थापनम् , अरिः इति पदस्य च परं स्थापनं भवति। एतेषां समासः भवति चेत् कृत्तद्धितसमासाश्च इति सूत्रेण 'मधोः अरिः' इति समुदायस्य प्रातिपदिकसंज्ञा भवति। प्रातिपदिकसंज्ञायां सत्यां सुपो धातुप्रातिपदिकयोः इति सूत्रेण प्रातिपदिकस्य अवयवभूतानां सुब्-विभक्तीनां लुक् भवति। अर्थात् अदर्शनं भवति। तेन मधु+अरि इति विभक्तिरहिताः शब्दाः अवशिष्यन्ते। ततः परं ङ्याप्प्रातिपदिकात् इति सूत्रेण मधु+अरि इति समुदायात् परं पुनः सुप् विभक्तिः विधीयते। तेन मधु+अरि+सु इति स्थितिः भवति। प्रक्रियया मध्वरिः इति रूपं निष्पद्यते। सर्वत्र समासः भवति चेद् इयमेव प्रक्रिया भवति। परन्तु एतावता समासप्रकरणं तु न पठितम्। अतः अयं प्रपञ्चः भाराय कल्पते इति हेतोः सम्प्रति केवलं जिज्ञासाप्रशमनाय दीयते न तु परीक्षायाः कृते। सन्धिप्रकरणे बहुत्र समासस्य लाघवेन प्रकटनं तु इत्थम् - मधोः अरिः इति विग्रहः। समासे कृते सुपां लुकि पुनः सुब्-विधानेन मधु अरिः इति स्थितिः जायते।]

[**व्युत्पत्तिवर्धनाय प्रदीयते अयं विषयः। न तु परीक्षायाः कृते -** अनचि इत्यत्र समासविषये किञ्चित् -

नञ् इत्यस्य अर्थः प्रतिषेधः निषेधः वा भवति। पर्युदासप्रतिषेधः प्रसज्यप्रतिषेधः इति भेदेन प्रतिषेधः द्विधा भवति।

**पर्युदासप्रतिषेधः -** यदा द्वयोः पदयोः समासः भवति तदा तयोः पदयोः परस्परम् आकाङ्क्षादिवशात् अन्वयः/सम्बन्धः भवति। नृपदासः इति समासस्य विग्रहः नृपस्य दासः इति। नृपस्य किम् इति जिज्ञासा उदेति। दासः इति उत्तरेण सा शान्ता भवति। दासः सेवकः परिचरः। दासः इति शब्दस्य स्वभावः एव अस्ति यत् दासः कस्यचित् भवति। अतः तत्र जिज्ञासा उदेति यत् दासः कस्य



इति। नृपस्य इति उत्तरेण सा जिज्ञासा शान्ता भवति। अर्थात् नृपस्य दासे सम्बन्धः। दासस्य नृपे सम्बन्धः।

इत्थं यदा नञ् इति अव्ययस्य समासः भवति तदा न ब्राह्मणः अब्राह्मणः इति समस्तं पदं निष्पद्यते। तदा नञ् इति अव्ययस्य अ एव अवशिष्यते। निषेधः एव नञर्थः। तदा कस्य निषेधः। ब्राह्मणस्य निषेधः। अत्र नञर्थस्य निषेधस्य अन्वयः/सम्बन्धः ब्राह्मणे अस्ति। तर्हि समासस्य अर्थः कः। समासार्थः भवति - ब्राह्मणभिन्नः ब्राह्मणसदृशः इति। कः अस्ति ब्राह्मणभिन्नः ब्राह्मणसदृशः। क्षत्रियः। अयं निषेधः पर्युदासः इति कथ्यते।

वाक्येन विधिः वा भवति निषेधो वा भवति। यथा जलं देहि इति विधिः। जलं न देहि इति निषेधः। पर्युदासे निषेधस्य प्राधान्यं नास्ति, विधेः प्राधान्यम् अस्ति, किञ्च नञः यस्मिन् अन्वयः भवति तेन सदृशस्य ग्रहणं तत्र भवति, नञः अन्वयः उत्तरपदे ब्राह्मणे अस्ति। एवञ्च सदा ब्राह्मणभिन्नः ब्राह्मणसदृशः इति एवम् अर्थः बोध्यः। असेवकः गच्छति - सेवकभिन्नः सेवकसदृशः गच्छति। अत्र गमनक्रियायाः अभावः न विवक्षितः।

**प्रसज्यप्रतिषेधः** - न व्यापारशतेनापि शुकवत् पाठ्यते बकः इति उदाहरणे नञ् अस्ति। तस्य केनापि समासः नास्ति। यद्यपि वाक्ये नञ् कुत्रापि लिखितः अस्ति तथापि तस्य अन्वयः/सम्बन्धः सदा समापिकया क्रियया सह भवति। अतः न पाठ्यते इत्येव अन्वयः भवति। एतेन क्रियायाः निषेधः प्रधानम् अस्ति। पाठनक्रियायाः अभावः मुख्यत्वेन विवक्षितः। एवं स्थलेषु प्रसज्यप्रतिषेधः भवति। तस्मिन् निषेधः प्रधानं भवति, नञः अन्वयः क्रियायाम् अस्ति।

नञः समासः भवति चेत् पर्युदासः एव अर्थः अभीष्टः। परन्तु क्वचित् समासे अपि प्रसज्यप्रतिषेधार्थे नञ् दृश्यते। तदा स समासः असमर्थसमासः इति कथ्यते। अर्थात् असमर्थसमासः न कर्तव्यः तथापि क्वचिद् दृश्यते अङ्गीक्रियते च। अनचि च इति सूत्रे अनचि इति समासे प्रसज्यप्रतिषेधः अस्ति।]

## [ ६.७]  झलां जश् झशि॥ (८.४.५३)

**सूत्रार्थः** - झलः स्थाने जश् झशि परे संहितायाम् विषयीभूतायाम्।

**सूत्रव्याख्या** - विधिसूत्रमिदम्। अस्मिन् सूत्रे त्रीणि पदानि सन्ति। झलाम् जश् झशि इति सूत्रे उल्लिखितानां पदानां सन्धेः विच्छेदः। तत्र झलाम् (६/३) - षष्ठीबहुवचनम्। जश् (१/१) प्रथमैकवचनम्। झशि (७/१) सप्तम्येकवचनम्। तयोर्य्वावचि संहितायाम् (८.२.१०८) इति सूत्रस्थम् संहितायाम् इति पदमपि अधिकृतम्। लब्धानि पदानि योज्यन्ते चेत् या स्थितिः भवति सा - संहितायाम् झलां जश् झशि। सूत्रार्थो भवति - झलः स्थाने जश् भवति झशि परे संहितायाम् सत्याम्।

**उदाहरणम्** - अनचि च इति सूत्रेण मध् ध् व् अरिः इति स्थितिः उत्पन्ना। तत्र झल् प्रथमधकारः अस्ति। स च झशः द्वितीयधकारात् अव्यवहितपूर्वः अस्ति। अतः झलां जश् झशि इति सूत्रेण प्रथमधकारस्य स्थाने जश् भवति। एकस्य स्थानिनः जश् - ज ब ग ड द एते पञ्च आदेशाः प्राप्ताः।



तेषु कतमः आदेशः स्यात्। स्थानिसंख्या आदेशसंख्यातः भिन्ना अस्ति। अतः स्थानेऽन्तरतमः इति परिभाषा अत्र प्रवर्तते। तत्र स्थानिना धकारेण सदृशतमः आदेशः भवति। स्थानिनः धकारस्य उच्चारणस्थानं दन्ताः। आदेशेषु जकारस्य उच्चारणस्थानं तालु, बकारस्य ओष्ठौ, गकारस्य कण्ठः, डकारस्य मूर्धा, दकारस्य दन्ताः। अतः धकारेण सदृशतमः तेषु विधीयमानेषु दकारः एक एव लभ्यते। अतः प्रथमधकारस्य स्थाने दकारे कृते म द् ध् व् अरिः इति स्थितिः जायते। तदा संयोगान्तस्य लोपः इति सूत्रेण वकारस्य लोपे प्राप्ते यणः प्रतिषेधो वाच्यः इति वार्तिकेन लोपस्य निधेषे कृते वर्णानां मेलनं कृत्वा लेखने मद्ध्वरिः इति रूपं सिद्ध्यति।

अनचि च इति सूत्रेण द्वित्वं विकल्पेन क्रियते। यदा द्वित्वं भवति तदा मद्ध्वरिः इति रूपं भवतीति आलोचितमेव। यदि द्वित्वं न भवति तर्हि द्वित्वाभावपक्षे म ध् व् अरिः इति स्थिते संयोगान्तस्य लोपः इति सूत्रेण वकारस्य लोपे प्राप्ते यणः प्रतिषेधो वाच्यः इति वार्तिकेन लोपस्य निधेषे कृते वर्णानां मेलनं कृत्वा लेखने मध्वरिः इति रूपं सिद्ध्यति। इत्थं मद्ध्वरिः मध्वरिः इति रूपद्वयं निष्पद्यते।

**आन्तरतम्यपरीक्षा -**

स्थानेऽन्तरतमः इति परिभाषा यत्र प्रवर्तते तत्र स्थानिना सदृशतमः आदेशः कर्तव्यः। सादृश्यम् स्थानार्थगुणप्रमाणतः चतुर्विधम् अस्ति। सदृशतमस्य आदेशस्य अन्वेषणाय आन्तरतम्यपरीक्षा क्रियते एव। सा च परीक्षा अत्र किञ्चित् प्रदर्श्यते।

**प्रमाणकृद् आन्तर्यमस्ति न वा -** प्रमाणमत्र उच्चारणकालः। स्थानी धकारः अर्धमात्रिकः, आदेशाः जश् ज ब ग ड द एते पञ्च समेऽपि अर्धमात्रिकाः। अतः तेषु कश्चिदेकः प्रमाणतः अन्तरतमः नास्ति।

**अर्थकृद् आन्तर्यमस्ति न वा -** वर्णानां न कोऽपि अर्थः अत्र गृह्यते। समुदायो ह्यर्थवान् तस्यैकदेशोऽनर्थकः इति न्यायः। अतः अर्थतः आन्तर्यं न विचार्यते।

**गुणकृदान्तर्यमस्ति न वा -** गुणशब्दस्यार्थः अत्र बाह्ययत्नः। स्थानिना धकारेण आदेशेषु यस्य बाह्ययत्नाः समानाः सन्ति स आदेशः धकारेण सदृशतमः। बाह्ययत्नाः सविस्तरम् अधः प्रदर्श्यन्ते।

| | **वर्णः** | **बाह्ययत्नाः** | | | |
|---|---|---|---|---|---|
| **स्थानी** | **ध** | **संवारः** | **नादः** | **घोषः** | **महाप्राणः** |
| आदेशाः | ज | संवारः | नादः | घोषः | अल्पप्राणः |
| | ब | संवारः | नादः | घोषः | अल्पप्राणः |
| | ग | संवारः | नादः | घोषः | अल्पप्राणः |
| | ड | संवारः | नादः | घोषः | अल्पप्राणः |
| | द | संवारः | नादः | घोषः | अल्पप्राणः |



अत्र सर्वेषामपि आदेशानां बाह्ययत्नः समानः एव अस्ति। परन्तु आदेशेषु कस्यापि वर्णस्य बाह्ययत्नः स्थानिना धकारेण समानः नास्ति। अतः न कोऽपि एकः वर्णः सदृशतमः। अतः गुणकृद् आन्तर्यं न सम्भवति।

**स्थानकृद् आन्तर्यमस्ति न वा** - स्थानिनः धकारस्य उच्चारणस्थानं दन्ताः। आदेशेषु जकारस्य उच्चारणस्थानं तालु, बकारस्य ओष्ठौ, गकारस्य कण्ठः, डकारस्य मूर्धा, दकारस्य दन्ताः। अतः धकारेण सदृशतमः तेषु विधीयमानेषु दकारः एक एव लभ्यते।

अत्र एकं लौकिकमुदाहरणम् विषयस्य सुबोधाय दीयते - तद्यथा रामः दश जनान् वदति यत् मम हस्ते पञ्च आम्रफलानि सन्ति। भवत्सु यस्य हस्ते मम फलैः सदृशतमानि फलानि सन्ति, तस्मै अहं पुरस्कारं दास्यामि।

तत्र प्रथमः प्रसङ्गः - तत्र तेषु प्रत्येकं जनानाम् हस्ते पञ्च फलानि सन्ति। परन्तु कस्यचित् एकम् आम्रफलम्, कस्यचिद् द्वे, कस्यचित् त्रीणि कस्यचित् पुनः चत्वारि इति। कस्यचित् एकस्य मन्दारस्य हस्ते पञ्च आम्रफलानि सन्ति। तदा कः सदृशतमः। तदा यस्य हस्ते पञ्च आम्रफलानि सन्ति स एव सदृशतमः। अतः पुरस्कारः मन्दाराय दीयते।

द्वितीयः प्रसङ्गः - तेषु प्रत्येकं जनानाम् हस्ते पञ्च फलानि सन्ति। किञ्च सर्वेषां हस्ते पञ्च बदरफलानि सन्ति। एकस्यापि हस्ते आम्रफलानि न सन्ति। तदा कः सदृशतमः। तदा सर्वे समानाः। न कश्चन एकः सदृशतमः। अतः पुरस्कारः न दीयते।

अतः एव यदि आदेशे विद्यमानाः सर्वेऽपि समानाः सन्ति तर्हि तेषु न कोऽपि अन्तरतमः।]

## ६.७.१) रूपसाधनम्

व्याकरणस्य प्रधानं कार्यं भवति प्रक्रियया साधुशब्दस्य निष्पादनम्। साधुशब्दस्य निष्पादने क्रमशः बहूनां सूत्राणां प्रयोगः भवति। सा प्रक्रिया एव रूपसाधनम्। रूपसाधनम् अत्यन्तम् अल्पशब्दैः प्रकटयितुं शक्यते, महता विस्तरेण च प्रदर्शयितुं शक्यते। अत्र उदाहरणरूपेण सुद्ध्युपास्यः इति रूपं लघुमध्यमविस्तृतोपायैः प्रदर्श्यते।

**प्रकारः - १ –** केवलं परिणामस्य/**आदेशस्य** उल्लेखः

**सुद्ध्युपास्यः - यकारे, विकल्पेन द्वित्वे, दकारे** द्वित्वपक्षे सुद्ध्युपास्यः, द्वित्वाभावपक्षे च सुध्युपास्यः इति रूपं सिद्ध्यति।

**प्रकारः - २ – स्थानिनः** आदेशस्य च उल्लेखः

**सुद्ध्युपास्यः - ईकारस्य** यकारे, **धकारस्य** विकल्पेन द्वित्वे, **प्रथमधकारस्य स्थाने** दकारे, **यकारस्य लोपे प्राप्ते**, तन्निषेधे द्वित्वपक्षे सुद्ध्युपास्यः, द्वित्वाभावपक्षे च सुध्युपास्यः इति रूपं सिद्ध्यति।



**प्रकारः - ३** – स्थानिनः आदेशस्य **निमित्तस्य** च उल्लेखः

**सुद्ध्युपास्यः - उकारे परे** ईकारस्य स्थाने यकारे, **अचः परस्य** धकारस्य विकल्पेन द्वित्वे, **धकारे परे** प्रथमधकारस्य स्थाने दकारे, **पदान्तत्वात्** यकारस्य लोपे प्राप्ते, तन्निषेधे द्वित्वपक्षे सुद्ध्युपास्यः, द्वित्वाभावपक्षे च सुध्युपास्यः इति रूपं सिद्ध्यति।

**प्रकारः - ४** – **प्रत्याहारस्य** स्थानिनः आदेशस्य निमित्तस्य च उल्लेखः

**सुद्ध्युपास्यः - अचि** उकारे परे **इकः** ईकारस्य स्थाने **यणि** यकारे, **अचः** उकारात् परस्य यरः धकारस्य विकल्पेन द्वित्वे, **झशि** धकारे परे प्रथमधकारस्य स्थाने **जशि** दकारे, पदान्तत्वात् यकारस्य लोपे प्राप्ते, तन्निषेधे द्वित्वपक्षे सुद्ध्युपास्यः, द्वित्वाभावपक्षे च सुध्युपास्यः इति रूपं सिद्ध्यति।

**प्रकारः - ५** – प्रत्याहारस्य स्थानिनः आदेशस्य निमित्तस्य **सूत्रस्य** च उल्लेखः

**सुद्ध्युपास्यः - इको यणचि इति सूत्रेण** अचि उकारे परे इकः ईकारस्य स्थाने यणि यकारे, **अनचि च इति सूत्रेण** अचः उकारात् परस्य यरः धकारस्य विकल्पेन द्वित्वे, **झलां जश् झशि इति सूत्रेण** झशि धकारे परे झलः प्रथमधकारस्य स्थाने जशि दकारे, **संयोगान्तस्य लोपः इति सूत्रेण** पदान्तत्वात् यकारस्य लोपे प्राप्ते, **यणः प्रतिषधो वाच्यः इति वार्तिकेन** यलोपस्य निषेधे द्वित्वपक्षे सुद्ध्युपास्यः, द्वित्वाभावपक्षे च सुध्युपास्यः इति रूपं सिद्ध्यति।

**प्रकारः - ६** – **स्थितेः** प्रत्याहारस्य स्थानिनः आदेशस्य निमित्तस्य सूत्रस्य च उल्लेखः

**सुद्ध्युपास्यः - सुधी उपास्यः इति स्थिते** इको यणचि इति सूत्रेण अचि उकारे परे इकः ईकारस्य स्थाने यणि यकारे, **सुध् य् उपास्यः इति जाते** अनचि च इति सूत्रेण अनचि धकारे परे अचः उकारात् परस्य यरः धकारस्य विकल्पेन द्वित्वे, **सु ध् ध् य् उपास्यः इति जाते** झलां जश् झशि इति सूत्रेण झशि धकारे परे झलः प्रथमधकारस्य स्थाने जशि/जश्त्वे दकारे, यणः प्रतिषधो वाच्यः इति वार्तिकेन यलोपस्य निषेधे **सु द् ध् य् उपास्यः इति जाते** सर्ववर्णमेलने द्वित्वपक्षे **सुद्ध्युपास्यः,** द्वित्वाभावपक्षे च **सुध्युपास्यः** इति रूपं सिद्ध्यति।

**प्रकारः - ७** – स्थितेः प्रत्याहारस्य स्थानिनः आदेशस्य निमित्तस्य सूत्रस्य **परिभाषायाः** च उल्लेखः

**सुद्ध्युपास्यः** - सुधी उपास्यः इति स्थिते इको यणचि इति सूत्रेण अचि उकारे परे इकः ईकारस्य स्थाने यणि **स्थानेऽन्तरतमः इति परिभाषया स्थानत आन्तर्याद्** यकारे, सु ध् य् उपास्यः इति जाते अनचि च इति सूत्रेण अनचि यकारे परे अचः उकारात् परस्य यरः धकारस्य विकल्पेन द्वित्वे, सु ध् ध् य् उपास्यः इति जाते झलां जश् झशि इति सूत्रेण झशि धकारे परे झलः प्रथमधकारस्य स्थाने जशि/जश्त्वे **स्थानेऽन्तरतमः इति परिभाषया स्थानत आन्तर्याद्** दकारे, **अलोऽन्त्यस्य इति परिभाषाबलेन** संयोगान्तस्य लोपः इति सूत्रेण यलोपे प्राप्ते यणः प्रतिषधो वाच्यः इति वार्तिकेन



यलोपस्य निषेधे सु द् ध् य् उपास्यः इति जाते सर्ववर्णमेलने द्वित्वपक्षे सुद्ध्ध्युपास्यः, द्वित्वाभावपक्षे च सुध्युपास्यः इति रूपं सिद्ध्यति।



## पाठगतप्रश्नाः-१

१. संहिताशब्दस्य अर्थः कः।

२. इको यणचि इति सूत्रस्यार्थं लिखत।

३. संयोगान्तस्य लोपः इति सूत्रस्यार्थं लिखत।

४. मह्य्याकारः इति उदाहरणे यकारस्य द्वित्वं केन सूत्रेण।

५. झलां जश् झशि इति सूत्रे पदानां विभक्तीः वदत।

६. सुद्ध्युपास्यः इत्यस्य वैकल्पिकं रूपं किम्।

## [६.८] एचोऽयवायावः॥ (६.१.७५)

**सूत्रार्थः** - एचः स्थाने क्रमाद् अय् अव् आय् आव् एते स्युः अचि।

**सूत्रव्याख्या** - विधिसूत्रमिदम्। अस्मिन् पदद्वयमस्ति। एचः अयवायावः इति सूत्रगतपदच्छेदः। एचः (६/१)। अयवायावः (१/३)। अय् च अव् च आय् च आव् च इति अयवायावः इति इतरेतरयोगद्वन्द्वसमासः। इको यणचि इति सूत्रात् अचि इति सप्तम्यन्तं पदमनुवर्तते। सूत्रार्थः - एचः स्थाने अय् अव् आय् आव् एते स्युः अचि परे। अर्थात् ए ओ ऐ औ इति एते यदि अचः पूर्वं स्युः तर्हि तेषां स्थाने अय् अव् आय् आव् इति आदेशाः भवन्ति। स्थानिनः चत्वारः आदेशा अपि चत्वारः सन्ति। अतः एव यथासंख्यमनुदेशः समानाम् इति परिभाषया प्रथमस्य स्थाने प्रथमः, द्वितीयस्य स्थाने द्वितीयः इति क्रमेण आदेशाः भवन्ति।

**उदाहरणम्** - हरये विष्णवे नायकः पावकः।

एच् इत्यस्य अर्थः ए ओ ऐ औ इति चत्वारः वर्णाः। अतः चत्वारि उदाहरणानि अत्र प्रदर्श्यन्ते। तानि च हरये विष्णवे नायकः पावकः इति।

**सूत्रार्थसमन्वयः** - हरिशब्दस्य चतुर्थ्येकवचनं हरये इति। तस्य रूपसाधनप्रक्रियायाम् हरे ए इति स्थितिः उद्भवति। तत्र रेफात् परं यः एच् एकारः सः अचः एकारात् अव्यवहितपूर्वः अस्ति। अतः प्रकृतसूत्रेण एकारस्य अय् इति आदेशः भवति। तदा हरय् ए इति जायते। ततः वर्णमेलनेन हरये इति रूपं सिद्ध्यति।

विष्णुशब्दस्य चतुर्थ्येकवचनं विष्णवे इति। तस्य रूपसाधनप्रक्रियायाम् विष्णो ए इति स्थितिः उद्भवति। तत्र णकारात् परं यः एच् ओकारः सः अचः एकारात् अव्यवहितपूर्वः अस्ति। अतः प्रकृतसूत्रेण



ओकारस्य अव् इति आदेशः भवति। तदा विष्णव् ए इति जायते। ततः वर्णमेलनेन विष्णवे इति रूपं सिद्ध्यति।

नीधातोः ण्वुल् प्रत्यययोगेन नायकः इति शब्दः भवति। तस्य रूपसाधनप्रक्रियायाम् नै अक इति स्थितिः उद्भवति। तत्र नकारात् परं यः ऐकारः सः अचः अकारात् अव्यवहितपूर्वः अस्ति। अतः प्रकृतसूत्रेण ऐकारस्य आय् इति आदेशः भवति। तदा नाय् अक इति जायते। ततः वर्णमेलनेन नायक इति शब्दः लभ्यते। तस्य प्रथमाविभक्त्यन्तं रूपमस्ति नायकः इति।

पूधातोः ण्वुल् प्रत्यययोगेन पावकः इति शब्दः भवति। तस्य रूपसाधनप्रक्रियायाम् पौ अक इति स्थितिः उद्भवति। तत्र पकारात् परं यः औकारः सः अचः अकारात् अव्यवहितपूर्वः अस्ति। अतः प्रकृतसूत्रेण औकारस्य आव् इति आदेशः भवति। तदा पाव् अक इति जायते। ततः वर्णमेलनेन पावक इति शब्दः लभ्यते। तस्य प्रथमाविभक्त्यन्तं रूपमस्ति पावकः इति।

## [६.९] वान्तो यि प्रत्यये॥ (६.१.७६)

**सूत्रार्थः** - यकारादौ प्रत्यये परे ओदौतोः अव् आव् एतौ स्तः

**सूत्रव्याख्या** - विधिसूत्रमिदम्। अस्मिन् त्रीणि पदानि सन्ति। वान्तः यि प्रत्यये इति सूत्रगतपदच्छेदः। वः (वकारः) अन्ते यस्य स वान्तः इति बहुव्रीहिसमासः। यि (७/१), प्रत्यये (७/१)। यि प्रत्यये इति पदद्वयं सप्तम्यन्तमस्ति। तयोः यि इति अल्-बोधकमस्ति। अतः तदादिविधिः भवति। तेन अर्थः लभ्यते यकारादौ प्रत्यये इति। सूत्रार्थो भवति - यकारादौ प्रत्यये परे ओदौतोः अव् आव् एतौ स्तः।

**उदाहरणम्** - गव्यम् नाव्यम् इति।

**सूत्रार्थसमन्वयः** - गोशब्दात् यत् प्रत्ययः भवति। तदा गो य इति स्थितिः उद्भवति। गकारात् परं यः ओकारः अस्ति, सः यकारादि-यत्-प्रत्ययात् अव्यवहितपूर्वः अस्ति। अतः प्रकृतसूत्रेण ओकारस्य स्थाने अव् आदेशः भवति। तदा गव् य इति जायते। वर्णमेलनेन गव्य इति शब्दः लभ्यते। तस्य प्रथमैकवचनं गव्यम् इति। गोः विकारः इति तदर्थः, अर्थात् दुग्धं दधि इत्यादिकम् भवति गव्यम्।

नौशब्दात् 'यत्'प्रत्ययः भवति। तदा नौ य इति स्थितिः उद्भवति। नकारात् परं यः औकारः अस्ति, सः यकारादि-यत्-प्रत्ययात् अव्यवहितपूर्वः अस्ति। अतः प्रकृतसूत्रेण औकारस्य स्थाने आव् आदेशः भवति। तदा नाव् य इति जायते। वर्णमेलनेन नाव्य इति शब्दः लभ्यते। तस्य प्रथमैकवचनं नाव्यम् इति। नावा तार्यम् इति तदर्थः, अर्थात् नौकया पारं गन्तुं योग्यम् जलादिकं भवति नाव्यम्।

### ६.९.१) अध्वपरिमाणे च। (वार्तिकम्)

इदं वार्तिकमस्ति। पाणिनिना यन्नोक्तं तस्य चिन्ता अस्मिन् अस्ति। अतः इदम् अनुक्तचिन्तां करोति। वार्तिकार्थस्तु - गोशब्दस्य ओकारस्य स्थाने अव् इत्यादेशः भवति यूतिपरे यदि अध्वनः परिमाणं बोध्यते।

**उदाहरणम्** - गव्यूतिः।



**वार्तिकार्थसमन्वयः -** गोशब्दात् यूतिशब्दे परे गो यूति इति स्थितिः उद्भवति। तत्र गकारात् परं यः ओकारः अस्ति तस्य स्थाने अव् आदेशः भवति। तदा गव् यूति इति जायते। वर्णमेलनेन गव्यूति इति शब्दः लभ्यते। तस्य प्रथमैकवचनम् गव्यूतिः। अत्र उक्तः अव्-आदेशः तदा एव भवति यदि गव्यूतिशब्दः मार्गस्य परिमाणे अर्थे प्रयुज्यते। अयं स्त्रीलिङ्गी शब्दः, क्रोशद्वयम् परिमाणम् अस्यार्थः।



## पाठगतप्रश्नाः-२

७. एचोऽयवायावः इति सूत्रस्यार्थं लिखत।

८. वान्तो यि प्रत्यये इति सूत्रे तदादिविधिं प्रदर्शयत।

९. गव्यूतिः इत्यत्र अवादेशः केन।

१०. एचोऽयवायावः इति सूत्रे यथासंख्यपरिभाषायाः लिङ्गं कथम्।

११. जनावस्ति इति सन्धौ कस्य स्थाने आदेशः।

१) पूर्वस्य  २) परस्य  ३) पूर्वपरयोः  ४) पररूपम्

१२. अधोलिखितानां किम् उदाहरणं कस्य सूत्रस्य इति युक्तां तालिकां चिनुत।

| | |
|---|---|
| (क) सुद्ध्युपास्यः | (i) वान्तो यि प्रत्यये। |
| (ख) सुध्युपास्यः | (ii) एचोऽयवायावः |
| (ग) हरये | (iii) झलां जश् झशि। |
| (घ) नाव्यम् | (iv) इको यणचि। |

| | (क) | (ख) | (ग) | (घ) |
|---|---|---|---|---|
| १) | (iii) | (iv) | (i) | (ii) |
| २) | (iv) | (iii) | (ii) | (i) |
| ३) | (iii) | (iv) | (ii) | (i) |
| ४) | (iv) | (i) | (iii) | (ii) |



## पाठसारः

ययोः द्वयोः वर्णयोः संहिता भवति, अर्थात् ययोर्मध्ये अर्धमात्रातः अधिककालस्य व्यवधानं नास्ति तयोः संहिताधिकारस्थसूत्रैः विभिन्नाः आदेशाः भवन्ति। ययोः संहिता तयोः एकः पूर्ववर्णः अपरः परवर्णः च भवति। अस्मिन् पाठे पूर्वस्य स्थाने आदेशः विधीयते।



इकः परम् असवर्णः अच् यदि स्यात् तर्हि इको यणचि इति सूत्रेण इकः स्थाने यण् विधीयते। इक् अत्र अविधीयमानः। अतः अणुदित् सवर्णस्य चाप्रत्ययः इति सूत्रेण स दीर्घादीनाम् ग्रहणं करोति। तेन दीर्घस्य इकः स्थाने अपि यण् आदेशः भवति।

मधु अरिः इत्युदाहरणे इकः उकारस्य स्थाने यण् वकारः भवति। तदा मध् व् अरिः इति स्थितिः उद्भवति। अनचि च इति सूत्रेण धकारस्य विकल्पेन द्वित्वं भवति। द्वित्वपक्षे मध् ध् व् अरिः इति जाते पूर्वधकारस्य झलां जश् झशि इति सूत्रेण जश् दकारः भवति। तदा मद् ध् व् अरिः इति स्थितिः भवति। वकारः संयोगान्तस्य पदस्य अन्ते अस्ति। अतः संयोगान्तस्य लोपः इति सूत्रेण तस्य लोपे प्राप्ते यणः प्रतिषेधो वाच्यः इति वार्तिकेन वलोपस्य निषेधो भवति। किञ्च मद्ध्वरिः इति रूपं निष्पद्यते। द्वित्वाभावपक्षे च मध्वरिः इति साधु रूपं निष्पद्यते। अत्रापि वलोपस्य निषेधः भवति।

अचः पराभ्याम् रेफहकाराभ्याम् परस्य यरः द्वे वा भवतः इति अचो रहाभ्यां द्वे इति सूत्रस्यार्थः। मह्य्याकारः इति तत्र उदाहरणम्। तत्रापि हलः परस्य यमः लोपः विकल्पेन भवति यमि परे। तेन पूर्वयकारस्य यमि यकारे परे विकल्पेन लोपे मह्याकारः इति एकयकारयुक्तं रूपमपि भवति।

एचः परे यदि अच् स्यात् तर्हि एकारस्य स्थाने अय् ओकारस्य स्थाने अव् ऐकारस्य स्थाने आय् औकारस्य स्थाने च आव् इत्यादेशाः भवन्ति इति एचोऽयवायावः इति सूत्रस्य सरलार्थः। एषु वान्तः अव् आव् इति द्वौ स्तः। यदि यकारादिः प्रत्ययः परे स्यात् तर्हि वान्तः आदेशः भवति इति वान्तो यि प्रत्यये इति सूत्रस्यार्थः। गव्यम् नाव्यम् इत्याद्युदाहरणम्।



## योग्यतावर्धनम्

सूत्रव्याख्या इति व्याकरणस्य मुख्यो विषयः। व्याकरणाध्यनकाले सूत्रव्याख्यानं विना पदमेकम् अग्रे न गच्छन्ति विद्वांसः। यो ग्रन्थः साधुरूपाणां निर्माणाय आयोजितः अस्ति स प्रक्रियाग्रन्थः एव भवति। अस्माकम् अयं पाठ्यग्रन्थः अपि प्रक्रियाग्रन्थः एव। प्रक्रियाग्रन्थे सूत्राणां व्याख्यानम् आवश्यकम् भवति।

सूत्रव्याख्यानं परीक्षासु अपि परीक्षकाणां रुचिविषयः। अतः व्याख्यानं नाम किम्। कति अङ्गानि सन्ति व्याख्यानस्य। कथं तत् कर्तव्यम्। तस्य विशिष्टक्रमेण उपस्थापनम् च किम् इति एतत् अत्र छात्रहिताय प्रदर्श्यते। तत्रायं श्लोकः मुख्यः -

**पदच्छेदः पदार्थोक्तिर्विग्रहो वाक्ययोजना।**
**आक्षेपोऽथ समाधानं व्याख्यानं षड्विधं स्मृतम्।।**

१) पदच्छेदः, २) पदोर्थोक्तिः, ३) विग्रहः, ४) वाक्ययोजना, ५) आक्षेपः, ६) समाधानम्

एतत् सर्वम् अवलम्ब्य एकं सूत्रं व्याख्यातम् अस्ति। तस्य अध्ययनं कृत्वा छात्रैः अन्येषामपि सूत्राणां व्याख्याने स्वयं यत्नो विधेयः।



**सूत्रम् - इको यणचि।**

बालानां सुखं पाणिनीयप्रवेशाय विरचिते अस्मत्पाठ्यग्रन्थे अच्सन्धिप्रकरणे सूत्रमिदम् विलसति।

संज्ञा च परिभाषा च विधिर्नियम एव च।

अतिदेशोऽधिकारश्च षड्विधं सूत्रमुच्यते।। इति षड्विधेषु पाणिनीयसूत्रेषु इदं साक्षाल्लक्ष्यसंस्कारानुरोधात् विधिसूत्रम्।

सूत्रेऽस्मिन् त्रीणि पदानि सन्ति। इकः यण् अचि इति च पदच्छेदः। तत्र इकः षष्ठ्येकवचनान्तं पदम्। यण् इति प्रथमैकवचनान्तं पदम्। अचि इति सप्तम्यन्तं पदम्। **संहितायाम्** इति अधिकृतम्। संहितायाम् इकः अचि यण् इति वाक्ययोजना।

**इकः** इत्यत्र इक् इति **आदिरन्त्येन सहेता** इति सूत्रेण निर्मितः प्रत्याहारः। स च कृत्रिमा संज्ञा। इक् इति प्रत्याहारे इ उ ऋ ऌ इति चत्वारः वार्णसमाम्नायिकाः वर्णाः।

**इकः** इति षष्ठी। तदर्थः सम्बन्धः। सम्बन्धस्य अनुयोगी नास्ति। अतः सा **षष्ठी स्थानेयोगा** इति परिभाषया स्थानषष्ठी। तेन स्थाने इति पदं लभ्यते, स्थानं च प्रसङ्गः। अत्र इक् अविधीयमानो भवति। **अणुदित्सवर्णस्य चाप्रत्ययः** इति सूत्रेण इक् सवर्णानां ग्राहको भवति। तेन ईकारादीनां दीर्घाणां स्थानेऽपि कार्यं सम्भवति।

**अचि** इतीह अच् इति प्रत्याहारः, स च संज्ञा, तत्संज्ञिनश्च अ इ उ ऋ ऌ ए ऐ ओ औ इति नव वार्णसमाम्नायिकाः स्वराः।

**तस्मिन्निति निर्दिष्टे पूर्वस्य** इति परिभाषया अचि इत्यस्य अर्थो भवति यद् अचः अव्यवहितपूर्वस्य इति। एवञ्च अच् अविधीयमानः। अत एव **अणुदित्सवर्णस्य चाप्रत्ययः** इति सूत्रेण सवर्णानां ग्राहको भवति। तेन दीर्घाकारादौ परेऽपि कार्यं सम्भवति।

**यण्** इति प्रत्याहारः, स च संज्ञा, तत्संज्ञिनश्च य्, व्, र्, ल् इति चत्वारः वार्णसमाम्नायिकाः वर्णाः। यण् प्रथमान्तः। अत एव विधीयमानो भाव्यमानो वा। **भाव्यमानेन सवर्णानां ग्रहणं न** इति परिभाषया यण् सवर्णानां ग्रहणं न करोति।

इत्थञ्च संहितायां विषयभूतायाम् इकः स्थाने यण् भवति अचि परे इत्यर्थो लभ्यते।

सुधी उपास्यः इति चात्रोदारहणम्। स च समासः। समासे आसत्तेः/सान्निध्यस्य अनिवार्यत्वात् द्वयोः पदयोः मध्ये केवलम् अर्धमात्राकालिकव्यवधानम्। अतः संहितायाः अत्र विषयः। एवञ्च अत्र ईकारः स्थानी, स च अचः अव्यवहितपूर्वः। अतः तस्य स्थाने यण् अर्थात् य् व् र् ल् इति चत्वारः आदेशाः प्राप्ताः। स्थान्यादेशयोः संख्यावैषम्यात् स्थानेऽन्तरतमः इति सूत्रेण स्थानार्थगुणप्रमाणकृत्सु चतुर्विधेषु आन्तर्येषु, स्थानत आन्तर्याद्, ईकारस्य स्थाने यकार एव भवति। एवं प्रक्रियया सुद्ध्युपास्यः इति रूपं च सिद्ध्यतीति शम्।





## पाठान्तप्रश्नाः

अधः केचित् प्रश्नाः दीयन्ते। तेषाम् उत्तराणि प्रामुख्येन दीर्घाणि एव सन्ति। सूत्रव्याख्यानं रूपसाधनं च इति द्वौ भवतः व्याकरणस्य प्रश्नस्य मुख्यौ प्रकारौ। अच्सन्धिप्रकरणे योग्यतावर्धनांशे एकस्य सूत्रस्य व्याख्यानं सविस्तरं प्रदर्शितम् अस्ति। तद् दृष्ट्वा बुद्ध्वा च एतेषामपि सूत्राणां व्याख्यानं कर्तव्यम्।

झलां जश् झशि इति सूत्रे रूपसाधनं कथं कर्तव्यमिति रूपसाधनस्य नैके प्रकाराः सविस्तरं प्रदर्शिताः सन्ति। अतः तत् स्थलं दृष्ट्वा बुद्ध्वा च अन्येषामपि रूपाणां साधने प्रयासः निष्ठया विधेयः। प्रथमं लघु रूपं साधनीयम्। ततः परं क्रमशः विस्तारः कर्तव्यः।

१. संहितैकपदे नित्या ... इति कारिकां व्याख्यात।

२. इको यणचि इति सूत्रं व्याख्यात।

३. संयोगान्तस्य लोपः इति सूत्रं व्याख्यात।

४. अनचि च इति सूत्रं व्याख्यात।

५. एचोऽयवायावः इति सूत्रं व्याख्यात।

६. प्रसज्यप्रतिषेध-पर्युदासप्रतिषेधयोः लघुटिप्पणीं लिखत।

७. अत्र अधः प्रारम्भस्थितिः दीयते। किञ्च यद्रूपं साधनीयं तदपि दीयते। ततः प्रदत्तानि रूपाणि ससूत्रं साधयत।

७.१) घसॢ आदेशः - घस्लादेशः,

७.२) मातृ आज्ञा - मात्राज्ञा, मात्त्राज्ञा

७.३) यदि अपि - यद्यपि

७.४) पितृ उपदेशः - पित्रुपदेशः, पित्त्रुपदेशः

७.५) शशी उदयः - शश्युदयः

७.६) साधु इच्छा - साध्विच्छा, साद्ध्विच्छा

७.७) अभि उदयः - अभ्युदयः, अब्भ्युदयः

७.८) उभौ अपि - उभावपि

७.९) असौ अत्र – असावत्र

७.१०) प्रभो ईहा - प्रभवीहा





## पाठगतप्रश्नानाम् उत्तराणि

**उत्तराणि-१**

१. अर्धमात्राधिककालव्यवधानाभावत्मकः सन्निकर्षः हि संहिता।

२. इकः स्थाने यण् स्यात् अचि परे संहितायां सत्याम्।

३. संयोगान्तं यत् पदम् तदन्त्यस्य अलः लोपः भवति।

४. अचो रहाभ्यां द्वे।

५. सुध्युपास्यः।

६. झलाम् इति षष्ठीबहुवचनम्। जश् इति प्रथमैकवचम्। झशि इति सप्तम्येकवचनम्।

**उत्तराणि-२**

७. एचः स्थाने क्रमाद् अय् अव् आय् आव् एते स्युः अचि।

८. वान्तो यि प्रत्यये इति सूत्रे यि प्रत्यये इति पदद्वयं सप्तम्यन्तमस्ति। तयोः यि इति अल्-बोधकमस्ति। अतः तत्र तदादिविधिः भवति। तेन अर्थः लभ्यते यकारादौ प्रत्यये इति।

९. गव्यूतिः इत्यत्र अवादेशः अध्वपरिमाणे च इति वार्तिकेन।

१०. एचोऽयवायावः इति सूत्रे यथासंख्यपरिभाषायाः लिङ्गं हि स्थानिनः ए ओ ऐ औ इति एचः चत्वारः। आदेशाः अय् अव् आय् आव् इति अयवायावः अपि चत्वारः। स्थानिसंख्या आदेशसंख्या च समाना इति यथासंख्यपरिभाषायाः लिङ्गमत्रास्ति।

११. पूर्वस्य।

१२. ३)

।।इति षष्ठः पाठः।।



७

# अच्सन्धौ एकादेशः प्रकृतिभावश्च

## प्रस्तावना

पाणिनीयसूत्रं हि लक्षणम् उच्यते। तत् लक्षणं यस्य शब्दस्वरूपस्य संस्कारं करोति तत् शब्दस्वरूपं तस्य लक्ष्यम् उच्यते। अतः व्याकरणस्य छात्रेण लक्षणं तल्लक्ष्यं च सुष्ठु बोध्यम्। लक्षणस्य अर्थं जानाति चेदेव लक्ष्यस्य संस्कारं कर्तुं प्रभवति। अतः लक्षणम् तदर्थः लक्ष्यम् एतत् त्रितयम् निष्ठया ज्ञेयमेव। अयमेव व्याकरणाध्ययनस्य पन्थाः। स एव खलु वैयाकरणः यः लक्षणं जानाति, अर्थं जानाति, लक्ष्यं च जानाति, लक्षणेन लक्ष्यस्य संस्कारं च करोति, एवं संस्कृतानि पदानि च व्यवहरति।

संहितायां सत्याम् पूर्वपरयोः पूर्वस्य स्थाने आदेशः भवतीति पूर्वपाठे आलोचितम्।

एकः पूर्वपरयोः इति अधिकारसूत्रमत्र मुख्यम्। ययोः वर्णयोः संहिता तयोः एकः पूर्ववर्णः अपरः परवर्णः च भवति। अस्मिन् पाठे पूर्वपरयोः द्वयोः स्थाने एकः एव आदेशः विधीयते। अयमस्य पाठस्य मुख्यो विषयः।

क्वचित् यद्यपि वयं चिन्तयामः यत् अत्र सन्धिपरिणामः भवतु परन्तु नैव भवति। तादृशानि स्थलानि अपि सन्ति। तत्र प्रकृतिभावः भवति इति उच्यते। अर्थात् यद्यपि वर्णौ समीपम् आगतौ तथापि परिणामः न भवति। तयोः प्रकृतिः स्वभावः स्वरूपम् तथैव तिष्ठति। अयमेव प्रकृतिभावः।



## उद्देश्यानि

इमं पाठं पठित्वा भवान् -

- अधिकारसूत्रं कथम् अन्येषु सूत्रेषु कार्यं करोति इति बोद्धुं शक्नुयात्।
- कदा पूर्वपरयोः एकादेशः भवति इति ज्ञास्यति।
- सूत्राणां व्याखानं कर्तुं प्रभवेत्।
- प्रदत्तानाम् सन्धेः उदाहरणानां ससूत्रं साधनं कर्तुं पारयेत्।
- सिद्धकाण्डम् असिद्धकाण्डम् इति पाणिनेः कौशलं ज्ञास्यति।
- गुणः वृद्धिः पररूपम् पूर्वरूपम् सवर्णदीर्घः प्रकृतिभावः इति एतेषां सन्धीनां ज्ञानं प्राप्स्यति।
- अस्य पाठस्य सम्यक् ज्ञानेन अग्रिमेषु पाठेषु अस्य प्रवृत्तिस्थलानि बुद्ध्वा तेषां संस्कारं कर्तुं प्रभवेत्।

### [७.१] एकः पूर्वपरयोः॥ (६.१.८१)

**सूत्रार्थः** - अस्मिन्नधिकारे विधीयमानः आदेशः पूर्वपरयोः स्थाने एकः एव भवति।



**सूत्रव्याख्या** - अधिकारसूत्रमिदम्। अस्मिन् पदद्वयमस्ति। एकः (१/१), पूर्वपरयोः (६/२) पूर्वश्च परश्च इति पूर्वपरौ इति इतरेतरयोगद्वन्द्वसमासः। तयोः पूर्वपरयोः इति षष्ठीद्विवचनमिदम्। इतः आरभ्य ख्यत्यात् परस्य (६.१.११२) इति सूत्रात् प्राक् अयम् अधिकारः। ययोः वर्णयोः संहिता तयोः एकः पूर्ववर्णः अपरः परवर्णः च भवति। अस्मिन्नधिकारे विधीयमानः आदेशः पूर्वपरयोः स्थाने एकः एव कर्तव्यः इति तदर्थः। अस्मिन्नधिकारे पूर्वपरयोः द्वयोः स्थाने एकः आदेशः भवति। अस्य उदाहरणानि अग्रे आद् गुणः इत्यादिषु यथास्थानं स्पष्टीभविष्यन्ति।

## [ ७.२] आद् गुणः॥ (६.१.८४)

**सूत्रार्थः** - अवर्णाद् अचि परे पूर्वपरयोः स्थाने एकः गुण आदेशः भवति।

**सूत्रव्याख्या** - विधिसूत्रमिदम्। आद् गुणः इति पदद्वयात्मकमिदं सूत्रम्। आद् (५/१), न तु तपरकरणम्। सर्वविधम् अपि अकारं ग्राहयति। गुणः (१/१), अदेङ्गुणः इति संज्ञाकरणात् अ (ह्रस्वः), ए, ओ इति एते स्वराः गुणपदवाच्याः। एकः पूर्वपरयोः (६.१.८१) इति अधिकृतम्। पूर्वस्य परस्य च इति द्वयोः स्थाने एकः एव आदेशः भवतीति तदर्थः। इको यणचि इति सूत्रात् अचि (७/१) इत्यनुवर्तते। अवर्णाद् अचि परे पूर्वपरयोः स्थाने एकः गुण आदेशः भवति इति सूत्रार्थः। अवर्णाद् अचि परे पूर्वपरयोः अवर्णाचोः स्थाने एकः गुणादेशः भवतीति फलितार्थः। अयं गुणादेशः असवर्णे अचि परे भवति इति अवधेयम्।

**उदाहरणम्** - उपेन्द्रः। गङ्गोदकम्। कृष्णर्द्धिः। तवल्कारः।

**सूत्रार्थसमन्वयः** - उप इन्द्रः इति स्थिते पकारात् परं यः अकारः अस्ति, तस्मात् परम् अच् इन्द्रशब्दस्य इकारःअस्ति, एवञ्च सः अकारः इन्द्रशब्दस्य इकारात् अव्यवहितपूर्वः अस्ति। अतः प्रकृतसूत्रेण अकार-इकारयोः स्थाने एकः गुणनामकः आदेशः प्राप्नोति। अदेङ् गुणः इति सूत्रं संज्ञाप्रकरणे पठितम्। अ ए ओ इति एतेषां नाम गुणः इति। तत्र अ+इ इत्यनयोः स्थाने एतेषु त्रिषु कतमः स्यादिति प्रश्नः। तत्र स्थान्यादेशयोः संख्यावैषम्यमस्ति। अतः स्थानेऽन्तरतमः इति परिभाषया स्थानकृदान्तर्यमत्र द्रष्टव्यम्। तद्यथा - अ+इ इत्यत्र अकारस्य उच्चारणस्थानं कण्ठः, इकारस्य च तालु। आदेशेषु अकारस्य उच्चारणस्थानं कण्ठः, एकारस्य कण्ठतालु, ओकारस्य कण्ठोष्ठम्। अत्र इदं स्पष्टं यद् अकार-इकारयोः स्थानं कण्ठः च तालु च, एकारस्यापि स्थानं कण्ठतालु। अतः अ+इ इति स्थानिना सह आदेशस्य ए इत्यस्य स्थानतः आन्तर्यम्, सामीप्यम् अस्ति। अत एव एकारः एव आदेशः भवति। तदा उपेन्द्रः इति शब्दः निष्पद्यते।

गङ्गायाः उदकम् इति विग्रहः। समासे कृते गङ्गा उदकम् इति स्थितिः उद्भवति। गङ्गा उदकम् इति स्थिते गकारात् परं यः आकारः अस्ति, तस्मात् परम् अच् उदकशब्दस्य उकारः अस्ति, एवञ्च सः आकारः उदकशब्दस्य उकारात् अव्यवहितपूर्वः अस्ति। प्रकृतसूत्रेण आकार-उकारयोः स्थाने एकः गुणनामकः आदेशः प्राप्नोति। तत्र आ+उ इत्यनयोः स्थाने अ ए ओ इति एतेषु त्रिषु गुणनामकेषु कतमः स्यादिति प्रश्नः। तत्र स्थान्यादेशयोः संख्यावैषम्यमस्ति। अतः स्थानेऽन्तरतमः इति परिभाषया स्थानकृदान्तर्यमत्र द्रष्टव्यम्। तद्यथा - आ+उ इत्यत्र आकारस्य उच्चारणस्थानं कण्ठः, उकारस्य च



ओष्ठौ। आदेशेषु अकारस्य उच्चारणस्थानं कण्ठः, एकारस्य कण्ठतालु, ओकारस्य कण्ठोष्ठम्। अत्र इदं स्पष्टं यद् आकार-उकारयोः स्थानं कण्ठः च औष्ठौ च, ओकारस्यापि स्थानं कण्ठोष्ठम्। अतः आ+उ इति स्थानिना सह आदेशस्य ओकारस्य स्थानतः आन्तर्यम्, सामीप्यम् अस्ति। अत एव ओकारः एव आदेशः भवति। तदा गङ्गोदकम् इति शब्दः निष्पद्यते।

कृष्णस्य ऋद्धिः इति विग्रहः। समासे कृते कृष्ण ऋद्धिः इति स्थितिः उद्भवति। कृष्ण ऋद्धिः इति स्थिते णकारात् परं यः अकारः अस्ति, तस्मात् परम् अच् ऋद्धिशब्दस्य ऋकारः अस्ति, एवञ्च सः अकारः ऋद्धिशब्दस्य ऋकारात् अव्यवहितपूर्वः अस्ति। प्रकृतसूत्रेण अकार-ऋकारयोः स्थाने एकः गुणनामकः आदेशः कर्तव्यः अस्ति। अ+ऋ इत्यनयोः स्थाने अ ए ओ इति एतेषु त्रिषु गुणनामकेषु कतमः स्यादिति प्रश्नः। तत्र स्थान्यादेशयोः संख्यावैषम्यमस्ति। अतः स्थानेऽन्तरतमः इति परिभाषया स्थानकृदान्तर्यमत्र द्रष्टव्यम्। तद्यथा - अ+ऋ इत्यत्र अकारस्य उच्चारणस्थानं कण्ठः, ऋकारस्य च मूर्धा। आदेशेषु अकारस्य उच्चारणस्थानं कण्ठः, एकारस्य कण्ठतालु, ओकारस्य कण्ठोष्ठम्। अत्र इदं स्पष्टं यद् अकार-ऋकारयोः स्थानं कण्ठः च मूर्धा च, परन्तु आदेशेषु कस्यापि उच्चारणस्थानं कण्ठः मूर्धा चेति उभयं नास्ति। अतः आन्तरतम्यस्य अभावः अस्ति। तदा कः आदेशः स्याद् इति प्रश्नः। तदा -

## [ ७.३] उरण् रँपरः॥ (१.१.५०)

**सूत्रार्थः -** ऋकारस्य स्थाने विधीयमानः अण् रपरः सन्नेव प्रवर्तते।

**सूत्रव्याख्या -** परिभाषासूत्रमिदम्। अस्मिन् त्रीणि पदानि सन्ति। उः अण् रपरः इति सूत्रगतपदच्छेदः। उः इति ऋवर्णस्य षष्ठ्येकवचनम्। अतः उः इत्यस्य ऋवर्णस्य ऌवर्णस्य च इति अर्थः। अण् (१/१), रपरः (१/१)। अत्र अण् पूर्वणकारेण सह अस्ति। रः परो यस्माद् असौ रपरः इति बहुव्रीहिसमासः। अत्र रँ इति प्रत्याहारः। माहेश्वरसूत्रेषु लण् इति सूत्रे लकारात् परं यः अकारः सः अनुनासिकः अस्ति इति पाणिनिपरम्परायाम् मन्यते। तेन अँकारेण सह रेफस्य योगेन रँ इति प्रत्याहारः निष्पद्यते। तस्य अर्थः र् ल् इति वर्णौ। षष्ठी स्थानेयोगा इति सूत्रात् स्थाने इति पदमनुवर्तते। स्थानेऽन्तरतमः इति सूत्रादपि स्थाने इति पदमनुवर्तते, तस्य च प्रथमान्ततया विपरिणामो भवति। सूत्रार्थः - ऋकारस्य स्थाने अणः प्रसङ्गे सः अण् रपरः सन्नेव प्रवर्तते। अर्थात् यदि ऋवर्णस्य स्थाने अ इ उ इत्येषु कश्चिदपि प्रसज्यते तदा प्रयोगात् पूर्वं तैः सह र् योजनीयः इति। यदि ऌवर्णस्य स्थाने अ इ उ इत्येषु कश्चिदपि प्रसज्यते तदा प्रयोगात् पूर्वं तैः सह ल् योजनीयः इति।

**अयमत्र सारः -**

अ+ऋ इति अनयोः स्थाने गुणः कर्तव्यः चेत् सर्वदा अर् भवति। अ+ऌ इति अनयोः स्थाने गुणः कर्तव्यः चेत् सर्वदा अल् भवति। अ+ऋ इति अनयोः स्थाने वृद्धिः कर्तव्यः चेत् सर्वदा आर् भवति। अ+ऌ इति अनयोः स्थाने वृद्धिः कर्तव्यः चेत् सर्वदा आल् भवति। ऋकारस्य गुणवृद्धी अरारावौ एव इति भाष्यवाक्यम्।



**उदाहरणम् -** कृष्ण ऋद्धिः इति स्थिते अकार-ऋकारयोः स्थाने आद् गुणः इति सूत्रेण अ ए ओ इति गुणः प्रसक्तः। प्रकृतसूत्रेण रपरत्वे कृते अर् ए ओ इति त्रयः आदेशः प्राप्ताः। एतेषु अर् इत्यस्य उच्चारणस्थानं कण्ठः च मूर्धा च। अतः अ+ऋ इति स्थानिना सह अर् इत्यस्य एव स्थानकृदान्तर्यमस्ति। अतः अर् इत्येव आदेशः भवति। तेन कृष्ण् अर् द्धिः इति स्थिते वर्णसम्मेलनेन कृष्णर्द्धिः इति परिनिष्ठितं रूपं लभ्यते।

तव लृकारः इति वाक्यम्। द्वयोः पदयोः अर्धमात्राकालिकं सामीप्यं विवक्षितं चेत् संहिता भवति। तदा तव लृकारः इति स्थितिः उद्भवति। वकारात् परं यः अकारः, तस्मात् परम् अच् लृकारशब्दस्य लृ इति वर्णः अस्ति, एवञ्च सः अकारः लृकारात् अव्यवहितपूर्वः अस्ति। आद् गुणः इति सूत्रेण अकार-लृकारयोः स्थाने एकः गुणनामकः आदेशः कर्तव्यः अस्ति। अ+लृ इत्यनयोः स्थाने अ ए ओ इति एतेषु त्रिषु गुणनामकेषु कतमः स्यादिति प्रश्नः। तत्र स्थान्यादेशयोः संख्यावैषम्यमस्ति। अतः स्थानेऽन्तरतमः इति परिभाषया स्थानकृदान्तर्यमत्र द्रष्टव्यम्। अ+लृ इत्यत्र अकारस्य उच्चारणस्थानं कण्ठः, लृकारस्य च दन्ताः। अकार-लृकारयोः स्थाने प्रसक्तः गुणः उरण् रपरः इति सूत्रेण अल् ए ओ इति स्यात्। एतेषु अल् इत्यस्य उच्चारणस्थानं कण्ठः च दन्ताः च। अतः अ+लृ इति स्थानिना सह अल् इत्यस्य एव स्थानकृदान्तर्यमस्ति। अतः अल् एव भवति। तेन तव् अल् कारः इति स्थिते वर्णसम्मेलनेन तवल्कारः इति परिनिष्ठितं रूपं लभ्यते।



## पाठगतप्रश्नाः-१

१. एकः पूर्वपरयोः इति कीदृशं सूत्रम्। कश्च तदर्थः।

२. गङ्गोदकम् इत्यत्र ओकारः केन सूत्रेण।

३. आद् गुणः इति सूत्रस्यार्थं लिखत।

४. उरण् रपरः इति सूत्रे अण् केन णकारेण।

५. ऋकारस्य स्थाने इकारः भवति चेत् वस्तुतः कः आदेशः भवति, केन च सूत्रेण।

६. आद् गुणः इत्यस्य उदाहरणम् किम्।

१) गव्यम् २) नाव्यम् ३) विष्णवे ४) उपेक्षा

७. उरण् रपरः इत्यस्य उदाहरणम् किम्।

१) कृष्णर्द्धिः २) गवेन्द्रः ३) नरेन्द्रः ४) शचीन्द्रः

## [७.४] वृद्धिरेचि॥ (६.१.८५)

**सूत्रार्थः -** अवर्णाद् एचि परे पूर्वपरयोः स्थाने एकः वृद्धिः आदेशः भवति।



**सूत्रव्याख्या -** विधिसूत्रमेतद्। अस्मिन् पदद्वयमस्ति। वृद्धिः एचि इति सूत्रगतपदच्छेदः। वृद्धिः (१/१), एचि (७/१)। आद् गुणः इति सूत्राद् आद् इति पञ्चम्येकवचनान्तं पदमनुवर्तते। एकः पूर्वपरयोः (६.१.८१) इति अधिकृतम्। पूर्वस्य परस्य च इति द्वयोः स्थाने एकः एव आदेशः भवतीति तदर्थः। अवर्णाद् एचि परे पूर्वपरयोः स्थाने एकः वृद्धिः आदेशः भवति इति सूत्रार्थः। अर्थात् यदि अवर्णः (ह्रस्वः दीर्घो वा) एचः (ए ओ ऐ औ) अव्यवहितपूर्वः स्यात् तर्हि पूर्वपरयोः स्थाने वृद्धिः (आ ऐ औ) एकादेशः भवतीति। अवर्णाद् एचि परे पूर्वपरयोः अवर्ण-एचोः स्थाने एकः वृद्धिः आदेशः भवतीति फलितार्थः।

**अपवादः -** आद् गुणः इति सूत्रेण अवर्णाद् अचि परे गुणः विहितः। वृद्धिरेचि इति सूत्रेण अवर्णाद् एचि परे वृद्धिः विहिता। अवर्णाद् एचि परे इदं सूत्रद्वयमपि कार्याय प्रवर्तेत। तदा केन सूत्रेण कार्यं कर्तव्यमिति प्रश्नः। यदि सर्वत्र आद् गुणः इति सूत्रं प्रवर्तेत तदा वृद्धिरेचि इति सूत्रस्य प्रवृत्त्यर्थं क्षेत्रम् अर्थात् किमपि लक्ष्यं नावशिष्येत। तदा वृद्धिरेचि इति सूत्रं व्यर्थताम् आपद्येत। परन्तु भगवतः पाणिनेः किमपि वचनं न व्यर्थम्। अतः वृद्धिरेचि इति सूत्रस्य यावद् लक्ष्यं तावत् सर्वमपि तस्यैव अस्तु। तस्य लक्ष्ये आद् गुणः न प्रवर्तेत। गुणस्य यावत् लक्ष्यं दृष्टं तावद् वस्तुतः नास्ति। तस्मिन् लाघवम् आगतम्। अयं लक्ष्यसंकोचः अर्थात् लक्ष्ये प्रवृत्तिबाधः वृद्धिरेचि इति सूत्रेण कृतः। अतः वृद्धिरेचि सूत्रं गुणस्य अपवादः। गुणः अवश्यप्राप्तः आसीत्। तथापि वृद्धिरेचि इति सूत्रम् आरब्धम्। अतः तद् बाधकमेव भवति। गुणः उत्सर्गविधिः भवति, वृद्धिः अपवादः भवति।

**उदाहरणम् -** कृष्णैकत्वम्। गङ्गौघः। देवैश्वर्यम्। कृष्णौत्कण्ठ्यम्।

**सूत्रार्थसमन्वयः -** कृष्णस्य एकत्वम् इति विग्रहः। समासे कृते कृष्ण एकत्वम् इति स्थितिः उद्भवति। णकारोत्तरवर्ती यः अकारः, तस्मात् परम् एच् एकत्वशब्दस्य ए इति वर्णः अस्ति, एवञ्च सः अकारः एकारात् अव्यवहितपूर्वः अस्ति। अतः अ+ए इत्यत्र अवर्णाद् एच् इति स्थितिः अस्ति। तदा अ+ए इति पूर्वपरयोः द्वयोः स्थाने प्रकृतसूत्रेण (आ ऐ औ इति एतेषु) वृद्धिः एकादेशः प्राप्नोति। एषु कतमः स्यात्। तत्र स्थान्यादेशयोः संख्यावैषम्यमस्ति। अतः स्थानेऽन्तरतमः इति परिभाषया स्थानकृदान्तर्यमत्र द्रष्टव्यम्। तद्यथा - स्थानिनः अकारस्य उच्चारणस्थानं कण्ठः, एकारस्य च कण्ठतालु। आदेशेषु केवलम् ऐकारस्य एव उच्चारणस्थानं कण्ठतालु। अतः अ+ए इति स्थानिना सह आन्तरतम्यम् ऐकारस्य एव अस्ति। तदा अ+ए इति अनयोः स्थाने अन्तरतमः ऐकारः भवति। तदा कृष्ण् ऐ कत्वम् इति स्थितिः जायते। वर्णमेलनेन कृष्णैकत्वम् इति रूपं सिद्ध्यति।

गङ्गायाः ओघः इति विग्रहः। समासे कृते गङ्गा ओघः इति स्थितिः उद्भवति। तत्र आ+ओ इति अनयोः स्थाने स्थानेऽन्तरतमः इति परिभाषाबलेन कण्ठोष्ठस्थानजन्यत्वधर्मेण अन्तरतमः औकारः भवति। तदा गङ्गौघः इति रूपं सिद्ध्यति। गङ्गाप्रवाहः इति अस्य शब्दस्यार्थः।

देवस्य ऐश्वर्यम् इति विग्रहः। समासे कृते देव ऐश्वर्यम् इति स्थितिः उद्भवति। तत्र अ+ऐ इति अनयोः स्थाने स्थानेऽन्तरतमः इति परिभाषाबलेन कण्ठतालुस्थानजन्यत्वधर्मेण अन्तरतमः ऐकारः भवति। तदा देवश्वैर्यम् इति रूपं सिद्ध्यति।



कृष्णस्य औत्कण्ठ्यम् इति विग्रहः। समासे कृते कृष्ण औत्कण्ठ्यम् इति स्थितिः उद्भवति। तत्र अ+औ इति अनयोः स्थाने स्थानेऽन्तरतमः इति परिभाषाबलेन कण्ठोष्ठस्थानजन्यत्वधर्मेण अन्तरतमः औकारः भवति। तदा कृष्णौत्कण्ठ्यम् इति रूपं सिद्ध्यति। कृष्णसम्बन्धिजिज्ञासा इति तदर्थः।

अच्सन्धिप्रकरणे कस्य सूत्रस्य वस्तुतः कियत् कार्यक्षेत्रम्, कियत् लक्ष्यम् इति अधः पट्टिकापर्यवेक्षणेन स्फुटं भविष्यति।

| पूर्वः | परः | आदेशः | कीदृशः | सूत्रम् |
|---|---|---|---|---|
| अ | इक् | गुणः | पूर्वपरयोः एकादेशः | आद् गुणः |
| अ | एच् | वृद्धिः | पूर्वपरयोः एकादेशः | वृद्धिरेचि |
| इक् | अच् असवर्णः | यण् | पूर्वस्य स्थाने आदेशः | इको यणचि |
| एच् | अच् | अय् अव् आय् आव् | पूर्वस्य स्थाने आदेशः | एचोऽयवायावः |

## [७.५] एत्येधत्यूठ्सु॥ (६.१.८६)

**सूत्रार्थः** - अवर्णाद् एजाद्योः एत्येधत्योः ऊठि च परे पूर्वपरयोः स्थाने वृद्धिः एकादेशः भवति।

**सूत्रव्याख्या** - विधिसूत्रमेतद्। एत्येधत्यूठ्सु इति एकमेव पदमत्र सूत्रे। तच्च सप्तमीबहुवचनान्तम्। एतिः च एधतिः च ऊठ् च इति एत्येधत्यूठः इति इतरेतरयोगद्वन्द्वः। तेषु एत्येधत्यूठ्सु इति। प्रथमपाठे एव आलोचितं यद् धातुनिर्देशाय इक् श्तिप् वा व्यवह्रियते। अत्र इण् गतौ, एध वृद्धौ इति धातू स्तः। तयोः श्तिप्-प्रत्यययोगेन एतिः एधतिः इति शब्दौ निष्पद्येते। आद् गुणः इति सूत्राद् आत् इति पञ्चम्यन्तं पदमनुवर्तते। वृद्धिरेचि सूत्राद् वृद्धिः एचि इति पदद्वयमप्यनुवर्तते। एकः पूर्वपरयोः इति अधिकृतम्। पूर्वस्य परस्य च इति द्वयोः स्थाने एकः एव आदेशः भवतीति तदर्थः। पदयोजना - आद् एचि एत्येधत्यूठ्सु वृद्धिः एकः पूर्वपरयोः इति।

**तदादिविधिः** - अत्र कथं तदादिविधिः भवतीति किञ्चित् प्रदर्श्यते। येन विधिस्तदन्तस्य इति सूत्रव्याख्यावसरे तदाविधिः विवृतः। तस्यैव प्रयोगस्थलानि एतानि। एचि एत्येधत्यूठ्सु इति पदद्वयं सप्तम्याम्। तयोः एचि इति पदेन लक्ष्ये एकदा केवलम् एकः एव अल् लभ्यते। अतः एचि इति अल्बोधकं पदमस्ति। एवं सति तदादिविधिः भवति। अर्थो भवति - एजादिः एतिः एधतिः च इति। अत्र एच् केवलम् इण्-धातोः एध्धातोश्च विशेषणमस्ति, न तु ऊठ् इत्यस्यापि, यतो हि ऊठ् कदापि एजादिः न भवति।

सूत्रार्थो भवति - अवर्णाद् एजाद्योः एत्येधत्योः ऊठि च परे पूर्वपरयोः स्थाने वृद्धिः एकादेशः भवति इति। अर्थात् अवर्णात् परं एजादिः अर्थात् यस्य आदिः वर्णः एच्-प्रत्याहारस्थः अस्ति तादृशः इण् धातुः, एध् धातुः वा यदि स्यात् अथवा ऊठ् स्यात् तर्हि पूर्वपरयोः स्थाने वृद्धिः एकादेशः भवतीति।



**सूत्रावतरणम् -** उप एति उप एधते इत्यत्र वृद्धिरेचि इति सूत्रेणैव वृद्धिसम्भवे एतत्सूत्रं कुतः कृतमिति प्रश्न उदियात्। तत्रोत्तरम् - एङि पररूपम् इति सूत्रम् अग्रे अस्ति। तदर्थो हि - अवर्णान्ताद् उपसर्गाद् एङादौ धातौ परे पूर्वपरयोः पररूपम् एकादेशः भवति। अत एव उप एति, उप एधते इत्यत्र एङि पररूपम् इति सूत्रेण पररूपम् प्राप्तम्। तस्य अपवादत्वेन वृद्धिं विधातुम् एत्येधत्यूठ्सु इति सूत्रं प्रणीतं पाणिनिमुनिना।

**उदाहरणम् -** उपैति। उपैधते। प्रष्ठौहः।

**सूत्रार्थसमन्वयः -** इण्-धातोः प्रथमपुरुषे एकवचने रूपम् एति इति। उप इति उपसर्गयोगेन उप एति इति स्थितिः उद्भवति। धातूपसर्गयोः संहिता अनिवार्या। अत्र अवर्णात् परम् एजादिः अर्थात् एकारादिः इण्-धातुः अस्ति। तदा अ+ए इति पूर्वपरयोः स्थाने एङि पररूपम् इति सूत्रेण पररूपे प्राप्ते एत्येधत्यूठ्सु इति सूत्रेण वृद्धिः विधीयते। तत्र अ+ए इति अनयोः स्थाने स्थानेऽन्तरतमः इति परिभाषाबलेन कण्ठतालुस्थानजन्यत्वधर्मेण अन्तरतमः ऐकारः भवति। तदा उपैति इति रूपं सिद्ध्यति। समीपं गच्छति इति तदर्थः।

एध्धातोः तप्रत्यये रूपम् एधते इति। उप इति उपसर्गयोगेन उप एधते इति स्थितिः उद्भवति। तत्र अवर्णात् परम् एजादिः एध्धातुः अस्तिः। अतः अ+ए इति स्थिते एङि पररूपम् इति सूत्रेण पररूपे प्राप्ते एत्येधत्यूठ्सु इति सूत्रेण वृद्धिः विधीयते। तत्र अ+ए इति अनयोः स्थाने स्थानेऽन्तरतमः इति परिभाषाबलेन कण्ठतालुस्थानजन्यत्वधर्मेण अन्तरतमः ऐकारः भवति। तदा उपैधते इति रूपं सिद्ध्यति। समीपं वर्धते इति तदर्थः।

प्रष्ठौहः इति प्रष्ठवाह् इत्यस्य षष्ठी। तत्र प्रष्ठ ऊहः इति स्थितिः अस्ति। ऊहशब्दे ऊकारः ऊठ् अस्ति इति बोद्ध्यम्। अवर्णाद् ऊठि परे पूर्वपरयोः स्थाने आद् गुणः इति सूत्रेण गुणः प्रसज्यते। अतः आद् गुणः इति सूत्रेण प्राप्तं गुणं बाधित्वा अ+ऊ इति पूर्वपरयोः स्थाने आन्तरतम्यात् औ इति वृद्धिः भवति। तदा प्रष्ठौहः इति रूपं निष्पद्यते।

अस्मिन् सूत्रे कानिचन वार्तिकानि सन्ति। तानि समासेन उपन्यस्यन्ते।

## ७.५.१) अक्षादूहिन्यामुपसंख्यानम्। (वार्तिकम्)

**वार्तिकार्थः -** अक्षशब्दाद् ऊहिनीशब्दे परे पूर्वपरयोः स्थाने वृद्धिः एकादेशः भवति।

**उदाहरणम् -** अक्षाणाम् ऊहिनी इति विग्रहः। समासे कृते अक्ष ऊहिनी इति स्थिते अकार-ऊकारयोः स्थाने आद् गुणः इति सूत्रेण गुणे प्राप्ते अनेन वार्तिकेन वृद्धिः भवति। तदा अक्षौहिणी इति रूपं निष्पद्यते। अक्षौहिणी इति सेनायाः नाम। तस्याः च परिमाणं - २१८७० रथाः, २१८७० गजाः, ६५६१० अश्वाः, १०९३५० पदातयः भवन्ति।

## ७.५.२) प्राद् ऊहोढोढ्येषैष्येषु। (वार्तिकम्)

**वार्तिकार्थः -** प्र इति उपसर्गात् परे यदि ऊह ऊढ ऊढि एष एष्य इति एते शब्दाः स्युः तर्हि पूर्वपरयोः स्थाने वृद्धिः एकादेशः भवति।



**उदाहरणम्** - प्र ऊहः - प्रौहः (उत्तमः ऊहकर्ता, तर्ककर्ता)। प्र ऊढः - प्रौढः (वृद्धः)। प्र ऊढिः - प्रौढिः (प्रौढता)। प्र एषः - प्रैषः (प्रेरणा)। प्र एष्यः - प्रैष्यः (प्रेरणयोग्यः, सेवकः)।

### ७.५.३) ऋते च तृतीयासमासे। (वार्तिकम्)

**वार्तिकार्थः** - तृतीयासमासे अवर्णात् ऋकारादौ ऋतशब्दे परे पूर्वपरयोः स्थाने वृद्धिः एकादेशः भवति।

**उदाहरणम्** - सुखेन ऋतः इति तृतीयासमासे कृते सुख ऋतः इति स्थिते आद् गुणः इत्यनेन गुणे प्राप्ते अनेन वार्तिकेन अकार-ऋकारयोः स्थाने वृद्धिः एकादेशः भवति। स्थानत आन्तर्याद् अकार-ऋकारयोः स्थाने उरण् रपरः इति सूत्रेण आर् आदेशः भवति। तदा सुखार्तः इति रूपं निष्पद्यते। सुखी इति तदर्थः।

### ७.५.४) प्र-वत्सतर-कम्बल-वसनार्ण-दशानाम् ऋणे। (वार्तिकम्)

**वार्तिकार्थः** - प्र वत्सतर कम्बल वसन ऋण दश एभ्यः ऋणशब्दे परे पूर्वपरयोः स्थाने वृद्धिः एकादेशः भवति।

**उदाहरणम्** - प्र ऋणम् - प्रार्णम् (उत्तमम् ऋणम्)। वत्सतर ऋणम् - वत्सतरार्णम् (वत्सस्य कृते गृहीतम् ऋणम्)। कम्बल ऋणम् - कम्बलार्णम् (कम्बलस्य कृते गृहीतम् ऋणम्)। वसन ऋणम् - वसनार्णम् (वस्त्रस्य कृते गृहीतम् ऋणम्)। ऋण ऋणम् - ऋणार्णम् (एकस्य ऋणस्य कृते गृहीतम् अपरम् ऋणम्)। दश ऋणम् - दशार्णम् (यस्मिन् देशे दशप्रकारकं जलम् अस्ति स देशविशेषः)।

## [७.६] उपसर्गाद् ऋति धातौ॥ (६.१.८८)

**सूत्रार्थः** - अवर्णान्ताद् उपसर्गाद् ऋकारादौ धातौ परे पूर्वपरयोः स्थाने वृद्धिः एकादेशः भवति।

**सूत्रव्याख्या** - विधिसूत्रमेतद्। अस्मिन् त्रीणि पदानि सन्ति। उपसर्गात् (५/१), ऋति (७/१), धातौ (७/१)। ऋत् इति तपरकरणम्। तेन ह्रस्वः एव ऋकारः बोध्यः। आद् गुणः इति सूत्राद् आत् इति पञ्चम्यन्तं पदमनुवर्तते। वृद्धिरेचि इति सूत्राद् वृद्धिः इति पदमप्यनुवर्तते। एकः पूर्वपरयोः इति अधिकृतम्। पूर्वस्य परस्य च इति द्वयोः स्थाने एकः एव आदेशः भवतीति तदर्थः। पदयोजना - आद् उपसर्गात् ऋति धातौ वृद्धिः एकः पूर्वपरयोः इति।

**तदन्तविधिः** - अस्मिन् सूत्रे तदन्तविधिः भवति। अत्र आद् उपसर्गात् इति समानविभक्तिकं पदद्वयम् अस्ति। अत्र आद् इति विशेषणम् , उपसर्गात् इति च विशेष्यम्। अतः तदन्तविधिः भवति। तदा तथा विशेष्यः उपसर्गः ग्राह्यः यस्य अन्ते विशेषणम् अवर्णः अस्ति। अत्र उपसर्गः इति विशेष्यः। आद् इति विशेषणम्। तदन्तविधिना अवर्णान्तः उपसर्गः इत्यर्थः भवति।

**तदादिविधिः** - अस्मिन् सूत्रे कथं तदादिविधिः भवतीति किञ्चित् प्रदर्श्यते। येन विधिस्तदन्तस्य इति सूत्रव्याख्यावसरे तदाविधिः विवृतः। तस्यैव प्रयोगस्थलानि एतानि। ऋति धातौ इति पदद्वयं सप्तम्याम्। तयोः ऋति इति पदेन लक्ष्ये एकदा केवलम् एकः एव अल् ऋकारः लभ्यते। अतः



ऋति इति अल्बोधकं पदमस्ति। एवं सति तदादिविधिः भवति। एवञ्च तथा विशेष्यं ग्राह्यं यस्य आदि विशेषणम् अस्ति। अत्र विशेष्यः धातुः इति, विशेषणम् ऋत् इति। अतः तथा धातुः बोध्यः यस्य आदिः वर्णः ऋकारः अस्ति। अर्थो भवति - ऋकारादिः धातुः इति।

सूत्रार्थो भवति - अवर्णान्ताद् उपसर्गाद् ऋकारादौ धातौ परे पूर्वपरयोः स्थाने वृद्धिः एकादेशः भवति इति।

**उदाहरणम्** - प्रार्च्छति।

**सूत्रार्थसमन्वयः** - प्र ऋच्छति इत्यत्र प्र इति अवर्णान्तः उपसर्गः अस्ति, ऋच्छति इति ऋकारादिः धातुः परे अस्ति। तत्र आद् गुणः इति सूत्रेण गुणे प्राप्ते प्रकृतसूत्रेण वृद्धिः विधीयते। यदि अत्रापि आद् गुणः इति सूत्रमेव प्रवर्तेत तर्हि प्रकृतसूत्रं निरवकाशम् अर्थात् व्यर्थं भवेत्। अतः वचनप्रामाण्यात् अयं गुणस्यापवादः। अ+ऋ इति पूर्वपरयोः स्थाने आ ऐ औ एषु अन्यतमः प्रसज्यते। तत्र आ अण् अस्ति, स च ऋकारस्य स्थाने प्राप्तः। अतः उरण् रपरः इति सूत्रेण आर् इति भवति। तदा आर् ऐ औ एषु आर् एव स्थानतः अन्तरतमः। पूर्वपरयोः स्थाने आर् इति आदेशः एव भवति। तदा प्रार्च्छति इति रूपं निष्पद्यते।

## [ ७.७] एङि पररूपम्॥ (६.१.९१)

**सूत्रार्थः** - अवर्णान्ताद् उपसर्गाद् एङादौ धातौ परे पूर्वपरयोः स्थाने पररूपम् एकादेशः भवति।

**सूत्रव्याख्या** - विधिसूत्रमिदम्। अस्मिन् सूत्रे द्वे पदे स्तः। एङि (७/१), परस्य रूपम् पररूपम् इति षष्ठीतत्पुरुषसमासः। पूर्ववर्णः परवर्णरूपेण अवशिष्येत इति पररूपशब्दस्यार्थः। आद् गुणः इति सूत्राद् आत् इति पञ्चम्यन्तं पदमनुवर्तते। उपसर्गाद् ऋति धातौ इति सूत्राद् उपसर्गात् इति पञ्चम्यन्तं धातौ इति सप्तम्येकवचनान्तं चेति पदद्वयमनुवर्तते। एकः पूर्वपरयोः इति अधिकृतम्। पूर्वस्य परस्य च इति द्वयोः स्थाने एकः एव आदेशः भवतीति तदर्थः। पदयोजना - आद् उपसर्गात् एङि धातौ पूर्वपरयोः एकः पररूपम् इति।

**तदादिविधिः तदन्तविधिश्च** - आद् उपसर्गात् इति समानविभक्तिकं पदद्वयम्। आद् इति विशेषणम् उपसर्गाद् इति विशेष्यम्। अतः तदन्तविधिना अवर्णान्ताद् उपसर्गाद् इति अर्थो भवति। एङि धातौ इति सप्तम्यन्तं पदद्वयमस्ति। तयोः एङि इति अल्बोधकमस्ति। अतः तदादिविधिना एङादिधातौ इति अर्थो भवति।

सूत्रार्थो भवति - अवर्णान्ताद् उपसर्गाद् एङादौ धातौ परे पूर्वपरयोः स्थाने पररूपम् एकादेशः भवति।

**अपवादः** - अ+ए, आ+ए, अ+ओ, आ+ओ इति स्थितौ वस्तुतः वृद्धिरेचि इति सूत्रेण वृद्धिः प्राप्नोति। अतः अयं विधिः वृद्धिरेचि इत्यस्य अपवादः अस्ति। अवर्णात् एजादिः इण् एध वा धातुः यदि स्यात् तर्हि एङि पररूपमिति सूत्रेण पररूपे प्राप्ते एत्येधत्यूठ्सु इति सूत्रेण वृद्धिः भवति। अतः एङि पररूपम् इत्यस्य एत्येधत्यूठ्सु इति सूत्रम् अपवादः। प्रथमं वृद्धिरेचि इत्यस्य अपवादः एङि पररूपम्।



**उदाहरणम् -** प्रेजते। उपोषति।

**सूत्रार्थसमन्वयः -** प्र एजते (एजृ दीप्तौ इति धातुः) इत्यत्र अवर्णान्तः उपसर्गः प्र अस्ति। ततः परम् एङादिः धातुः एजते इति अस्ति। वृद्धिरेचि इति सूत्रेण वृद्धौ प्राप्तायाम् एङि पररूपम् इति सूत्रेण वृद्धेः अपवादः भवति। किञ्च प्र-उपसर्गस्य अकारस्य एकारस्य च स्थाने पररूपम् भवति, अर्थात् अकारः एकाररूपेण अवशिष्यते। तदा प्रेजते इति रूपं सिद्ध्यति। प्रकर्षेण दीप्यति इति तदर्थः।

उप ओषति (उष दाहे इति धातुः) इत्यत्र अवर्णान्तः उपसर्गः उप अस्ति। ततः परम् एङादिः धातुः ओषति अस्ति। वृद्धिरेचि इति सूत्रेण वृद्धौ प्राप्तायाम् एङि पररूपम् इति सूत्रेण वृद्धेः अपवादः भवति। किञ्च उप-उपसर्गस्य अकारस्य ओकारस्य च स्थाने पररूपम् भवति, अर्थात् अकारः ओकाररूपेण अवशिष्यते। तदा उपोषति इति रूपं सिद्ध्यति। ज्वलति इति तदर्थः।

## ७.७.१) शकन्ध्वादिषु पररूपं वाच्यम्। (वार्तिकम्)

इदं वार्तिकम्। पाणिनिमुनिः यथा सूत्रपाठं लिलेख तथैव गणपाठमपि लिलेख। तस्मिन् विशिष्टकार्यार्थं शब्दाः संगृहीताः सन्ति। तेषु अन्यतमः गणः शकन्ध्वादिगणः। वार्तिकार्थः - अचि परे शकन्ध्वादिविषये टेः पररूपं भवति।

**उदाहरणम् -** शकन्धुः। कर्कन्धुः। कुलटा। मनीषा। हलीषा। लाङ्गलीषा। पतञ्जलिः। सारङ्गः। सीमन्तः।

**वार्तिकार्थसमन्वयः -** शकानाम् अन्धुः कूपः। शक अन्धुः इति स्थिते ककारोत्तरवर्ती अकारः अचः अव्यवहितपूर्वः अस्ति। अतः शक इत्यस्य अकारः टिसंज्ञकः। तस्य पररूपे कृते शकन्धुः इति रूपं सिद्ध्यति।

कर्काणाम् अन्धुः। (कर्काः केचित् नृपाः, तेषां कूपः इत्यर्थः।) कर्क अन्धुः इत्यत्र पररूपे कृते कर्कन्धुः इति रूपनिष्पत्तिः।

कुलेषु अटति सा कुलटा (व्यभिचारिणी स्त्री)। कुल अटा इति स्थिते टेः पररूपे कुलटा इति सिद्धम्।

मनस् ईषा इत्यत्र मनस् शब्दस्य अस् टिसंज्ञकः अस्ति। तस्य पररूपे कृते मन् ईषा इति जायते। वर्णमेलनेन मनीषा इति रूपं निष्पद्यते। बुद्धिः इति तदर्थः।

पतत् अञ्जलिः इत्यत्र पतत्-शब्दस्य अत् टिसंज्ञकः अस्ति। तस्य पररूपे कृते पत् अञ्जलिः इति जायते। वर्णमेलनेन पतञ्जलिः इति रूपं निष्पद्यते। महाभाष्यकारः शेषावतारः पतञ्जलिः इति तदर्थः।

सार अङ्गः - सारङ्गः (हरिणः पक्षिविशेषो वा)।

सीमन् अन्तः (सीम्नः अन्तः - सीमन्तः)। अत्र टिः अन् अस्ति। तस्य पररूपे कृते सीमन्तः इति सिद्ध्यति। नारीणां केशवेशे शिरसि या केशविभाजिका रेखा दृश्यते सा सीमन्तः इत्युच्यते।

शकन्ध्वादिगणः आकृतिगणः।



आकृत्या स्वरूपेण कार्यदर्शनेन गण्यते परिचीयते इति आकृतिगणः। यस्मिन् गणे अवर्तमानोऽपि कश्चित् शब्दः तद्गणस्थः इव गृह्यते चेदेव तस्य रूपं साधु इति वक्तुं शक्यते तदा स गणः आकृतिगणः इति गण्यते।

मार्तण्डः इति शब्दः लोके प्रसिद्धः। सूर्यः इति तदर्थः। मृतण्डे भवः मार्तण्डः इति तस्य निष्पत्तिः। परन्तु मृतण्डशब्दः कथमिति प्रश्नः। तत्रोच्यते मृतम् अण्डम् इति कर्मधारयसमासे कृते मृत अण्ड इति स्थितिः उद्भवति। तत्र पररूपे कृते मृतण्डशब्दः निष्पद्यते। अयं मृतण्डशब्दः शकन्ध्वादिगणे नास्ति। परन्तु तस्य यद् रूपं तत् तदा एव सम्भवति यदि स शब्दः शकन्ध्वादिगणे अस्ति इति मन्यते। अतः एव शकन्ध्वादिगणः आकृतिगणः इति कथ्यते।



## पाठगतप्रश्नाः-२

८. वृद्धिरेचि इति सूत्रस्यार्थं लिखत।

९. वृद्धिरेचि इति सूत्रस्य अपवादः कः।

१०. एङि पररूपमिति इति सूत्रस्यापवादः कः।

१) वृद्धिरेचि  २) एङः पदान्तादति  ३) एत्येधत्यूठ्सु  ४) आद् गुणः

११. एङि पररूपमिति इति सूत्रस्योदाहरणं किम्।

१) प्रेजते  २) उपैति  ३) गङ्गौघः  ४) देवालयः

१२. अधः प्रथमस्तम्भस्य द्वितीयस्तम्भे कः अपवादः इति युक्तां तालिकां चिनुत।

| स्तम्भः-१ | स्तम्भः-२ |
|---|---|
| (क) आद् गुणः | (i) एङि पररूपम् |
| (ख) वृद्धिरेचि | (ii) एत्येधत्यूठ्सु |
| (ग) एङि पररूपम् | (iii) अकः सवर्णे दीर्घः |
| (घ) इको यणचि | (iv) वृद्धिरेचि |

| | (क) | (ख) | (ग) | (घ) |
|---|---|---|---|---|
| १) | (i) | (ii) | (iii) | (iv) |
| २) | (ii) | (i) | (iii) | (iv) |
| ३) | (iii) | (ii) | (i) | (iv) |
| ४) | (iv) | (i) | (ii) | (iii) |



## [ ७.८] अकः सवर्णे दीर्घः॥ (६.१.९७)

**सूत्रार्थः** - अकः सवर्णे अचि परे पूर्वपरयोः स्थाने दीर्घः एकादेशः भवति।

**सूत्रव्याख्या** - विधिसूत्रमिदम्। अस्मिन् त्रीणि पदानि सन्ति। अकः सवर्णे दीर्घः इति सूत्रगतपदच्छेदः। अकः (५/१), सवर्णे (७/१), दीर्घः (१/१)। इको यणचि इति सूत्राद् अचि इति सप्तम्यन्तं पदमनुवर्तते। एकः पूर्वपरयोः इति अधिकृतम्। पूर्वस्य परस्य च इति द्वयोः स्थाने एकः एव आदेशः भवतीति तदर्थः। पदयोजना - अकः सवर्णे अचि दीर्घः एकः पूर्वपरयोः इति। सूत्रार्थो भवति - अकः सवर्णे अचि परे पूर्वपरयोः स्थाने दीर्घः एकादेशः भवति। अकः परम् सवर्णः अच् वस्तुतः अक् एव भवति। अतः अर्थो भवति - अ इ उ ऋ ऌ इति वर्णेभ्यः परं यदि सवर्णाः अ इ उ ऋ ऌ वर्णाः स्युः तर्हि पूर्वपरयोः स्थाने (अक्-सवर्णाचोः स्थाने) दीर्घः एकादेशः भवति।

**उदाहरणम्** - दैत्यारिः। श्रीशः। विष्णूदयः। होतॄषिः।

**सूत्रार्थसमन्वयः** - दैत्यानाम् अरिः इति विग्रहः। समासे कृते दैत्य अरिः इति स्थितिः उद्भवति। तत्र यकारात् परं यः अकारः, तस्मात् परम्, तुल्यास्यप्रयत्नं सवर्णम् इति सूत्रेण सवर्णः अच् अकारः अस्ति। आद् गुणः इति सूत्रेण गुणे प्राप्ते प्रकृतसूत्रेण पूर्वपरयोः अकार-अकारयोः स्थाने स्थानेऽन्तरतमः इति परिभाषया स्थानत आन्तर्याद् आकारः एव दीर्घः एकादेशः भवति। तदा दैत्य् आ रिः इति स्थिते वर्णमेलनेन दैत्यारिः इति रूपं सिद्ध्यति। दैत्यानाम् दानवानाम् शत्रुः इति तदर्थः।

श्रियः ईशः इति विग्रहः। समासे कृते श्री ईश इति स्थितिः उद्भवति। तत्र ईकारात् परम् ईकारः अस्ति, स च तुल्यास्यप्रयत्नं सवर्णम् इति सूत्रेण सवर्णसंज्ञकः। अत्र इको यणचि इत्यनेन पूर्वस्य ईकारस्य स्थाने यणि प्राप्ते अकः सवर्णे दीर्घः इति प्रकृतसूत्रेण पूर्वपरयोः ईकार-ईकारयोः स्थाने स्थानेऽन्तरतमः इति परिभाषया स्थानत आन्तर्याद् ईकारः एव दीर्घः एकादेशः भवति। तदा श्रीशः इति रूपं परिनितिष्ठति।

विष्णोः उदयः इति विग्रहः। समासे कृते विष्णु उदयः इति स्थितिः उद्भवति। तत्र उकारात् परम् उकारः अस्ति, स च तुल्यास्यप्रयत्नं सवर्णम् इति सूत्रेण सवर्णसंज्ञकः। अत्र इको यणचि इत्यनेन पूर्वस्य उकारस्य स्थाने यणि प्राप्ते अकः सवर्णे दीर्घः इति प्रकृतसूत्रेण पूर्वपरयोः उकार-उकारयोः स्थाने स्थानेऽन्तरतमः इति परिभाषया स्थानत आन्तर्याद् ऊकारः एव दीर्घः एकादेशः भवति। तदा विष्णूदयः इति रूपं परिनितिष्ठति।

होता ऋषिः इति विग्रहः। कर्मधारयसमासे कृते होतृ ऋषिः इति स्थितिः उद्भवति। तत्र ऋवर्णात् परम् ऋवर्णः अस्ति। स च तुल्यास्यप्रयत्नं सवर्णम् इति सूत्रेण सवर्णसंज्ञकः। अत्र इको यणचि इत्यनेन पूर्वस्य ऋकारस्य स्थाने यणि प्राप्ते अकः सवर्णे दीर्घः इति प्रकृतसूत्रेण पूर्वपरयोः ऋकार-ऋकारयोः स्थाने स्थानेऽन्तरतमः इति परिभाषया स्थानत आन्तर्याद् ॠकारः एव दीर्घः एकादेशः भवति। तदा होतॄषिः इति रूपं परिनितिष्ठति।



कस्मात् परं कः सवर्णः भवितुम् अर्हति, अपि च तथा सति कः आदेशः स्यात् तद् अधः चतुरश्रपट्टिकायां प्रदर्शितम् अस्ति।

| | | | |
|---|---|---|---|
| १) अ+अ = आ | अ+आ = आ | आ+अ = आ | आ+आ = आ |
| २) इ+इ = ई | इ+ई = ई | ई+इ = ई | ई+ई = ई |
| ३) उ+उ = ऊ | उ+ऊ = ऊ | ऊ+उ = ऊ | ऊ+ऊ = ऊ |
| ४) ऋ+ऋ = ॠ | ऋ+ॠ = ॠ | ॠ+ऋ = ॠ | ॠ+ॠ = ॠ |

## [७.९] एङः पदान्तादति॥ (६.१.१०५)

**सूत्रार्थः** - पदान्ताद् एङः अति परे पूर्वपरयोः स्थाने पूर्वरूपम् एकादेशः भवति।

**सूत्रव्याख्या** - विधिसूत्रमिदम्। अस्मिन् त्रीणि पदानि सन्ति। एङः पदान्ताद् अति इति सूत्रगतपदच्छेदः। एङः (५/१), पदस्य अन्तः पदान्तः इति षष्ठीतत्पुरुषसमासः। तस्मात् पदान्तात् इति पञ्चम्येकवचनम्। अति (७/१), तपरस्तत्कालस्य इति सूत्रेण अत्र एकमात्रिकः अकारः बोध्यः। अमि पूर्वः इति सूत्राद् पूर्वः इति पदमनुवर्तते। एकः पूर्वपरयोः इति अधिकृतम्। पूर्वस्य परस्य च इति द्वयोः स्थाने एकः एव आदेशः भवतीति तदर्थः। पदयोजना - पदान्ताद् एङः अति पूर्वपरयोः एकः पूर्वः भवति। सूत्रार्थो भवति - पदान्ताद् एङः अति परे पूर्वपरयोः स्थाने पूर्वरूपम् एकादेशः भवति। एचोऽयवायावः सूत्रस्य अयं योगः अपवादः।

**उदाहरणम्** - हरेऽव। विष्णोऽव।

**सूत्रार्थसमन्वयः** - हरिशब्दस्य सम्बोधनम् हरे इति। अव्-धातोः लोटि मध्यमपुरुषे रूपम् अव इति। हरे अव इति वाक्ये स्थिते रेफात् परः यः एकारः सः अवशब्दस्य अकारात् अव्यवहितपूर्वः अस्ति। तत्र एचोऽयवायावः इति सूत्रेण अयादेशे प्राप्ते प्रकृतसूत्रेण पूर्वपरयोः स्थाने पूर्वरूपे कृते हरेऽव इति वाक्यं सम्पद्यते। हे हरे, हे गोविन्द, त्वं रक्ष, पाहि इति तदर्थः।

विष्णुशब्दस्य सम्बोधनम् विष्णो इति। अव्-धातोः लोटि मध्यमपुरुषे रूपम् अव इति। विष्णो अव इति वाक्ये स्थिते रेफात् परः यः एकारः सः अवशब्दस्य अकारात् अव्यवहितपूर्वः अस्ति। तत्र एचोऽयवायावः इति सूत्रेण अयादेशे प्राप्ते प्रकृतसूत्रेण पूर्वपरयोः स्थाने पूर्वरूपे कृते विष्णोऽव इति वाक्यं सम्पद्यते। हे विष्णो, त्वं रक्ष, पाहि इति तदर्थः।

[बहुत्र 'ऽ' इति यत् चिह्नं दृश्यते तस्य नाम अवग्रहः इति। तच्चिह्नं दर्शयति यद् अत्र एकः ह्रस्वः अकार आसीत्, अधुना नास्ति। पूर्वरूपः पररूपः लुप्तः वा अभवत् इति दर्शयति। अस्य चिह्नस्य किमपि उच्चारणं न भवति, न वा कर्तव्यम्। यत्र इदं चिह्नं लिखितमस्ति तत्र लुप्तस्य अकारस्य उच्चारणं नैव कर्तव्यम्। ]

## [७.१०] लोपः शाकल्यस्य॥ (८.३.१९)

**सूत्रार्थः** - अवर्णपूर्वयोः पदान्तयोः यवयोः अशि परे वा लोपः।



**सूत्रव्याख्या** - विधिसूत्रमिदम्। अस्मिन् पदद्वयमस्ति। लोपः (१/१), शाकल्यस्य (६/१)। भो-भगो-अघो-अपूर्वस्य योऽशि (८.३.१७) इति सूत्रात् अपूर्वस्य इति षष्ठ्यन्तम् अशि इति सप्तम्यन्तम् इति पदद्वयमनुवर्तते। अपूर्वस्य इत्यस्य अवर्णपूर्वयोः इति षष्ठीद्विवचनत्वेन परिणामः भवति। अवर्णः पूर्वः याभ्यां तौ अपूर्वौ। तयोः अपूर्वयोः इति बहुव्रीहिसमासः। अत्र अवर्णः इत्यनेन अकारस्य अष्टादश भेदाः बोध्याः। व्योर्लघुप्रयत्नतरः शाकटायनस्य इत्यस्मात् व्योः इति षष्ठीद्विवचनान्तम् पदमनुवर्तते। व् च य् च इति व्यौ, तयोः व्योः इति इतरेतरयोगद्वन्द्वसमासः। पदस्य इत्यधिकृतम् अस्ति। तस्य पदयोः इति षष्ठीद्विवचनत्वेन परिणामो भवति। वाक्ययोजना - अपूर्वयोः व्योः पदयोः लोपः शाकल्यस्य अशि। अत्र पदयोः अपूर्वयोः व्योः इति स्थितिः भवति। तत्र अपूर्वयोः इति व्योः इत्यस्य विशेषणम्। व्योः इति च पदयोः इत्यस्य विशेषणम्। अत एव व्योः इत्यंशे तदन्तविधिः भवति। तेन अवर्णपूर्वः यो यकारः, वकारः वा तदन्तं यत् पदं, तस्य वा लोपः। ततः अलोऽन्त्यस्य इति परिभाषया अन्तयोः वकारयकारयोः एव लोपः भवति। अतः फलितार्थः भवति - पदान्तयोः अवर्णपूर्वयोः व्योः लोपः वा स्यात् अशि परे। शाकल्यः नाम कश्चित् पाणिनिपूर्ववर्ती व्याकरणकारः। तस्य मतेन इदं कार्यं भवति। परन्तु अन्येषाम् आचार्याणां मते इदं कार्यं न भवति। पाणिनिः उभयम् अनुमोदते। अतः विकल्पः फलति। सूत्रार्थो भवति - अवर्णपूर्वयोः पदान्तयोः यवयोः अशि परे वा लोपः। अर्थात् पदान्ते अवर्णः पूर्वम् यस्मात् तादृशः यकारः वकारः वा अस्ति चेत् अपिच ततः परम् अश्-प्रत्याहारस्थः वर्णः अस्ति चेत् यकारवकारयोः विकल्पेन लोपः भवति। अर्थात् अशि परे यदि पदान्ते अय् अव् आय् आव् एते स्युः तर्हि तेषाम् यकारस्य वकारस्य च लोपः विकल्पेन भवतीत्यर्थः।

**उदाहरणम्** - हर आगच्छ। विष्ण आगच्छ। तस्मा आह। विष्णा आस्था।

**सूत्रार्थसमन्वयः** - हरे आगच्छ इत्यादीनि एतानि वाक्यानि सन्ति। वाक्ये संहिता विकल्पेन भवति। यदि संहिता स्यात् तर्हि तत्र संहिताधिकारस्थानि सूत्राणि प्रवर्तन्ते। तदा हरे आगच्छ इत्युदाहरणे एकारः अचः आकारात् अव्यवहितपूर्वः अस्ति। अत एव एचोऽयवायावः इति सूत्रं प्रवर्तते। तदा एकारस्य स्थाने अय् इति आदेशः भवति। तदा हरय् आगच्छ इति स्थितिः जायते। तत्र पदान्ते अवर्णः पूर्वं यस्मात् तादृशः यकारः अस्ति, अर्थात् पदान्ते अय् इति अस्ति, तस्मात् परम् अश्-प्रत्याहारस्थः आकारः अस्ति। लोपः शाकल्यस्य इति सूत्रेण विकल्पेन लोपः भवति। यदा लोपः न भवति तदा लोपाभावपक्षे हरय् आगच्छ इति च स्थिते वर्णमेलनेन हरयागच्छ इति साधु रूपं निष्पद्यते।

विष्णो आगच्छ। तस्मै आह। विष्णौ आस्था। इत्येषु उदाहरणेषु अपि उपरि दर्शितक्रमेण कार्याणि भवन्ति। अपि च विष्णव् आगच्छ। तस्माय् आह। विष्णाव् आस्था। इति स्थितिः जायते। एषु उदाहरणेषु अवर्णपूर्वः यकारः वकारः चास्ति। यवयोः लोपः विकल्पेन भवति। तदा लोपाभावपक्षे - विष्णवागच्छ। तस्मायाह। विष्णावास्था। इति रूपाणि भवन्ति।

एषु चतुर्षु उदाहरणेषु लोपपक्षे तु - हर आगच्छ। विष्ण आगच्छ। तस्मा आह। विष्णा आस्था इति स्थितिः भवति। तदा तेषु अवर्णात् परम् सवर्णः अवर्णः अस्ति। अतः अकः सवर्णे दीर्घः इति सूत्रेण सवर्णदीर्घैकादेशे प्राप्ते -



## [७.११] पूर्वत्रासिद्धम्॥ (८.२.१)

**सूत्रार्थः** - सपादसप्ताध्यायीं प्रति त्रिपादी असिद्धा, त्रिपाद्यामपि पूर्वं प्रति परम् असिद्धम्।

**सूत्रव्याख्या** - अधिकारसूत्रमिदम्। अष्टमाध्यायस्य चतुर्थपादस्य अ अ (८.४.६७) इति अन्तिमसूत्रं यावद् अयमधिकारः। अस्मिन् सूत्रे पदद्वयम् अस्ति। पूर्वत्र असिद्धम् इति सूत्रगतपदच्छेदः। पूर्वत्र इति त्रल्-प्रत्ययान्तम् अव्ययम्। पूर्वत्र इत्यत्र सप्तम्यर्थे त्रल् अस्ति। तेन पूर्वस्मिन् इत्यर्थः लभ्यते। कस्मात् पूर्वस्मिन्, किं च तत् पूर्वम् इति प्रश्नः। तत्रोच्यते - अष्टाध्याय्याम् अष्टौ अध्यायाः सन्ति, प्रति अध्यायं च चत्वारः पादाः सन्तीति सुविदितम्। पूर्वत्रासिद्धम् इति सूत्रम् अष्टमाध्यायस्य द्वितीयपादस्य प्रथमं सूत्रम्। तदा कस्मात् पूर्वम् इत्यस्य उत्तरं भवति अस्मात् (पूर्वत्रासिद्धम् इति) सूत्रात् पूर्वम्। किं तत् पूर्वम् इति प्रश्नस्य उत्तरं भवति - पूर्वं विद्यमानं शास्त्रम्, सूत्रजालम् इति। तच्च अष्टमाध्यायस्य प्रथमपादेन सह सप्त अध्यायाः इति इयत् अस्ति। इयान् भागः सपादसप्ताध्यायी इति कथ्यते। अवशिष्टाः अष्टमाध्यायस्य त्रयः पादाः त्रिपादी इति कथ्यते।

असिद्धमिति प्रथमैकवचनान्तं पदम्। सिद्धम् इत्यस्य निष्पन्नम् इत्यर्थः। न सिद्धम् असिद्धमिति नञ्-तत्पुरुषः समासः। असिद्धम् इत्यस्य असिद्धवद् अनिष्पन्नवद् इति अर्थः क्रियते। किम् असिद्धम् इति प्रश्नः। तदा उच्यते। त्रिपादी असिद्धा। सपादसप्ताध्यायीं प्रति त्रिपादी असिद्धा।

इदमधिकारसूत्रम्। तेन इतः (पूर्वत्रासिद्धम् इति) परं यावदधिकारं सर्वेषु सूत्रेषु अस्य निवेशः कर्तव्यः। तदा त्रिपाद्याम् अपि पूर्वसूत्रं प्रति परसूत्रम् असिद्धम् इति अर्थो लभ्यते।

सूत्रार्थो भवति - सपादसप्ताध्यायीं प्रति त्रिपादी असिद्धा, त्रिपाद्यामपि पूर्वं प्रति परम् असिद्धम्।

एवञ्च सपादसप्ताध्यायी इति सिद्धकाण्डम् उच्यते। त्रिपादी इति असिद्धकाण्डमुच्यते। यतो हि सपादसप्ताध्यायीं प्रति त्रिपादी असिद्धा, किञ्च त्रिपाद्यामपि पूर्वसूत्रं प्रति परसूत्रम् असिद्धम् तथापि सपादसप्ताध्यायी सिद्धा एव। इदमपि बोध्यं यत् त्रिपाद्यामपि परं प्रति पूर्वसूत्रम् सिद्धम्।

**सूत्रार्थसमन्वयः** - हर आगच्छ इत्यत्र लोपः शाकल्यस्य (८.३.१९) इति लोपविधायकं सूत्रं त्रिपादीस्थम् अस्ति। अकः सवर्णे दीर्घः (६.१.९७) इति सपादसप्ताध्यायीस्थम् अस्ति। अतः पूर्वत्रासिद्धम् इति सूत्रप्रभावात् अकः सवर्णे दीर्घः इति सूत्रं प्रति लोपः शाकल्यस्य इति सूत्रम् असिद्धम्। अर्थात् लोपः शाकल्यस्य इति सूत्रं नास्ति इव। तेन अकः सवर्णे दीर्घः इति सूत्रं लोपः शाकल्यस्य इति सूत्रेण कृतं यवयोः लोपं नैव जानाति। तद्दृष्ट्या हर आगच्छ इति स्थितिः नास्ति, वस्तुतः हरय् आगच्छ इत्येव स्थितिः अस्ति इति मन्यते। अतः अकः परं सवर्णः अक् नास्तीति न सवर्णदीर्घैकादेशः। तेन हर आगच्छ इति स्थितिः तथैव तिष्ठति, तत्र पुनः सवर्णदीर्घैकादेशः न भवति। एवमेव विष्ण आगच्छ। तस्मा आह। विष्णा आस्था इति एषु उदाहरणेषु अपि न सवर्णदीर्घैकादेशः। किन्तु अस्मद्दृष्ट्या तु सर्वं शास्त्रं सिद्धमेव। अतः अस्माभिः हर आगच्छ इति एवमेव लिख्यते, व्यवह्रियते च।





## पाठगतप्रश्नाः-३

१३. अकः सवर्णे दीर्घः इति सूत्रस्यार्थं लिखत।

१४. (ए+ए) इति एकारात् परम् एकारः अस्ति चेत् किं सूत्रं प्रवर्तते।

१५. एङः पदान्तादति इति सूत्रं कस्यापवादः।

१६. लोपः शाकल्यस्य इति सूत्रेण कस्य लोपः विधीयते।

१७. विष्णो आगच्छ इत्यस्य विष्ण आगच्छ इति परिवर्तनान्तरम् सवर्णदीर्घसन्धिः कुतो न भवति।

१८. असिद्धकाण्डे के पादाः सन्ति।

१९. विष्णो आगच्छ इत्यस्य सन्धौ किं रूपं निष्पद्यते।

१) विष्ण आगच्छ, विष्णावागच्छ  २) विष्णा आगच्छ, विष्णवागच्छ

३) विष्ण आगच्छ, विष्णवागच्छ  ४) विष्ण आगच्छ, विष्णावगच्छ

२०. उत्तरस्य योग्यं क्रमं निश्चिनुत यत्र पूर्वस्य अपवादः परसूत्रम्।

i) एङि पररूपम्  ii) एत्येधत्यूठ्सु  iii) वृद्धिरेचि  iv) आद् गुणः

| | | | | |
|---|---|---|---|---|
| १) | (i) | (ii) | (iii) | (iv) |
| २) | (ii) | (i) | (iii) | (iv) |
| ३) | (iv) | (iii) | (i) | (ii) |
| ४) | (iv) | (i) | (iii) | (ii) |

२१. अधः प्रथमस्तम्भे स्थितिः प्रदर्शिता। तत्र किं सूत्रं प्रवर्तेत इति द्वितीयसम्भात् चेतव्यम्।

| | |
|---|---|
| (क) आ+ए | (i) इको यणचि |
| (ख) इ+उ | (ii) आद् गुणः |
| (ग) ए+ऊ | (iii) वृद्धिरेचि |
| (घ) आ+उ | (iv) एचोऽयवायावः |

| | **(क)** | **(ख)** | **(ग)** | **(घ)** |
|---|---|---|---|---|
| १) | (i) | (ii) | (iii) | (iv) |
| २) | (ii) | (i) | (iii) | (iv) |
| ३) | (iii) | (i) | (iv) | (ii) |
| ४) | (ii) | (iii) | (iv) | (i) |

---

इतः ऊर्ध्वम् प्लुतानाम् प्रगृह्याणां च प्रकृतिभावः विधास्यते। अतः के प्लुताः के वा प्रगृह्याः इति ज्ञानाय कानिचन सूत्राणि उपन्यस्यन्ते। अयं सन्धिः **प्रकृतिभावसन्धिः** इति कथ्यते।



## [७.१२] दूराद्धूते च॥ (८.२.८४)

**सूत्रार्थः** - दूरात् सम्बोधने वाक्यस्य टेः प्लुतो वा भवति।

**सूत्रव्याख्या** - विधिसूत्रमिदम्। अस्मिन् सूत्रे त्रीणि पदानि सन्ति। दूरात् हूते च इति सूत्रगतपदच्छेदः। दूरात् (५/१), हूते (७/१), च इत्यव्ययपदम्। वाक्यस्य टेः प्लुत उदात्तः इति सूत्रात् वाक्यस्य इति षष्ठ्येकवचनान्तं, टेः इति षष्ठ्येकवचनान्तम्, प्लुतः इति प्रथमान्तम् इति त्रीणि पदानि अनुवर्तन्ते। पदसमूहः वाक्यम्। पदयोजना - दूरात् हूते वाक्यस्य टेः प्लुतः भवति। कश्चित् कञ्चित् आह्वयति। तदा प्रथमोच्चारितं शब्दं बोध्यमानः न शृणोति, किन्तु अधिकं प्रयत्नम् अपेक्षते, तदा स दूरे अस्ति इति मन्यते। हूतशब्दस्य आह्वानम् अर्थः। आह्वानम् अत्र सम्बोधनमेव। सूत्रार्थो भवति - दूरात् सम्बोधने वाक्यस्य टेः प्लुतो वा भवति।

**उदाहरणम्** - आगच्छ कृष्ण३।

**सूत्रार्थसमन्वयः** - आगच्छ कृष्ण३ इति अस्मिन् वाक्ये कश्चित् गोपः कृष्णम् आह्वयति। तदा अल्पध्वनिं कृष्णः श्रोतुं न शक्नोति। तेन ज्ञायते यत् कृष्णः दूरे अस्ति। अतः गोपः उच्चैः वदति। आगच्छ कृष्ण इति वाक्ये णकारात् परवर्ती अकारः टिसंज्ञकः। स प्रकृतसूत्रेण प्लुतः भवति। तदा आगच्छ कृष्ण३ इति वाक्यं सम्पद्यते।

## [७.१३] ईदूदेद् द्विवचनं प्रगृह्यम्॥ (१.१.११)

**सूत्रार्थः** - ईदन्तम् ऊदन्तम् एदन्तम् च द्विवचनं प्रगृह्यसंज्ञं भवति।

**सूत्रव्याख्या** - संज्ञासूत्रमिदम्। अनेन सूत्रेण प्रगृह्यसंज्ञा विधीयते। अस्मिन् सूत्रे त्रीणि पदानि सन्ति। ईदूदेत् द्विवचनम् प्रगृह्यम् इति सूत्रगतपदच्छेदः। ईत् च ऊत् च एत् च इति ईदूदेत् इति समाहारद्वन्द्वसमासः। अत्र ईत् ऊत् एत् एषु तपरकरणम् सन्देहराहित्यार्थम् न तु तपरस्तत्कालस्य इति तत्कालिकस्य ग्रहणार्थम्। ईदूदेत् इति पदं द्विवचनम् इत्यस्य विशेषणम्। अतः तदन्तविधिना ईदन्तम् ऊदन्तम् एदन्तम् च द्विवचनम् इत्यर्थः लभ्यते। तदा सूत्रार्थो भवति - ईदन्तम् ऊदन्तम् एदन्तम् च द्विवचनं प्रगृह्यसंज्ञं भवति।

**उदाहरणम्** - हरी। विष्णू। गङ्गे। अत्र हरिशब्दस्य विष्णुशब्दस्य गङ्गाशब्दस्य च प्रथमाद्विवचने रूपाणि एतानि। अनेन सूत्रेण हरी इति शब्दे व्यपदेशिवद्भावेन ईदन्तस्य द्विवचनस्य ईकारस्य, विष्णू इत्यत्र ऊकारस्य, गङ्गे इत्यत्र एकारस्य च प्रगृह्यसंज्ञा भवति।

## [७.१४] अदसो मात्॥ (१.१.१२)

**सूत्रार्थः** - अदस्-शब्दावयवः यो मकारः, तस्मात् परौ ईदूतौ प्रगृह्यौ स्तः।

**सूत्रव्याख्या** - संज्ञासूत्रमिदम्। सूत्रेऽस्मिन् द्वे पदे स्तः। अदसः मात् इति सूत्रगतपदच्छेदः। अदस् इति सर्वनाम्नः अदसः इति षष्ठ्येकवचनम्। इयमवयवषष्ठी। मात् इति पञ्चम्येकवचनान्तं पदम्।



इयं दिग्योगे पञ्चमी। ईदूदेद् द्विवचनं प्रगृह्यम् इति सूत्रात् ईदूत् इति प्रगृह्यम् इति च पदद्वयमनुवर्तते। सूत्रार्थो भवति - अदस्-शब्दावयवः यो मकारः, तस्मात् परौ ईदूतौ प्रगृह्यौ स्तः।

**उदाहरणम्** - अमी। अमू। प्रकृते अमी इति अदस्-शब्दस्य पुंसि प्रथमाबहुवचनान्तं रूपम्। तस्मिन् मकारात् परम् ईद् अस्ति। अमू इति अदस्-शब्दस्य पुंसि प्रथमाद्विवचनान्तं रूपम्। तस्मिन् मकारात् परम् ईद् अस्ति।

## [७.१५] निपात एकाजनाङ्॥ (१.१.१४)

**सूत्रार्थः** - आङ्-भिन्नः एकाच् निपातः प्रगृह्यसंज्ञः भवति।

**सूत्रव्याख्या** - संज्ञासूत्रमिदम्। अस्मिन् त्रीणि पदानि सन्ति। निपातः एकाच् अनाङ् इति सूत्रगतपदच्छेदः। निपातः इति प्रथमैकवचनम्। एकः अच् इति एकाच् इति कर्मधारयसमासः। न आङ् इति अनाङ् इति नञ्तत्पुरुषसमासः। ईदूदेद् द्विवचनं प्रगृह्यम् इति सूत्रात् प्रगृह्यम् इति पदमनुवर्तते। सूत्रार्थो भवति - आङ्-भिन्नः एकाच् निपातः प्रगृह्यसंज्ञः भवति।

**उदाहरणम्** - अ (आक्षेपे), आ (वाक्ये स्मरणे च), इ (सम्बोधने विस्मये), ई (सम्बोधने), उ (सम्बोधने वितर्के च), ऊ, ए, ऐ, ओ, औ (सम्बोधने), आङ् (अल्पे मर्यादायां च) इति एते चादयः सन्ति। तेन चादयोऽसत्त्वे इति सूत्रेण निपातसंज्ञकाः सन्ति। एते एकाचः च सन्ति। तेषु आङ् प्रगृह्यसंज्ञः न भवति। अन्ये प्रगृह्यसंज्ञाः भवन्ति।

## [७.१६] प्लुतप्रगृह्या अचि नित्यम्॥ (६.१.१२१)

**सूत्रार्थः** - प्लुताः प्रगृह्याः च अचि परे नित्यं प्रकृत्या भवन्ति।

**सूत्रव्याख्या** - विधिसूत्रमिदम्। अस्मिन् त्रीणि पदानि सन्ति। प्लुतप्रगृह्याः अचि नित्यम् इति सूत्रगतपदच्छेदः। प्लुताः च प्रगृह्याः च इति प्लुतप्रगृह्याः इति इतरेतरयोगद्वन्द्वः। अचि (७/१), नित्यम् (१/१)। प्रकृत्यान्तःपादम् इति सूत्राद् प्रकृत्या इति तृतीयान्तं पदमनुवर्तते। पदयोजना - प्लुतप्रगृह्याः अचि प्रकृत्या नित्यम्। सूत्रार्थो भवति - प्लुताः प्रगृह्याः च अचि परे नित्यं प्रकृत्या भवन्ति। सन्धिविकारो न भवतीति तात्पर्यम्।

**उदाहरणम्** - प्लुतस्य उदाहरणम् - आगच्छ कृष्ण३ अत्र गौश्चरति।

**सूत्रार्थसमन्वयः** - आगच्छ कृष्ण३ अत्र गौश्चरति इत्यस्मिन् आगच्छ कृष्ण इति एकं वाक्यम्। दूराद्धूते च इति सूत्रेण विकल्पेन णकारोत्तरः अकारः प्लुतः भवति। तदा आगच्छ कृष्ण३ अत्र गौश्चरति इति स्थितिः उद्भवति। तत्र अ३कारात् परम् अत्र इति शब्दस्य अकारः अच् अस्ति। अकः सवर्णे दीर्घः इति सूत्रेण दीर्घैकादेशे प्राप्ते प्रकृतसूत्रेण प्रकृतिभावः भवति। अर्थात् यदा प्लुतः भवति तदा सवर्णदीर्घः न भवति। यदा प्लुतः न भवति तदा सवर्णदीर्घः भवति एवञ्च आगच्छ कृष्ण३ अत्र गौश्चरति इति, 'आगच्छ कृष्णात्र गौश्चरति' इति द्विविधोऽपि प्रयोगः फलति।



प्रगृह्यस्य उदाहरणम् - हरी एतौ। अत्र रेफोत्तरः यः ईकारः स ईदन्तं द्विवचनमस्ति। ईदूदेद् द्विवचनं प्रगृह्यम् इति सूत्रेण तस्य प्रगृह्य संज्ञा भवति। तस्मात् परम् अच् एकारः अस्ति। तत्र इको यणचि इत्यनेन यणि प्राप्ते प्रकृतसूत्रेण प्रकृतिभावः भवति। अर्थात् स्वरूपेण अवस्थानं भवति, न कोऽपि वर्णविकारः भवति। तेन हरी एतौ इति एव रूपं तिष्ठति। ऊदन्तद्विवचनस्य उदाहरणम् - विष्णू इमौ। एदन्तद्विवचनस्य उदाहरणम् - गङ्गे अमू।

अमी ईशाः। अत्र अदस् इति सर्वनाम्नः पुंसि प्रथमाबहुवचने अमी इति रूपम्। अस्मिन् मकारात् परः ईत् अस्ति। तस्य अदसो मात् इति सूत्रेण प्रगृह्यसंज्ञा भवति। अत्र मकारात् परः यः ईकारः, तस्मात् परम् ईकारः अस्ति। अकः सवर्णे दीर्घः इत्यनेन सवर्णदीर्घैकादेशे प्राप्ते प्रकृतसूत्रेण प्रकृतिभावः भवति। तेन अमी ईशाः इत्येव तिष्ठति।

अदस् इति सर्वनाम्नः पुंसि स्त्रियाम् क्लीबे च प्रथमाद्विवचने रूपम् अमू अमू अमू इति। तत्र एतेषां रूपाणां साधनक्रमः पृथक् पृथक् अस्ति।

स्त्रीलिङ्गे क्लीबे च प्रक्रियया 'अदे' इति स्थितिः जायते। तत्र अदसोऽसेर्दादु दो मः (८.२.८०) इति सूत्रेण दस्य मकारः, एकारस्य च ऊकारः विधीतये। परन्तु ईदूदेद् द्विवचनं प्रगृह्यम् इति सूत्रदृष्ट्या अदसोऽसेर्दादु दो मः (८.२.८०) इति सूत्रम् असिद्धम्। अपि च 'अदे' इति स्थितौ एव एदन्तद्विवचनस्य प्रगृह्यसंज्ञा भवति। तेन ईदूदेद् द्विवचनं प्रगृह्यम् इति सूत्रेणैव प्रगृह्यसंज्ञा भूत्वा प्रकृतिभावोऽपि प्रकृतसूत्रेण भवति। अतः अदसो मात् (१.१.१२) इति सूत्रं तत्र नावश्यकम्। परन्तु पुंलिङ्गे अमू इति रूपसाधनप्रक्रियायाम् अदौ इति स्थितिः भवति। तत्र अदसोऽसेर्दादु दो मः (८.२.८०) इति सूत्रेण दस्य मकारः, एकारस्य च ऊकारः विधीयेते। तेन अमू इति रूपं पुंसि निष्पद्यते। अदौ इति रूपे औकारस्य न केनापि सूत्रेण प्रगृह्यसंज्ञा। तदा अदसो मात् इति सूत्रमारब्धम्। तच्च सिद्धकाण्डीयम्। तस्य दृष्ट्या अदसोऽसेर्दादु दो मः (८.२.८०) इति सूत्रम् असिद्धम्। परन्तु अदसो मात् (१.१.१२) इति सूत्रारम्भसामर्थ्यात् अदसोऽसेर्दादु दो मः (८.२.८०) इति सूत्रम् असिद्धं न भवति। अतः अमू इति अत्रत्यस्य ऊकारस्य अदसो मात् (१.१.१२) इति सूत्रेण प्रगृह्यसंज्ञा भवति। अतः ऊदन्तस्य उदाहरणम् रामकृष्णावमू आसाते इति दीयते। तत्र रामकृष्णौ इति पदमिदं दर्शयति यत् अत्रत्यम् अमू इति रूपं पुंलिङ्गे इति। प्रगृह्यसंज्ञावशात् प्रकृतिभावः भवति।

निपाताः ये प्रगृह्याः सन्ति तेषाम् उदाहरणानि - इ इन्द्रः। उ उमेशः। आ एवं नु मन्यसे। आ एवं किल तत्। अत्र एषु सर्वेषु इ, उ, आ एतेषां चादित्वात् चादयोऽसत्त्वे इति सूत्रेण निपातसंज्ञा, निपातत्वात् निपात एकाजनाङ् इति सूत्रेण प्रगृह्यसंज्ञा। इ इन्द्रः इत्यत्र, उ उमेशः इत्यत्र च अकः सवर्णे दीर्घः इति सूत्रेण सवर्णदीर्घैकादेशे प्राप्ते प्लुतप्रगृह्या अचि नित्यम् इति सूत्रेण प्रकृतिभावः भवति। आ एवं नु मन्यसे, आ एवं किल तत् इत्यनयोः उदाहरणयोः वृद्धिरेचि इति सूत्रेण वृद्धौ प्राप्तायाम् प्लुतप्रगृह्या अचि नित्यम् इति सूत्रेण प्रकृतिभावः भवति।





## पाठगतप्रश्नाः-४

२२. दूराद्धूते च इति सूत्रेण किं विधीयते।

२३. विष्णू इत्यत्र प्रगृह्यसंज्ञाविधायकं सूत्रं किम्।

२४. अमी इत्यत्र प्रगृह्यसंज्ञा केन सूत्रेण।

२५. आङः प्रगृह्यसंज्ञा भवति न वा।

२६. प्रकृतिभावविधायकं सूत्रं किम्।



## पाठसारः

ययोः द्वयोः वर्णयोः संहिता भवति, अर्थात् ययोर्मध्ये अर्धमात्रातः अधिककालस्य व्यवधानं नास्ति तयोः संहिताधिकारस्थसूत्रैः विभिन्नाः आदेशाः भवन्ति। ययोः संहिता तयोः एकः पूर्ववर्णः अपरः परवर्णः च कथ्यते। अस्मिन् पाठे पूर्वपरयोः द्वयोः स्थाने एकः एव आदेशः विधीयते। तत्राधिकारसूत्रम् हि एकः पूर्वपरयोः।

अवर्णाद् इकि परे आद् गुणः इति सूत्रेण पूर्वपरयोः स्थाने गुणः अर्थात् अ ए ओ एषु अन्यतमः एकादेशः विधीयते। उपेन्द्रः इत्युदाहरणम्। अयमेव गुणसन्धिः इति प्रसिद्धिः। अवर्णाद् एचि परि पूर्वपरयोः स्थाने वृद्धिः अर्थात् आ ऐ औ एषु अन्यतमः एकादेशः वृद्धिरेचि इति सूत्रेण विधीयते। इदं सूत्रं गुणस्य अपवादः अस्ति। अयमेव वृद्धिसन्धिः इति प्रसिद्धिः।

ऋकारस्य स्थाने यदा अ आ इ ई उ ऊ एते वर्णाः विधीयन्ते तदा तैः सह रेफस्य योगं कृत्वा विधेयाः। ऋकारस्य स्थाने अकारः विधीयते चेत् सः अर् इति वस्तुतः प्रयोगक्तव्यः। तत्र उरण् रँपरः इति सूत्रं मानम्। कृष्णर्द्धिः इत्युदाहरणम्।

वृद्धिरेचि इति सूत्रेण उत्सर्गतः वृद्धिः प्राप्नोति। परन्तु क्वचित् नेष्यते। अतः एङि पररूम् इति सूत्रेण अवर्णान्तात् उपसर्गात् एङादौ धातौ परे वृद्धिं बाधित्वा पररूपम् विधीयते। इदं कार्यं शकन्ध्वादिगणे अपि आवश्यकमिति शकन्ध्वादिषु पररूपं वाच्यम् इति वार्तिकं कृतं कात्ययनमुनिना। अयं पररूपसन्धिः इति संस्कृते प्रचारः। इदम् एङि पररूपं क्वचित् नेष्टम्। अतः एत्येधत्यूठ्सु इति सूत्रं प्रणीतम् पाणिनिना। तेन अवर्णात् एजादिः एतिः एधतिः यदि परे स्यात् तर्हि पररूपं बाधित्वा वृद्धिः विधीयते। यदि ऊठ् परे स्यात् तर्हि गुणं बाधित्वा वृद्धिः विधीयते।

एत्येधत्यूठ्सु इति सूत्रस्य बहूनि वार्तिकानि सन्ति। तेन अक्षौहिणी प्रौहः प्रौढः सुखार्तः प्रार्णम् इत्यादीनि साधुरूपाणि भवन्ति।



अवर्णान्ताद् उपसर्गात् ऋकारादौ धातौ परे आद् गुणः इति सूत्रेण गुणे प्राप्ते गुणं बाधित्वा वृद्धिः विधीयते। तत्र उपसर्गाद् ऋति धातौ इति सूत्रं मानम्। प्रार्च्छति इत्यत्रोदाहरणम्।

अकः परम् सवर्णः अक् भवति चेत् पूर्वपरयोः स्थाने दीर्घः एकादेशः भवति। अयं सवर्णदीर्घसन्धिः इति प्रसिद्धिः। देवालयः विष्णूदयः इत्यादीनि अत्रोदाहरणानि।

पदान्ते एङ् अस्ति किञ्च ततः परवर्णः यदि अत् अर्थात् ह्रस्वः अकारः अस्ति तर्हि पूर्वरूपम् भवति। अकारस्य लोपः जातः इति नैके सामान्याः वदन्ति। परन्तु नायं लोपः। अत्र पूर्वरूपम् अभवत् इति ध्येयम्। विष्णोऽव प्रभोऽत्र इत्यादीनि उदाहरणानि।

बहुत्र संस्कृते वयं पश्यामः यत् त इमे, रथोपस्थ उपाविशत् एवं स्थलानि सन्ति यत्र अ+इ, अ+उ इति एतेषाम् पुनः गुणवृद्धिसवर्णदीर्घादीनि सन्धिकार्याणि न सन्ति। परन्तु भाति यत् अत्र तु भवितुम् अर्हति। परन्तु नैव भवति। तत्र रहस्यं हि तेषु उदाहरणेषु तय् इमे रथोपस्थय् उपाविशत् इति यकारम् गुणादिविधायकं सूत्राणि पश्यन्ति। यकारस्य लोपस्तु लोपः शाकल्यस्य इति सूत्रेण विहितः। परन्तु तत्सूत्रमेव गुणादिविधायकसूत्रदृष्ट्या नास्ति इव। पाणिनिना महता कौशलेन अष्टमाध्यायस्य द्वितीयपादस्य प्रथमं सूत्रं कृतम् पूर्वत्रासिद्धमिति। अनेन सूत्रेण अष्टमाध्यायस्य पादेन सह सप्त अध्यायाः सपादसप्ताध्यायी सिद्धकाण्डम् कथ्यते। अष्टमाध्यायस्य अन्तिमं पादत्रयं हि त्रिपादी च असिद्धकाण्डमुच्यते।

प्लुतवर्णात् परं प्रगृह्यसंज्ञकात् च परं यदि अच् स्यात् तर्हि तत्र पूर्वस्य परस्य उभयस्य वा परिवर्तनं न भवति। इदं स्वरूपेण अवस्थानमेव प्रकृतिभावः इति कथ्यते। तत्र प्लुतस्य विधानं दूराद्धूते च इति सूत्रेण भवति। प्रगृह्यसंज्ञा च ईदूदेद् द्विवचनं प्रगृह्यम् इति असतो मात् इति सूत्रद्वारा भवति। प्रकृतिभावविधायकं सूत्रं तावत् प्लुतप्रगृह्या अचि नित्यम् इति।



## योग्यतावर्धनम्

सूत्रस्य व्याख्यानम् इति व्याकरणस्य महान् विषयः। अष्टाध्याय्याः पठनं पाठनं वा भवतु, सूत्रव्याख्यानं विना पदमेकम् अग्रे न गच्छन्ति विद्वांसः। ये खलु व्याकरणम् अवलम्ब्य अग्रे पठन्ति ते उन्नतकक्षासु व्याकरणस्य सर्वप्रथमम् प्रक्रियाग्रन्थान् पठन्ति। ततः परम् वादग्रन्थान् पठन्ति। ततः परम् दार्शनिकग्रन्थान् च पठन्ति। अस्माकम् अयं पाठ्यग्रन्थः अपि प्रक्रियाग्रन्थः एव। प्रक्रियाग्रन्थे सूत्राणां व्याख्यानम् आवश्यकम् भवति। वादग्रन्थेषु तु वस्तुतः विभिन्नानाम् आचार्याणाम् व्याख्याने मतभेदाः एव बाहुल्येन आलोच्यन्ते। दार्शनिकग्रन्थेषु व्याकरणस्य सूत्रव्याख्यानं प्रायः नैव भवति। नापि किमपि रूपं वा साध्यते।

सूत्रव्याख्यानं परीक्षासु अपि बाहुल्येन पृच्छ्यते। अतः व्याख्यानं नाम किम्। कति अङ्गानि सन्ति व्याख्यानस्य। कथं तत् कर्तव्यम्। तस्य विशिष्टक्रमेण उपस्थापनम् च किम् इति एतत् अत्र छात्रहिताय प्रदर्श्यते। तत्रायं श्लोकः मुख्यः -



**पदच्छेदः पदार्थोक्तिर्विग्रहो वाक्ययोजना।**
**आक्षेपोऽथ समाधानं व्याख्यानं षड्विधं स्मृतम्।।**

१) पदच्छेदः, २) पदोर्थोक्तिः, ३) विग्रहः, ४) वाक्ययोजना, ५) आक्षेपः, ६) समाधानम्

एते विषयाः एवञ्च अन्येऽपि केचिद् विषयाः अधः सविस्तरं प्रदर्श्यन्ते।

उदाहरणम् - **उपसर्गाद् ऋति धातौ** इति सूत्रम्।

- **सूत्रस्य अवतरणम्। किमर्थं सूत्रम् प्रणीतम्।**

  (प्र ऋच्छति इति स्थिते आद् गुणः इत्यनेन गुणे प्राप्ते गुणस्य अपवादं कृत्वा वृद्धिविधानाय इदं सूत्रम् प्रणीतम्।)

- **सूत्रस्थलम् - कस्मिन् प्रकरणे अस्ति।**

  अस्मत्पाठ्यक्रमे अच्सन्धिप्रकरणे सूत्रमिदं विलसति/राजते/विराजते/वर्तते/विद्यते।

- **षट्सु प्रकारेषु अस्य सूत्रस्य प्रकारः कः।** (विधिसूत्रम् , परिभाषासूत्रम् ...)

  (संज्ञा च परिभाषा च विधिर्नियम एव च।
  अतिदेशोऽधिकारश्च षड्विधं सूत्रमुच्यते।।
  इति षड्विधेषु पाणिनीयसूत्रेषु इदं विधिसूत्रम्)

- **सूत्रे कति पदानि सन्ति।**

  (सूत्रेऽस्मिन् त्रीणि पदानि सन्ति।)

- **यदि पदेषु सन्धिः अस्ति तर्हि सन्धिविच्छेदं कृत्वा पदानि देयानि।**

  (उपसर्गाद् ऋति धातौ इति सूत्रगतपदच्छेदः।)

- **सूत्रस्थपदानाम् विभक्तिनिर्देशः कर्तव्यः।**

  (उपसर्गाद् इति पञ्चम्येकवचनान्तम् पदम्। ऋति इति सप्तम्येकवचनान्तं पदम्। धातौ इति सप्तम्येकवचनान्तं पदम्।)

- **यदि कोऽपि समासः अस्ति तर्हि तस्य विग्रहः, समासस्य नाम च वक्तव्यम्।**

  (अस्मिन् समासः तु न दृश्यते। अतः किमपि न वक्तव्यम्।)

- **अनुवृत्तिः अधिकारः आक्षेपः इति प्रकारैः यानि पदानि आयान्ति, तत्र कस्मात् सूत्रात् किम् पदम् आयाति इति वक्तव्यम्। तस्य विभक्तिः वक्तव्या। यदि समासः अस्ति तर्हि**



**विग्रहः, समासनाम च वक्तव्यम्। आगतानां पदानां क्वचिद् विभक्तिविपरिणामः भवति। स विपरिणामः अपि वक्तव्यः।**

(आद् गुणः इति सूत्राद् आत् इति पञ्चम्यन्तम् पदम् अनुवर्तते। वृद्धिरेचि इति सूत्राद् वृद्धिः इति प्रथमान्तं विधेयपरपदम् अनुवर्तते। एकः पूर्वपरयोः इति अधिकृतम्। समासः - पूर्वः च परः च तौ पूर्वपरौ इति इतरेतरयोगद्वन्द्वसमासः। तयोः पूर्वपरयोः इति। पूर्वस्य परस्य च इति द्वयोः स्थाने एकः एव आदेशः भवतीति तदर्थः।)

- **परिभाषया उपस्थापितानि पदानि वक्तव्यानि।**

  (अत्र पदोपस्थापिकया परिभाषया न किमपि पदमागतम्।)

- **एवं सर्वाणि पदानि लब्धानि चेत् सर्वाणि पदानि विशिष्टक्रमेण लेख्यानि - सा पदयोजना/वाक्ययोजना भवति।**

  (वाक्ययोजना - आद् उपसर्गात् ऋति धातौ पूर्वपरयोः एकः वृद्धिः।)

- **केन सूत्रेण, केन नियमेन, कया परिभाषया कस्य पदस्य केन अन्वयः/सम्बन्धः भवति इति वक्तव्यम्।**

  (**तदन्तविधिः** - अस्मिन् सूत्रे तदन्तविधिः भवति। अत्र आद् उपसर्गात् समानविभक्तिकं पदद्वयम् अस्ति। एकं विशेषणम् अपरं च विशेष्यम्। अतः तदन्तविधिः भवति। तदा तथा विशेष्यः उपसर्गः ग्राह्यः यस्य अन्ते विशेषणम् अवर्णः अस्ति। अत्र उपसर्गः इति विशेष्यः। आद् इति विशेषणम्। तदन्तविधिना अवर्णान्तः उपसर्गः बोध्यते।

  **तदादिविधिः** - ऋति धातौ इति पदद्वयं सप्तम्याम्। तयोः ऋति इति पदेन केवलम् लक्ष्ये एकदा एकः एव अल् ऋकारः लभ्यते। अतः ऋति इति अल्बोधकं पदमस्ति। एवं सति तदादिविधिः भवति। एवञ्च तथा विशेष्यं ग्राह्यं यस्य आदिः विशेषणम् अस्ति। अत्र विशेष्यः धातुः इति, विशेषणम् ऋत् इति। अतः तथा धातुः बोध्यः यस्य आदिः वर्णः ऋकारः अस्ति। अर्थो भवति - ऋकारादिः धातुः इति।

  एकः पूर्वपरयोः इत्यत्र पूर्वपरयोः इति पदे अनुयोगिविरहात् स्थानषष्ठी। अतः षष्ठी स्थानेयोगा इति परिभाषया पूर्वपरयोः स्थाने इति अर्थः लभ्यते।)

- **सूत्रार्थः वक्तव्यः।**

  (सूत्रार्थो भवति - अवर्णान्ताद् उपसर्गाद् ऋकारादौ धातौ परे पूर्वपरयोः स्थाने वृद्धिः एकादेशः भवति।)



- **सूत्रस्य सरलभाषया अर्थः स्पष्टीकर्तव्यः।**

  (अर्थात् अकारान्ताद् उपसर्गात् परं यदि ऋकारादिधातुः स्यात् तर्हि अकार-ऋकारयोः स्थाने वृद्धिः एकादेशः भवति।)

- **उदाहरणम् देयम्।**

  (उदाहरणम् - प्रार्छति।)

- **सूत्रार्थस्य उदाहरणे योजनम्/ समन्वयः प्रदर्शनीयः। उदाहरणस्य अर्थः च वक्तव्यः।**

  (**सूत्रार्थसमन्वयः** - प्र ऋच्छति इत्यत्र अवर्णान्तः उपसर्गः अस्ति, ऋच्छति इति ऋकारादिः धातुः परे अस्ति। अतः तत्र आद् गुणः इति सूत्रेण गुणे प्राप्ते प्रकृतसूत्रेण वृद्धिः विधीयते। यदि अत्रापि आद् गुणः इति सूत्रमेव प्रवर्तेत तर्हि प्रकृतसूत्रं निरवकाशम् अर्थात् व्यर्थं भवेत्। अतः वचनप्रामाण्यात् अयं गुणस्यापवादः। अ+ऋ इति पूर्वपरयोः स्थाने आ ऐ औ एषु अन्यतमः भवति। तत्र आ अण् अस्ति, स च ऋकारस्य स्थाने विधीयते। अतः उरण् रपरः इति सूत्रेण आर् इति भवति। तदा आर् ऐ औ एषु आर् एव स्थानतः अन्तरतमः। अतः स एव भवति। तदा प्रार्च्छति इति रूपं निष्पद्यते।)



## पाठान्तप्रश्नाः

अधः केचित् प्रश्नाः दीयन्ते। तेषाम् उत्तराणि प्रामुख्येन दीर्घाणि एव सन्ति। सूत्रव्याख्यानं रूपसाधनं च इति द्वौ भवतः व्याकरणस्य प्रश्नस्य मुख्यौ प्रकारौ। अच्सन्धिप्रकरणे योग्यतावर्धनांशे एकस्य सूत्रस्य व्याख्यानं सविस्तरं प्रदर्शितम् अस्ति। तद् दृष्ट्वा बुद्ध्वा च एतेषामपि सूत्राणां व्याख्यानं कर्तव्यम्।

झलां जश् झशि इति सूत्रे रूपसाधनं कथं कर्तव्यमिति रूपसाधनस्य नैके प्रकाराः सविस्तरं प्रदर्शिताः सन्ति। अतः तत् स्थलं दृष्ट्वा बुद्ध्वा च अन्येषामपि रूपाणां साधने प्रयासः निष्ठया विधेयः। प्रथमं लघु रूपं साधनीयम्। ततः परं क्रमशः विस्तारः कर्तव्यः।

१. आद् गुणः इति सूत्रं व्याख्यात।
२. वृद्धिरेचि इति सूत्रं व्याख्यात।
३. उपसर्गाद् ऋति धातौ इति सूत्रं व्याख्यात।
४. अकः सवर्णे दीर्घः इति सूत्रं व्याख्यात।
५. पूर्वत्रासिद्धम् इति सूत्रं व्याख्यात।
६. ईदूदेद् द्विवचनं प्रगृह्यमिति सूत्रं व्याख्यात।



७. अस्मिन् पाठे किं सूत्रं कस्य अपवादः इति संगृह्य कारणमपि प्रतिपादयत।

८. अत्र अधः प्रारम्भस्थितिः दीयते। किञ्च यद्रूपं साधनीयं तदपि दीयते। ततः प्रदत्तानि रूपाणि ससूत्रं साधयत।

| प्रारम्भः | साध्यं रूपम् |
|---|---|
| गज इन्द्रः | गजेन्द्रः |
| रमा ईशः | रमेशः |
| सूर्य उदयः | सूर्योदयः |
| देव ऋषिः | देवर्षिः |
| यज्ञ उपवीतम् | यज्ञोपवीतम् |
| जन्म उत्सवः | जन्मोत्सवः |
| ग्रीष्म ऋतुः | ग्रीष्मर्तुः |
| दण्ड अग्रम् | दण्डाग्रम् |
| विद्या आनन्दः | विद्यानन्दः |
| भूमि ईशः | भूमीशः |
| मधु उदकम् | मधूदकम् |

| प्रारम्भः | साध्यं रूपम् |
|---|---|
| तव एव | तवैव |
| दुग्ध ओदनः | दुग्धौदनः |
| राम औत्सुक्यम् | रामौत्सुक्यम् |
| दुर्गा औदार्यम् | दुर्गौदार्यम् |
| मा एवम् | मैवम् |
| रोग औषधम् | रोगौषधम् |
| दीर्घ एकारः | दीर्घैकारः |
| हरि ईशः | हरीशः |
| मुनि इन्द्रः | मुनीद्रः |
| गुणी इति | गुणीति |
| पितृ ऋणम् | पितृणम् |

९. स्तम्भयोः सम्बद्धानां मेलनं कुरुत।

| | |
|---|---|
| (क) वृद्धिरेचि | (i) प्रैति |
| (ख) एत्येधत्यूठ्सु | (ii) नद्युदकम् |
| (ग) एङि पररूपम् | (iii) गुणापवादः |
| (घ) अकः सवर्णे दीर्घः | (iv) अधिकारः |
| (ङ) इको यणचि | (v) देवेशः |
| (च) आद् गुणः | (vi) उपोषति |
| (छ) एचोऽयवायावः | (vii) कवीशः |
| (ज) एकः पूर्वपरयोः | (viii) देवावास्ताम् |





## पाठान्तप्रश्नानाम् उत्तराणि

**उत्तराणि-१**

१. एकः पूर्वपरयोः इति अधिकारसूत्रम्। अस्मिन्नधिकारे विधीयमानः आदेशः पूर्वपरयोः स्थाने एकः एव भवतीति तदर्थः।

२. गङ्गोदकम् इत्यत्र ओकारः आद् गुणः इति सूत्रेण।

३. अवर्णाद् अचि परे पूर्वपरयोः एकः गुण आदेशः भवतीति आद् गुणः इति सूत्रस्यार्थः।

४. उरण् रपरः इति सूत्रे अण् अइउण् इति सूत्रस्थेन णकारेण।

५. ऋकारस्य स्थाने इकारः भवति चेत् वस्तुतः इर् आदेशः भवति, उरण् रपरः इति सूत्रेण।

६. ४)

७. १)

**उत्तराणि-२**

८. वृद्धिरेचि इति सूत्रस्यार्थो हि अवर्णाद् एचि परे पूर्वपरयोः स्थाने एकः वृद्धिः आदेशः भवति।

९. एङि पररूपम्।

१०. ३)

११. १)

१२. ४)

**उत्तराणि-३**

१३. अकः सवर्णे अचि परे पूर्वपरयोः दीर्घः एकादेशः भवति।

१४. एचोऽयवायावः।

१५. एचोऽयवायावः।

१६. अवर्णपूर्वयोः पदान्तयोः यवयोः अशि परे वा लोपः।

१७. विष्णो आगच्छ इत्यस्य विष्ण आगच्छ इति परिवर्तने लोपः शाकल्यस्य इति सूत्रेण वलोपः कृतः। वलोपविधायकम् इदं सूत्रं अकः सवर्णे दीर्घः इति सवर्णदीर्घसन्धिविधायकम् सूत्रं प्रति पूर्वत्रासिद्धमिति सूत्रेण असिद्धम्। वलोपस्य असिद्धत्वात् न सवर्णदीर्घैकादेशः।

१८. असिद्धकाण्डे अष्टमाध्यास्य द्वितीयतृतीयचतुर्थपादाः सन्ति।

१९. ३)

२०. ३)

२१. ३)



**उत्तराणि-४**

२२. दूराद्धूते च इति सूत्रेण दूरात् सम्बोधने वाक्यस्य टेः प्लुतो वा विधीयते।

२३. विष्णू इत्यत्र प्रगृह्यसंज्ञाविधायकं सूत्रम् हि ईदूदेद् द्विवचनं प्रगृह्यम् इति।

२४. अमी इत्यत्र प्रगृह्यसंज्ञा अदसो मात् इति सूत्रेण।

२५. न।

२६. प्लुतप्रगृह्या अचि नित्यम् इति सूत्रं प्रकृतिभावविधायकम्।

।।इत्यच्सन्धिः सप्तमः पाठश्च।।



# ८

# हल्सन्धौ रुत्व-श्चुत्वादिसन्धिः

## प्रस्तावना

पूर्वपाठे स्वरसन्धिः आलोचितः। स्वरसन्धिरेव अच्सन्धिरपि कथ्यते। संहितायाम् (६.१.७२) इत्यधिकारे पठितानि सूत्राणि अच्सन्धिसूत्राणि इति गण्यन्ते। तयोर्य्वाविचि संहितायाम् (८.२.१०८) इति सूत्रस्थम् संहितायाम् इति पदमपि अधिकृतम्। अयमधिकारः अ अ (८.४.६८) इति अष्टाध्याय्याः अन्तिमं सूत्रं यावद् अस्ति। अस्मिन् संहिताधिकारे व्यञ्जनम् अर्थात् हलम् उद्दिश्य कार्यं विधीयते। एकस्य व्यञ्जनस्य अपरव्यञ्जनत्वेन परिणामः अत्र भवति। अत्र व्यञ्जनेषु अर्थात् हल्सु अनुस्वारः अनुनासिकः विसर्गः जिह्वामूलीयः उपध्मानीयः एते अपि गण्यन्ते। तस्मात् हल्सन्धिः इत्यनेन एतेषां समेषाम् अपि परिवर्तनं बोध्यते। तथापि विशिष्य बोधाय कदाचित् हल्सन्धिः विसर्गसन्धिः अनुस्वारसन्धिः इत्यादिव्यपदेशाः भवन्ति। विसर्गसन्धिः पूर्णतया हल्सन्धितः पृथक् कर्तुं नैव शक्यते। यतोहि अष्टाध्याय्याम् पूर्वं विसर्गसन्धिः अस्ति, ततः परं हल्सन्धिः अस्ति। विसर्गसन्धिना कृतं परिवर्तनं हल्सन्धिप्रकरणे गृह्यते। तस्मात् विसर्गसन्धिसूत्राणि कानिचित् हल्सन्धिप्रकरणे एव उपन्यस्तानि। यानि पृथक्तया विसर्गसन्धिप्रकरणे उपन्यस्तुं शक्यानि तानि पृथक् उपन्यस्तानि।

सूत्रे यानि पदानि सन्ति, किञ्च यानि पदानि अनुवृत्त्यादिभिः लभ्यन्ते, तेषां समेषामपि विभक्तिवचनादिकम् सूत्रव्याख्यायाम् उच्यते। यथा - इको यणचि इति सूत्रे इकः इति षष्ठ्येकवचनान्तम् पदम्। यण् इति प्रथमैकवचनान्तं पदम्। अचि इति सप्तम्येकवचनान्तं पदम्। अस्य प्रकटनस्य लाघवाय इकः (६/१), यण् (१/१), अचि (७/१) इत्यपि उपायावलम्बः क्रियते। तत्र इकः (षष्ठी/एकवचनम्) इत्येव इकः (६/१) इति रूपेण प्रकट्यते। अचि (सप्तमी/एकवचनम्) इत्येव अचि (७/१) इति रूपेण प्रकट्यते। अयमुपायः तत्र तत्र अवगन्तव्यः।



## उद्देश्यानि

इमं पाठं पठित्वा भवान्

- व्यञ्जनसन्धेः बहूनि सूत्राणि ज्ञास्यति।
- त्रिपाद्याम् पूर्वं प्रति परं शास्त्रम् असिद्धम् इत्यस्य बहूनि उदाहरणानि ज्ञास्यति।
- स्थानेऽन्तरतमः इति परिभाषायाः विपुलं प्रवृत्तिक्षेत्रमत्र वीक्षिष्यति।
- व्यञ्जनेषु आन्तरतम्यपरीक्षां कर्तुं प्रभवेत्।
- एकस्यैव स्थलस्य विविधानि वैकल्पिकरूपाणि कथं सम्भवन्ति इति ज्ञास्यति।



## प्रस्तुतिः

पदस्य। (८.१.१६) इति अधिकारोऽयम्। इडाया वा (८.३.५४) इति सूत्रं यावत् पदस्य इति अधिकृतम्।

तयोर्य्वावचि संहितायाम् (८.२.१०८) इति सूत्रस्थः संहितायाम् इति अधिकारः त्रिपाद्याम् अर्थात् असिद्धकाण्डे अस्ति। तेषु सूत्रेषु अयमधिकारः अस्ति। परन्तु सूत्रव्याख्यानकाले बहुधा न उल्लिख्यते। अस्मिन् काण्डे पूर्वं प्रति परं सूत्रम् असिद्धं भवति। अतः तेषां सूत्राणां किं पूर्वतनं सूत्रं किं वा परवर्ती सूत्रमिति स्पष्टं ज्ञानं नास्ति चेत् हल्सन्धिः सुबोधो न भवति। अतः अस्य प्रकरणस्य सुखम् अध्ययनाय त्रिपादी कण्ठस्था अस्ति चेदुत्तमम्।

राम+सु शेते इति उदाहरणे अनुबन्धलोपे रामस् शेते इति स्थिते प्रक्रियया रामः शेते इति रामश्शेते इति प्रयोगद्वयम् साधु गण्यते। पाणिनिव्याकरणे एतयोः प्रयोगयोः सिद्धिः येन क्रमेण भवति तेन क्रमेण अधः सूत्राणि उपन्यस्तानि। एवमेव ततः परं क्रमः आदृतः।

## [८.१] ससजुषो रुः॥ (८.२.६६)

**सूत्रार्थः** - सकारान्तपदस्य सजुषन्तपदस्य च अन्त्यस्य रुः भवति।

**सूत्रव्याख्या** - विधिसूत्रमिदम्। अस्मिन् पदद्वयमस्ति। ससजुषः रुः इति सूत्रगतपदच्छेदः। सः च सजूः च इति ससजुषौ, तयोः ससजुषोः इति इतरेतरयोगद्वन्द्वसमासः। इदं षष्ठीद्विवचनम्। रुँः इति प्रथमैकवचनम्। तत्र उँकारः उपदेशेऽजनुनासिक इत् इति सूत्रेण इत्-संज्ञां लभते। ततः तस्य लोपः इति सूत्रेण तस्य लोपः च भवति। पदस्य इत्यधिकृतम्। पदयोजना - पदस्य ससजुषो रुः। पदस्य ससजुषो इति समानविभक्तिकम् पदद्वयम्। पदस्य इति विशेष्यम्। ससजुषोः इति विशेषणम्। अतः तदन्तविधिना सकारान्तस्य पदस्य सजुष्-शब्दान्तस्य च पदस्य इति अर्थो लभ्यते। ततः परम् अलोऽन्त्यस्य इति परिभाषया तादृशपदस्य अन्त्यस्य कार्यं भवति। सूत्रार्थो भवति - सकारान्तपदस्य सजुषन्तपदस्य च अन्त्यस्य रुः भवति। अर्थात् यदि पदान्ते सकारः स्यात्, अथवा सजुष्-शब्दान्तस्य पदस्य अन्तिमवर्णः स्यात् चेत् तस्य स्थाने रुँः भवति। इदं नित्यं कार्यम्। अपि च संहिताधिकारे नास्ति।

**उदाहरणम्** - रामशब्दात् सु इति विभक्तिप्रत्यययोगेन रामस् इति जायते। रामस् इति सुबन्तमस्ति। अतः सुप्तिङन्तं पदमिति सूत्रेण तस्य पदसंज्ञा भवति। रामस् इति सकारान्तं पदमस्ति। तस्य अन्त्यस्य सकारस्य ससजुषो रुः इति सूत्रेण रुः भवति। रुँः इत्यस्मिन् उँकारः अनुनासिकः अस्ति। तस्य उपदेशेऽजनुनासिक इत् इति सूत्रेण इत्संज्ञा भवति। तस्य लोपः इति सूत्रेण लोपः च भवति। तदा रामर् इति जायते। तदा -

## [८.२] खरवसानयोर्विसर्जनीयः॥ (८.३.१५)

**सूत्रार्थः** - खरि अवसाने च परे पदान्तस्य रेफस्य विसर्गः स्यात्।



**सूत्रव्याख्या** - विधिसूत्रमिदम्। अस्मिन् पदद्वयमस्ति। खरवसानयोः विसर्जनीयः इति सूत्रगतपदच्छेदः। खर् च अवसानञ्च इति खरवसाने, तयोः खरवसानयोः इति इतरेतरयोगद्वन्द्वसमासः। पदस्य इत्यधिकृतम्। रो रि इति सूत्रात् रः इति षष्ठ्यन्तं पदमनुवर्तते। पदयोजना - खरि अवसाने च पदस्य रः विसर्जनीयः। अत्र पदस्य रः इति समानविभक्तिकं पदद्वयम्। पदस्य इति विशेष्यम्, रः इति विशेषणम्। अतः तदन्तविधिना रेफान्तपदस्य इति लभ्यते। तत्रापि रेफान्तपदस्य इति अल्समुदायबोधकात् स्थानषष्ठी श्रूयते। अतः अलोऽन्त्यस्य इति परिभाषया रेफान्तस्य पदस्य अन्त्यस्य इति अर्थो लभ्यते। सूत्रार्थो भवति - खरि अवसाने च परे रेफान्तपदस्य अन्त्यस्य विसर्गः भवति। इदमेव - खरि अवसाने च परे पदान्तस्य रेफस्य विसर्गः स्यात् इति सरलतया प्रकट्यते। परन्तु अयं फलितार्थः अस्ति न तु परिभाषादियोजनेन निष्पन्नः अर्थः।

**उदाहरणम्** - रामः।

**सूत्रार्थसमन्वयः** - रामप्रातिपदिकात् सुविभक्तियोगेन रामस् इति जाते ससजुषो रुः इति सूत्रेण रुत्वं भवति। तदा रामर् इति शब्दः लभ्यते। ततः परं यदि किमपि पदं नास्ति, अर्थात् वर्णोच्चारणाभावः अस्ति, तर्हि अवसानम् अस्ति। तदा अवसाने परे रेफस्य खरवसानयोर्विसर्जनीयः इति सूत्रेण विसर्गः भवति। तेन रामः इति रूपं सिद्ध्यति।

यदि वाक्यसंस्कारपक्षः तर्हि राम इति प्रातिपदिकात् सु इति विभक्तियोगेन, किञ्च तस्मात् परं शेते इति शब्दप्रयोगेन रामस् शेते इति स्थितिः उद्भवति। तत्र रामस् इति पदमस्ति। तस्य अन्ते सकारः अस्ति। अतः ससजुषो रुः इति सूत्रेण रुत्वं भवति। तदा रामर् शेते इति स्थितिः जायते। रामर् शेते इत्यत्र रेफात् परम् खर् शकारः अस्ति। किञ्च अयं रेफः पदान्तः अस्ति। अतः प्रकृतसूत्रेण रेफस्य स्थाने विसर्गः भवति। तेन रामः शेते इति स्थितिः जायते। तदा -

## [ ८.३] विसर्जनीयस्य सः॥ (८.३.३४)

**सूत्रार्थः** - खरि विसर्जनीयस्य सः स्यात्।

**सूत्रव्याख्या** - विधिसूत्रमिदम्। अस्मिन् द्वे पदे स्तः। विसर्जनीयस्य (६/१), सः (१/१), सकारः इति तदर्थः। पदस्य इति अधिकृतम्। खरवसानयोर्विसर्जनीयः इति सूत्रात् खरि इति एकांशः अनुवर्तते। स च मण्डूकप्लुत्या आयाति। मण्डूकाः यथा उत्प्लुत्य उत्प्लुत्य गच्छन्ति तथा क्वचित् पदानि अपि कानिचित् सूत्राणि त्यक्त्वा उत्प्लुत्य गच्छन्ति। अर्थात् यत् पदम् अनुवर्तते तत् स्वस्थानतः यावद् दूरं गच्छति तावत् यदि क्रमशः सर्वेषु सूत्रेषु न गृह्यते परन्तु परवर्तिषु क्वचिद् गृह्यते तदा तत् पदम् मण्डूकप्लुत्या गच्छतीति कथ्यते। पदयोजना - संहितायाम् पदस्य विसर्जनीयस्य खरि सः। पदस्य विसर्जनीयस्य इति समानविभक्तिं पदद्वयमस्ति। अतः तदन्तविधिना विसर्गान्तस्य पदस्य इति अर्थो लभ्यते। ततः अलोऽन्त्यस्य इति परिभाषया विसर्गान्तपदस्य अन्त्यस्य इति अर्थो लभ्यते। सूत्रार्थो भवति - विसर्गान्तपदस्य अन्त्यस्य खरि परे सः भवति संहिता चेत्। इदमेव - खरि विसर्जनीयस्य सः स्यात् इति बहुत्र प्रकट्यते।

**उदाहरणम्** - रामः शेते इत्यत्र विसर्गात् परं खर् अस्ति। अतः विसर्जनीयस्य सः इति प्रकृतसूत्रेण विसर्गस्य नित्यं सकारः प्राप्तः। तदा -

## [८.४] वा शरि॥ (८.३.३५)

**सूत्रार्थः** - शरि विसर्गस्य विसर्गः वा भवति।

**सूत्रव्याख्या** - विधिसूत्रमिदम्। अस्मिन् पदद्वयमस्ति। वा इति विकल्पार्थे अव्ययम्। शरि इति सप्तम्येकवचनम्। विसर्जनीयस्य सः इति सूत्रात् विसर्जनीयस्य इति षष्ठ्यन्तं पदमनुवर्तते। शर्परे विसर्जनीयः इति सूत्रात् विसर्जनीयः इति प्रथमान्तं विधेयपदमनुवर्तते। पदस्य इत्यधिकृतम्। संहितायाम् इत्यधिकृतम्। वाक्ययोजना - संहितायाम् पदस्य शरि विसर्जनीयस्य वा विसर्जनीयः। विसर्जनीयस्य सः इति सूत्रेण नित्यं विसर्गे प्राप्ते वा शरि इति सूत्रेण विकल्पेन विसर्गः विधीयते। यदा विसर्गः न भवति तदा विसर्जनीयस्य सः इति सूत्रेण सकारः भवतीति अवधेयम्। सूत्रार्थो भवति - शरि विसर्गस्य विसर्गः वा भवति।

**उदाहरणम्** - रामः शेते।

**सूत्रार्थसमन्वयः** - रामः शेते इति स्थिते अत्र पदान्तः विसर्गः अस्ति। तस्मात् परं शर् शकारः अस्ति। विसर्जनीयस्य सः इति सूत्रेण नित्यं सकारे प्राप्ते वा शरि इति प्रकृतसूत्रेण विसर्गस्य विकल्पेन विसर्गः भवति। तेन रामः शेते इति सिद्धिः भवति।

यदा तु रामः शेते इत्यत्र विसर्गाभावपक्षः आद्रियते तदा विसर्जनीयस्य सः इति सूत्रेण विसर्गस्य सकारे कृते रामस् शेते इति स्थितिः उद्भवति। तदा - (अग्रिमसूत्रे द्रष्टव्यम्)

**पूर्वत्रासिद्धम् इति सूत्रस्य प्रभावः** - विसर्गाभावपक्षे तु रामः शेते इत्यत्र विसर्जनीयस्य सः इति उत्सर्गसूत्रेण सकारः भवति। तेन रामस् शेते इति स्थितिः जायते। अत्र रामस् इति शब्दे यद्यपि पदान्ते सकारः दृश्यते तथापि ससजुषो रुः इति सूत्रेण अत्र पुनः रुत्वं न भवति। कुत इति चेदुच्यते यद् अधुना रामस् इत्यत्र यः सकारः स विसर्जनीयस्य सः इति सूत्रेण विहितः। ससजुषो रुः (८.२.६६) इति विसर्जनीयस्य सः (८.३.३४) इति च एतत् सूत्रद्वयं त्रिपाद्याम् अस्ति। त्रिपाद्याम् पूर्वं प्रति परं सूत्रम् असिद्धम् भवति। अत एव पूर्वं विद्यमानं ससजुषो रुः इति सूत्रं प्रति विसर्जनीयस्य सः इति सूत्रम् असिद्धम्। अर्थात् ससजुषो रुः इति सूत्रं नैव पश्यति यद् अत्र सकारः अस्तीति। तत्राधुना -

**उदाहरणम्** - रामः चिनोति इति स्थिते विसर्गः अस्ति। तस्मात् परं खर् चकारः अस्ति। अतः विसर्जनीयस्य सः इति प्रकृतसूत्रेण विसर्गस्य सकारः भवति। तेन रामस् चिनोति इति भवति। तदा -

## [८.५] स्तोः श्चुना श्चुः॥ (८.४.३९)

**सूत्रार्थः** - सकारतवर्गयोः शकारचवर्गाभ्यां योगे शकारचवर्गौ स्तः।

**सूत्रव्याख्या** - विधिसूत्रमिदम्। अस्मिन् त्रीणि पदानि सन्ति। स् च तुः च इति स्तुः। तस्य स्तोः इति समाहारद्वन्द्वसमासः। तुँः इत्यनेन अणुदित् सवर्णस्य चाप्रत्ययः इति ग्रहणकशास्त्रबलात् त् थ् द् ध् न् इति तवर्गः बोध्यः। तेन स्तोः इति पदस्य सकारः तवर्गश्च इत्यर्थः। श् च चुँः च इति श्चुः। तेन



श्चुना। इति समाहारद्वन्द्वसमासः। अत्र चुँः इत्यनेन च् छ् ज् झ् ञ् इति चवर्गः ग्राह्यः। तेन श्चुना इत्यस्य शकारः चवर्गश्च इति अर्थः। श् च चुँः च इति श्चुः इति समाहारद्वन्द्वसमासः। सौत्रं पुंस्त्वम्। तयोर्य्वावचि संहितायाम् (८.२.१०८) इत्यतः संहितायामिति अधिकृतमस्ति। सूत्रार्थो भवति - सकारतवर्गयोः शकारचवर्गाभ्यां योगे शकारचवर्गौ स्तः। स्थानित्वेन सकारः तवर्गः च अस्ति। आदेशत्वेन शकारः चवर्गः चास्ति। स्थानिनः षट् आदेशाः च षट्। अतः यथासंख्यमनुदेशः समानाम् इति परिभाषया आदेशाः क्रमशः भवेयुः। सकारस्य तवर्गस्य शकारेण चवर्गेण च यथासंभवं योगे सकारस्य स्थाने सकारः, तवर्गस्य स्थाने च चवर्गः भवति। तदेव श्चुत्वम् इति उच्यते।

स्तोः इति पदे, श्चुः इति च पदे समाहारद्वन्द्वसमासः अस्ति। समाहारद्वन्द्वसमासे च पदं नपुंसकलिङ्गं भवति। अतः स्तु इति श्चु इति शब्दयोः रूपे नपुंसकलिङ्गे स्याताम्। तेन स्तुनः श्चु इत्येव रूपे स्याताम्। किन्तु सूत्रे स्तोः इति श्चुः इति पुंसि प्रयोगः अस्ति। तत्कथम्। तत्रोच्यते - पाणिनिसूत्राणि वेदाङ्गानि भवन्ति। अतः तत्र नियमस्य व्यतिक्रमः अपि भवितुमर्हति। सूत्रवशात् पुंलिङ्गमस्ति। तदा सौत्रं पुंलिङ्गमिति कथ्यते।

**उदाहरणम्** - रामश्शेते। रामश्चिनोति।

**सूत्रार्थसमन्वयः** - रामस् शेते इत्यत्र स्तोः सकारस्य श्चुना शकारेण योगः अस्ति। अतः सकारस्य स्थाने षष्ठी स्थानेयोगा इति परिभाषाबलेन स्तोः श्चुना श्चुः इति प्रकृतसूत्रेण शकारः भवति। तेन रामश्शेते इति सन्धिकार्यं फलति।

रामस् चिनोति इत्यत्र स्तोः सकारस्य श्चुना चकारेण योगः अस्ति। अतः सकारस्य स्थाने षष्ठी स्थानेयोगा इति परिभाषाबलेन स्तोः श्चुना श्चुः इति प्रकृतसूत्रेण शकारः भवति। तेन रामश्चिनोति इति सन्धिकार्यं फलति।

अस्मिन् उदाहरणे सकारस्य चकारेण योगः अस्ति। स्तोः श्चुना योगः इत्यत्र यथासंख्यम् इत्यस्य प्रयोजनं नास्तीति स्पष्टीकरणाय एव इदमुदाहरणमत्र उपन्यस्तम्। स्तोः मध्ये सकारः प्रथमः वर्णः, श्चुना इत्यत्र चकारः द्वितीयः वर्णः। अतः योगविषये यथासंख्यं नास्तीति अवधेयम्।

अधुना सच्चित् इति रूपमपि स्तोः श्चुना श्चुः इति सूत्रस्य उदाहरणम् अस्ति। परन्तु तत्र क्रमशः इतोऽपि अधिकानां सूत्राणाम् अपेक्षा अस्ति। अतः तस्य रूपस्य साधनाय येन क्रमेण सूत्राणि आयान्ति तेन क्रमेण अधस्तात् उपादीयन्ते। वैयाकरणसिद्धान्तकौमुद्यां लघुसिद्धान्तकौमुद्यां वा इको यणचि इति अच्सन्धिसूत्रानन्तरम् अनचि च इति हल्सन्धिसूत्रम् उपन्यस्तम्। ततः परं झलां जश् झशि इत्यपि हल्सन्धिसूत्रम् उपात्तम्। परन्तु प्रकरणं तु अच्सन्धिः इति उल्लिखितम् अस्ति। तर्हि कथं हल्सन्धिसूत्राणि अपि तत्र आनीतानि इति प्रश्नः चेद् उत्तरम् इदमेव दीयते यत् एकस्य शब्दस्य सम्पूर्णं रूपं साधयितुं यानि सूत्राणि आवश्यकानि तानि दत्तानि। तत्र कदाचित् अच्सन्धिप्रकरणस्य सूत्रम् आवश्यकम्, कदाचिच्च हल्सन्धिप्रकरणस्य सूत्रम् आवश्यकम्। तर्हि सूत्राणां संकरः अपरिहार्यकारणेन कृतः। तथैव हल्सन्धिप्रकरणे विसर्गसन्धिप्रकरणस्य सूत्राणि आवश्यकानि भवन्ति अपरिहार्यतया। अतः

येन क्रमेण किमपि एकं साधु रूपं साधनीयं चेत् यानि सूत्राणि आवश्यकानि तानि अत्र आनीतानि। तेन सूत्राणां संकरः यद्यपि जातः तथापि अपरिहार्यः सः इति।

## [ ८.६] झलां जशोऽन्ते॥ (८.२.३९)

**सूत्रार्थः** - पदान्ते झलां स्थाने जशः भवन्ति।

**सूत्रव्याख्या** - इदं विधिसूत्रम्। अस्मिन् सूत्रे त्रीणि पदानि सन्ति। झलाम् जशः अन्ते इति सूत्रगतपदच्छेदः। झलाम् (६/३), जशः (१/३), अन्ते (७/१)। पदस्य इति अधिकृतम्। पदयोजना - पदस्य अन्ते झलां जशः। सूत्रार्थो भवति - पदान्ते झलां स्थाने जशः भवन्ति। झल् जश् च प्रत्याहारौ। झल् स्थानी जश् आदेशः च। स्थानिसंख्यातः आदेशसंख्या भिन्ना। अतः स्थानेऽन्तरतमः इति परिभाषाबलेन स्थानिना स्थानतः अन्तरतमः आदेशः कर्तव्यः।

**उदाहरणम्** - सत् चित् (सत्यम् च ज्ञानम् च इत्यर्थः) इति स्थिते सत् इति शब्दस्य तकारः पदान्ते अस्ति। स च झल् अस्ति। अतः प्रकृतसूत्रेण तकारस्य स्थाने जश् भवति। तकारः एकः स्थानी, तस्य स्थाने जश् - ज् ब् ग् ड् द् इति पञ्च आदेशाः। स्थानिसंख्यातः आदेशसंख्या विषमा। अतः एषु कतमः स्यादिति प्रश्नः। तदा स्थानेऽन्तरतमः इति परिभाषया स्थानिना अन्तरतमः आदेशः कर्तव्यः। अधस्तात् आन्तर्यम् कथं परीक्ष्यते इति प्रदर्श्यते।

**आन्तरतम्यपरीक्षा** - आन्तर्यम् च स्थानार्थगुणप्रमाणकृत् चतुर्विधम्। प्रमाणमत्र उच्चारणकालः। स्थानिनः उच्चारणकालः अर्धमात्रा, आदेशानामपि उच्चारणकालः अर्धमात्रा एव। तेन तेषु कोऽपि एकः अन्तरतमः इति वक्तुं न शक्यते।

गुणः बाह्ययत्नः भवति। तकारस्य बाह्ययत्नाः - विवारः श्वासः अघोषः अल्पप्राणः इति। ज् ब् ग् ड् द् एषां बाह्ययत्नाः - संवारः नादः घोषः अल्पप्राणः इति। अतः एषु कोऽपि एकः अन्तरतमः इति वक्तुं न शक्यते।

सामान्यतः वर्णानां न कोऽपि अर्थः अत्र गृह्यते। तस्मात् अर्थकृद् आन्तर्यम् न परीक्ष्यते।

तकारस्य उच्चारणस्थानं दन्ताः। जकारस्य उच्चारणस्थानं तालु, बकारस्य ओष्ठौ, गकारस्य कण्ठः, डकारस्य मूर्धा, दकारस्य दन्ताः। तकारस्य यदुच्चारणस्थानं तदेव उच्चारणस्थानं दकारस्यापि अस्ति। अतः तकारस्य दकारेण स्थानकृदान्तर्यं लभ्यते। तेन तकारस्य स्थाने दकारः आदेशः भवति। तदा सद् चित् इति स्थितिः जायते। अत्र स्तोः दकारस्य श्चुना चकारेण योगः अस्ति। अतः स्तोः श्चुना श्चुः इति सूत्रेण दकारस्य स्थाने यथासंख्यमनुदेशः समानाम् इति परिभाषया जकारः भवति। तेन सज् चित् इति स्थितिः उद्भवति। तदा -

## [ ८.७] खरि च॥ (८.४.५४)

**सूत्रार्थः** - खरि परे झलां चरः भवन्ति।

**सूत्रव्याख्या** - साक्षात् लक्ष्यं संस्करोति इति विधिसूत्रमिदम्। अस्मिन् पदद्वयम् अस्ति। खरि इति सप्तम्येकवचनम्। च इति अव्ययपदम्। झलां जश् झशि इति सूत्रात् झलाम् इति षष्ठीबहुवचनान्तम्



पदमनुवर्तते। अभ्यासे चर्च इति सूत्रात् चर् इति प्रथमैकवचनान्तं पदमनुवर्तते, तस्य प्रथमाबहुवचनत्वेन चरः इति परिणामः भवति। पदयोजना - खरि झलाम् चरः। सूत्रार्थो भवति - खरि परे झलां स्थाने चरः भवन्ति।

**उदाहरणम् -** सत् चित् इति स्थिते झलां जशोऽन्ते इति सूत्रेण तकारस्य दकारे कृते सद् चित् इति स्थितिः जायते। तत्रापि स्तोः श्चुना श्चुः इति सूत्रेण दकारस्य जकारे कृते सज् चित् इति स्थितिः उद्भवति। तत्र यः झल् जकारः तस्मात् परं खर् चकारः अस्ति। अतः खरि च इति सूत्रेण जकारस्य स्थाने चर् - च् ट् त् क् प् श् ष् स् एषु अन्यतमः विधीयते। स्थान्यादेशयोः संख्यावैषम्यम् अस्ति। अतः स्थानेऽन्तरतमः इति परिभाषया अत्र नियमः कर्तव्यः। स्थानिना सदृशतमः आदेशः कर्तव्यः। सादृश्यं च स्थानार्थगुणप्रमाणकृत् चतुर्विधम्। अतः किम् आन्तर्यम् अत्र ग्राह्यम् इति प्रश्नः। झलां जशोऽन्ते इति सूत्रे सविस्तरं व्याख्यातम् अस्ति। अत्र लघुना उच्यते।

अत्र आदेशेषु समेषाम् एव अर्धमात्राकालिकं प्रमाणं समानम्, गुणः अर्थात् बाह्ययत्नः समानः, वर्णस्य न कोऽपि अर्थः। अतः प्रमाणकृद् गुणकृद् अर्थकृत् च आन्तर्यं नैव सम्भवति। स्थानकृदान्तर्यं तावद् अवशिष्टं परीक्ष्यते। स्थानी जकारः, तस्य उच्चारणस्थानं तालु। आदेशेषु चकारस्य शकारस्य च उच्चारणस्थानं तालु। श् ष् स् इति एषां स्थाने श् ष् स् एव क्रमशः भवन्ति इति व्यवस्था अस्ति। अतः जकारस्य स्थाने चकारः एव आदेशः भवति। तदा सच् चित् इति जायते। वर्णमेलनेन सच्चित् इति इष्टं साधु रूपं निष्पद्यते।

**इदमत्र अवधेयम् -** सत् चित् स्थिते प्रथममेव स्तोः श्चुना श्चुः (८.४.३९) सूत्रं कुतः न प्रवर्तते इति प्रश्नः उदेति। अथवा खरि च (८.४.५४) इति सूत्रमेव आदौ कुतः न प्रवर्तते। तत्रोत्तरम् इदं यत् असिद्धकाण्डे पूर्वसूत्रं प्रति परसूत्रम् असिद्धम् अस्ति। परसूत्रेण कृतं कार्यम् पूर्वसूत्रदृष्ट्या नास्ति एव। अतः असिद्धकाण्डे येन क्रमेण सूत्राणि अष्टाध्याय्याम् उपात्तानि तेन क्रमेण तेषां प्रवृत्तिः भवति। अतः सत् चित् इति स्थिते सर्वादौ असिद्धकाण्डे झलां जशोऽन्ते (८.२.३९) इति सूत्रं प्रवर्तते। तेन तकारस्य जश् दकारः भवति। तदा सद् चित् इति स्थितिः भवति। अत्रापि आपाततः स्तोः श्चुना श्चुः (८.४.३९) इति किञ्च खरि च (८.४.५४) इति अनयोः युगपत् प्राप्तिः अस्ति। परन्तु स्तोः श्चुना श्चुः (८.४.३९) इति सूत्रम् असिद्धकाण्डे पूर्वम् अस्ति, खरि च (८.४.५४) इति परम् अस्ति। अतः पूर्वसूत्रस्य स्तोः श्चुना श्चुः (८.४.३९) इत्यस्य प्रवृत्तिः आदौ भवति। तेन स्तोः दकारस्य श्चुः जकारः भवति। तदा सज् चित् इति स्थितिः उपजायते। अत्र पदान्ते झल् जकारः अस्ति। अतः पुनः झलां जशोऽन्ते (८.२.३९) प्रवर्तताम् इति न चिन्तनीयम्। यतो हि झलां जशोऽन्ते (८.२.३९) इति सूत्रं प्रति स्तोः श्चुना श्चुः (८.४.३९) इति सूत्रम् असिद्धम्। अतः झलां जशोऽन्ते (८.२.३९) इति सूत्रदृष्ट्या तत्र जकारः नास्ति एव। तत्र दकारः एव अस्ति। अतः झलां जशोऽन्ते (८.२.३९) इति सूत्रं पुनः न प्रवृत्तिम् अर्हति। अन्ते च खरि च (८.४.५४) सूत्रदृष्ट्या स्तोः श्चुना श्चुः (८.४.३९) इति सूत्रं सिद्धम् अस्ति। अतः खरि च (८.४.५४) प्रवर्तते। तेन जकारस्य स्थाने खर् चकारः विधीयते। अतः सच्चित् इति रूपं निष्पद्यते।

## [८.८] शात्॥ (८.४.४३)

**सूत्रार्थः** - शात् परस्य तवर्गस्य चवर्गो न।

**सूत्रव्याख्या** - निषेधसूत्रमिदम्। अस्मिन् शात् इति एकमेव पञ्चम्येकवचनान्तं पदमस्ति। तोः षि इति सूत्रात् तोः इति षष्ठ्यन्तम् पदमनुवर्तते। न पदान्ताट्टोरनाम् इति सूत्रात् न इत्यव्ययपदमनुवर्तते। स्तोः श्चुना श्चुः इत्यस्मात् सूत्रात् चुः इति प्रथमान्तं पदमनुवर्तते। पदयोजना - शात् तोः चुः न। सूत्रार्थो भवति - शात् परस्य तवर्गस्य चवर्गो न।

**उदाहरणम्** - विश्नः। प्रश्नः।

**सूत्रार्थसमन्वयः** - विच्छ्-धातोः नङ्-प्रत्यययोगेन विच्छ्+न इति जाते छकारस्य शकारे कृते विश् न इति स्थितिः जायते। तदा स्तोः श्चुना श्चुः इति सूत्रेण नकारस्य ञकारे प्राप्ते शकारात् परस्य तवर्गस्य सत्त्वात् शात् इति सूत्रेण निषेधः भवति। तेन विश्नः इति रूपं निष्पद्यते। गतिः प्रवेशः वा तदर्थः।

प्रच्छ्-धातोः नङ्-प्रत्यययोगे प्रच्छ्+न इति स्थिते छकारस्य शकारे कृते (छकारस्य अभावे तुकः चकारः अपि न तिष्ठति।) प्रक्रियया प्रश् न इति स्थितिः भवति। तदा स्तोः श्चुना श्चुः इति सूत्रेण नकारस्य ञकारे प्राप्ते शकारात् परस्य तवर्गस्य सत्त्वात् शात् इति सूत्रेण निषेधः भवति। तेन प्रश्नः इति रूपं निष्पद्यते।



## पाठगतप्रश्नाः-१

१. ससजुषो रुः इति सूत्रस्यार्थं लिखत।

२. खरवसानयोर्विसर्जनीयः इति सूत्रे कयोः तदन्तविधिः भवति।

३. अवसाने रेफस्य विसर्गः केन सूत्रेण भवति।

४. कदा विसर्गस्य विसर्गः विकल्पेन भवति केन च सूत्रेण।

५. स्तोः श्चुना श्चुः इति सूत्रे कयोः यथासंख्यमस्ति।

६. स्तोः श्चुना श्चुः इति सूत्रे कयोः यथासंख्यन्नास्ति।

७. सत् चित् इति स्थिते प्रथममेव स्तोः श्चुना श्चुः सूत्रं प्रवर्तेत न वा इति उपपादयत।

८. तोः चुना योगे चुत्वं क्व न।

९. प्रश्नः इत्यत्र स्तोः श्चुना योगेऽपि श्चुत्वं कुतो न।

१०. रामस् चेष्टते इत्यतः परं प्रथमं किं सूत्रं प्रवर्तेत।

१) ससजुषो रुः  २) खरवसानयोर्विसर्जनीयः

३) खरि च  ४) झलां जशोऽन्ते

११. रामस् चेष्टते इत्यतः क्रमेण एतानि कार्याणि भवन्ति चेत् रामश्चेष्टते इति रूपं निष्पद्यते।

१) रुत्वम् - विसर्जनीयः - सः - श्चुत्वम्



२) विसर्जनीयः - रुत्वम् - सः - श्चुत्वम्

३) श्चुत्वम् - रुत्वम् - सः - विसर्जनीयः

४) ष्टुत्वम् - श्चुत्वम् - रुत्वम् - जश्त्वम्

१२. झलां जशोऽन्ते इत्यत्र कस्य अन्ते, कस्य किं भवति।

१) झलाम् अन्ते पदस्य जश् भवति।

२) पदस्य अन्ते जशः झल् भवति।

३) जशः अन्ते स्तोः झल् भवति।

४) पदस्य अन्ते झलः जश् भवति।

१३. वणिज् छात्रः इति स्थिते प्रथमं किं सूत्रं प्रवर्तेत।

१) चोः कुः  २) खरि च  ३) झलां जशोऽन्ते  ४) वा पदान्तस्य

## [ ८.९] ष्टुना ष्टुः॥ (८.४.४०)

**सूत्रार्थः** - सकारतवर्गयोः षकारटवर्गाभ्यां योगे षकारटवर्गौ स्तः।

**सूत्रव्याख्या** - विधिसूत्रमिदम्। अस्मिन् पदद्वयम् अस्ति। ष् च टुः च ष्टुः, तेन ष्टुना इति द्वन्द्वसमासः। ष् च टुः च इति ष्टुः इति द्वन्द्वसमासः, सौत्रं पुंस्त्वम्। स्तोः श्चुना श्चुः इति सूत्रात् स्तोः इति षष्ठ्यन्तं पदमनुवर्तते। स् च तुः च स्तुः, तस्य स्तोः इति द्वन्द्वसमासः। पदयोजना - स्तोः ष्टुना ष्टुः। सूत्रार्थो भवति - सकारतवर्गयोः षकारटवर्गाभ्यां योगे षकारटवर्गौ स्तः।

तवर्गस्य षकारेण योगः भवति चेत् ष्टुना ष्टुः इति सूत्रेण प्राप्तं ष्टुत्वं तोः षि इति सूत्रेण निषिध्यते। तवर्गस्य षकारेण योगे सति ष्टुत्वं तदा एव प्राप्तुं शक्नोति यदि स्तोः ष्टुना योगविषये यथासंख्यम् नास्ति। अर्थात् सकारतवर्गयोः षकारटवर्गाभ्यां यथासम्भवम् योगः भवति, तत्र यथासंख्यं नास्ति इति तोः षि इति सूत्रारम्भात् ज्ञाप्यते पाणिनिमुनिना।

**उदाहरणम्** - देवषडाननः।

**सूत्रार्थसमन्वयः** - देवशब्दात् सुप्रत्यययोगेन देवस् षडाननः इति स्थितिः उद्भवति। तत्र ससजुषो रुः इति सूत्रेण रुत्वं भवति। तेन देवर् षडाननः इति जायते। ततः खरवसानयोर्विसर्जनीयः इति सूत्रेण विसर्गे कृते देवः षडाननः इति जायते।

देवः षडाननः इति स्थिते अत्र पदान्तः विसर्गः अस्ति। तस्मात् परं शर् षकारः अस्ति। विसर्जनीयस्य सः इति सूत्रेण नित्यं सकारे प्राप्ते वा शरि इति विसर्गस्य विकल्पेन विसर्गः भवति। तेन देवः षडाननः इति सिद्धिः भवति।

विसर्गाभावपक्षे तु देवः षडाननः इत्यत्र विसर्जनीयस्य सः इति उत्सर्गसूत्रेण सकारः भवति। तेन देवस् षडाननः इति स्थितिः जायते। अत्र स्तोः सकारस्य ष्टुना षकारेण योगः अस्ति। अतः ष्टुना ष्टुः इति सूत्रेण सकारस्य षकारे कृते देवष्षडाननः इति साधु रूपं निष्पद्यते।



गीतायाष्टीका। गीतायास् टीका इति स्थिते ससजुषो रुः इति सूत्रेण रुत्वे गीतायार् टीका इति स्थिते खरवसानयोर्विसर्जनीयः इति सूत्रेण रेफस्य विसर्गे गीतायाः टीका इति स्थितिः जायते। ततः विसर्जनीयस्य सः इति सूत्रेण विसर्गस्य सकारे कृते गीतायास् टीका इति जायते। तत्र स्तोः सकारस्य ष्टुना टकारेण योगः अस्ति। अतः ष्टुना ष्टुः इति सूत्रेण सकारस्य यथासंख्यमनुदेशः समानाम् इति परिभाषाबलेन षकारे कृते गीतायाष्टीका इति साधु रूपं निष्पद्यते।

स्तोः ष्टुना योगः इत्यत्र यथासंख्यम् इत्यस्य प्रयोजनं नास्तीति स्पष्टीकरणाय एव इदमुदाहरणमत्र उपन्यस्तम्। स्तोः मध्ये सकारः प्रथमः वर्णः, ष्टुना इत्यत्र टकारः द्वितीयः वर्णः। तथापि ष्टुना ष्टुः इति सूत्रं प्रवर्तते। अतः योगविषये यथासंख्यं नास्तीति अवधेयम्।

## [८.१०] न पदान्ताट्टोरनाम्॥ (८.४.४१)

**सूत्रार्थः** - पदान्तात् टवर्गात् परस्य नामवयवभिन्नस्य स्तोः ष्टुः न।

**सूत्रव्याख्या** - निषेधसूत्रमिदम्। अस्मिन् सूत्रे चत्वारि पदानि सन्ति। न पदान्तात् टोः अनाम् इति सूत्रे उपात्तानां पदानां सन्धेः विच्छेदः। न इति अव्ययपदम्। पदस्य अन्तः पदान्तः, तस्मात् पदान्तात् इति षष्ठीतत्पुरुषः समासः। टोः इति टुशब्दस्य पञ्चम्येकवचनम्। अनाम् इति यद्यपि प्रथमैकवचनम् इव भाति तथापि तत् अनाम् इति प्रातिपदिकस्य षष्ठ्यन्तम् पदम्। परन्तु तत्र षष्ठी लुप्ता। अतः लुप्तषष्ठीकम् पदमिति उच्यते। अस्य च पदस्य नामावयवभिन्नस्य इत्यर्थः। अर्थात् नाम् इत्यस्य यः अवयवः नकारः, तद्भिन्नस्य इति यावत्। स्तोः श्चुना श्चुः इति सूत्रात् स्तोः इति षष्ठ्यन्तं पदमनुवर्तते। स् च तुः स्तुः, तस्य स्तोः इति द्वन्द्वसमासः। ष्टुना ष्टुः इति सूत्रात् ष्टुः इति प्रथमान्तं पदम् अनुवर्तते। ष् च टुः च ष्टुः इति द्वन्द्वसमासः। पदयोजना - न पदान्तात् टोः अनाम् स्तोः ष्टुः। सूत्रार्थो भवति - पदान्तात् टवर्गात् परस्य नामवयवभिन्नस्य स्तोः ष्टुः न।

**उदाहरणम्** - षट् सन्तः।

**सूत्रार्थसमन्वयः** - षष् इति प्रातिपदिकस्य षड् इति प्रथमान्तं रूपम्। षड् सन्तः इति स्थिते स्तोः सकारस्य ष्टुना डकारेण सह योगः अस्ति। तत्र ष्टुना ष्टुः इति सूत्रेण सकारस्य ष्टुत्वम् षकारः प्राप्तः। परन्तु अत्र पदान्तः टवर्गः डकारः अस्ति। ततः परं स्तुः सकारः अस्ति। अत एव न पदान्ताट्टोरनाम् इति सूत्रेण निषेधः भवति। षकारः न भवति। ततः परं झलः डकारात् परं खर् सकारः अस्ति। अतः खरि च इति सूत्रेण डकारस्य स्थाने स्थानतः आन्तर्याद् टकारः भवति। तदा षट् सन्तः इति साधु रूपं निष्पद्यते।

### ८.१०.१) अनाम्नवति-नगरीणामिति वाच्यम्। (वार्तिकम्)

**वार्तिकार्थः** - न पदान्ताट्टोरनाम् इति सूत्रेण कृतः निषेधः नाम् इति शब्दावयवं विहाय अन्यत्र भवति। स्तोः ष्टुत्वस्य निषेधः नाम् इत्यत्र यथा न भवति तथा नवति नगरी इति शब्दानाम् अपि निषेधः न भवतु इति। अर्थात् ष्टुना ष्टुः इति सूत्रेण नाम् नवति नगरी एषां त्रयाणामपि ष्टुत्वम् भवति इति वार्तिकस्य भावः।



**उदाहरणम् -** षण्णाम्। षण्णवति। षण्णगर्यः।

**वार्तिकार्थसमन्वयः -** षष् इति प्रातिपदिकस्य षष्ठीबहुवचनान्तं रूपं षण्णाम् इति। तत्र रूपसाधनक्रमे षष् आम् इति स्थिते नुडागमे कृते षष् नाम् इति जायते। तत्र झलां जशोऽन्ते इति सूत्रेण पदान्तस्य षकारस्य स्थानकृदान्तर्यात् डकारे कृते षड् नाम् इति स्थितिः उद्भवति। तत्राधुना स्तोः नकारस्य ष्टुना डकारेण योगः अस्ति। अतः ष्टुना ष्टुः इति सूत्रेण नकारस्य ष्टुत्वे यथासंख्यमनुदेशः समानाम् इति परिभाषया णकारे षड् णाम् इति जायते। प्रत्यये भाषायां नित्यम् इति वार्तिकम् अस्ति। तेन डकारस्य नित्यं णकारः भवति। एवञ्च षण्णाम् इति रूपं सिद्ध्यति।

न पदान्ताट्टोरनाम् इति सूत्रेण कृतः ष्टुत्वनिषेधः अनाम् इति पदवशात् नाम् इति अंशे न भवति। ष्टुत्वं च भवति।

षडधिका नवतिः इति विग्रहे, ततः समासे कृते षड् नवतिः इति स्थितिः उद्भवति। तत्र स्तोः नकारस्य ष्टुना डकारेण योगः अस्ति। अतः ष्टुना ष्टुः इति सूत्रेण नकारस्य ष्टुत्वे णकारे प्राप्ते न पदान्ताट्टोरनाम् इति सूत्रेण तस्य निषेधः प्राप्नोति। परन्तु अनाम्नवतिनगरीणामिति वाच्यम् इति वार्तिके नवतिशब्दस्य उपादानम् कृतम्। तेन ष्टुना ष्टुः इति सूत्रेण निर्बाधं ष्टुत्वं भवति। तदा षड् णवतिः इति स्थितिः जायते। ततश्च प्रक्रियया षण्णवतिः इति रूपं निष्पद्यते।

## [८.११] तोः षि॥ (८.४.४२)

**सूत्रार्थः -** तवर्गस्य षकारे परे न ष्टुत्वम्।

**सूत्रव्याख्या -** निषेधसूत्रमिदम्। अस्मिन् सूत्रे द्वे पदे स्तः। तोः (६/१), षि (७/१)। न पदान्ताट्टोरनाम् इति सूत्रात् न इति अव्ययपदमनुवर्तते। ष्टुना ष्टुः इति सूत्रात् ष्टुः इति प्रथमान्तम् पदम् अनुवर्तते। ष् च टुः च ष्टुः इति द्वन्द्वसमासः। पदयोजना - तोः ष्टुः न षि। सूत्रार्थो भवति - तवर्गस्य षकारे परे न ष्टुत्वम्। अर्थात् यदि तवर्गात् परं षकारः अस्ति तर्हि ष्टुना ष्टुः इति सूत्रेण प्राप्तं ष्टुत्वं न भवति।

**उदाहरणम् -** सन् षष्ठः।

**सूत्रार्थसमन्वयः -** अस्-धातोः शतृप्रत्यययोगे पुंलिङ्गे प्रथमैकवचनम् सन्। सन् षष्ठः इति स्थिते स्तोः नकारस्य ष्टुना षकारेण योगः अस्ति। अतः ष्टुना ष्टुः इति सूत्रेण अत्र स्तोः नकारस्य ष्टुत्वं णकारः प्राप्नोति। परन्तु तोः षि इति प्रकृतसूत्रेण तस्य निषेधो भवति। किञ्च सन् षष्ठः इत्येव रूपं साधु इति सिद्ध्यति।

**अपवादः -** ष्टुना ष्टुः (८.४.४१) इति तोः षि (८.४.४३) इति इदं सूत्रद्वयम् असिद्धकाण्डे अस्ति। किञ्च तोः षि इति सूत्रं ष्टुना ष्टुः (८.४.४१) इति सूत्रात् परम् अस्ति। अतः ष्टुना ष्टुः (८.४.४१) इति सूत्रं प्रति तोः षि (८.४.४३) इति सूत्रम् पूर्वत्रासिद्धम् (८.२.१) इति सूत्रेण असिद्धम् अस्ति। तोः षि (८.४.४३) इत्यनेन निषेधे क्रियमाणे अपि ष्टुना ष्टुः (८.४.४१) इति सूत्रम् प्रवृत्तिम् अर्हति। यदि प्रवर्तेत तर्हि तोः षि (८.४.४३) इति सूत्रं व्यर्थं भवेत्। किन्तु पाणिनेः न किमपि सूत्रं व्यर्थम्। अतः

वचनप्रामाण्यात् ष्टुना ष्टुः (८.४.४१) इत्यस्य तोः षि (८.४.४३) इति सूत्रम् अपवादः भवति। अपवादः च असिद्धः न भवति।



## पाठगतप्रश्नाः-२

१४. ष्टुना ष्टुः इति सूत्रस्यार्थं लिखत।

१५. ष्टुना ष्टुः इति सूत्रे कयोः यथासंख्यमस्ति।

१६. ष्टुना ष्टुः इति सूत्रे कयोः यथासंख्यन्नास्ति।

१७. कदा स्तोः ष्टुः न।

१८. षण्णाम् इत्यत्र पदान्तात् टवर्गात् परस्य स्तोः ष्टुत्वं निषेधसत्त्वेऽपि कथम्।

१९. सन् षष्ठः इत्यत्र स्तोः ष्टुना योगेऽपि ष्टुत्वं कुतो न।

२०. ष्टुना ष्टुः इत्यस्य निषेधसूत्रं किम्।

१) तोः षि २) शात् ३) खरि च ४) झलां जशोऽन्ते

२१. एषु किं निषेधसूत्रं नास्ति।

१) तोः षि २) शात् ३) न पदान्ताट्टोरनाम् ४) खरि च

---

## [ ८.१२] यरोऽनुनासिकेऽनुनासिको वा॥ (८.४.४४)

**सूत्रार्थः** - पदान्तस्य यरः अनुनासिके परे अनुनासिकः वा भवति।

**सूत्रव्याख्या** - विधिसूत्रमिदम्। अस्मिन् सूत्रे चत्वारि पदानि सन्ति। यरः अनुनासिके अनुनासिकः वा इति सूत्रगतपदच्छेदः। यरः (६/१), अनुनासिके (७/१), अनुनासिकः (१/१), वा इत्यव्ययपदम्। न पदान्ताट्टोरनाम् इति सूत्रात् पदान्ताद् इति पञ्चम्यन्तं पदमनुवर्तते। तच्च पदान्तस्य इति षष्ठ्यन्ततया विपरिणमते। तदा पदयोजना भवति - यरः पदान्तस्य अनुनासिके अनुनासिकः वा। सूत्रार्थो भवति - पदान्तस्य यरः अनुनासिके परे अनुनासिकः वा भवति।

**विवृतिः** - अनुनासिके परे यरः स्थाने अनुनासिकः भवति। स्थानी यर् आदेशः च अनुनासिकः। ननु तत्र अनुनासिकाः के सन्ति। रेफोष्मणां सवर्णा न सन्ति इति वचनम्, अर्थात् रेफस्य श् ष् स् ह् इत्येषां च सवर्णः नास्ति, रेफः श् ष् स् ह् वा अनुनासिकाः न भवन्ति। य् यँ व् वँ ल् लँ इति यवलानाम् अनुनासिकाः सन्ति। परन्तु कस्यापि पदस्य अन्ते यवलाः न भवन्ति। अतः तेषाम् स्थाने तेषामेव अनुनासिकः न भवति। सर्वेषामपि स्वराणाम् अनुनासिकाः सन्ति। इत्थम् केवलम् सर्वे स्वराः यँ वँ लँ ञ् म् ङ् ण् न् एते एव अनुनासिकाः सन्ति। तेषु कतमः भवेद् इति स्थानेऽन्तरतमः इति परिभाषया निर्णेयम्। चवर्गं विहाय वर्गाणां पञ्चमे वर्णे परे, पदान्ते वर्तमानस्य वर्गाणां प्रथमस्य तृतीयस्य च वर्णस्य स्थाने तद्वर्णस्य तृतीयः पञ्चमो वा वर्णो भवतीति निर्गलितः अर्थः बोध्यः।



**उदाहरणम् -** एतन्मुरारिः एतद्मुरारिः।

**सूत्रार्थसमन्वयः -** एतस्य मुरारिः इति षष्ठीतत्पुरुषः समासः। अथवा एष मुरारिः इति कर्मधारयसमासः। समासे कृते एतद् मुरारिः इति स्थितिः जायते। एतद् इति दकारान्तं सर्वनाम अस्ति। समासे कृते समस्यमानपदानां विभक्तीनां लुक् भवति। तथापि प्रत्ययलोपे प्रत्ययलक्षणम् इति परिभाषया प्रत्ययलक्षणं कृत्वा एतद् इति सुबन्तमस्ति। अतः सुप्तिङन्तं पदम् इत्यनेन तस्य पदसंज्ञा भवति। अतः एतद् इति पदस्य अन्ते विद्यमानः यर् दकारः अस्ति। ततः परम् मुरारिशब्दस्य मकारः अनुनासिकः अस्ति। अतः अनुनासिके परे यरः दकारस्य स्थाने अनुनासिकः विधीयते। तत्र अचः यँ वँ लँ ञ् म् ङ् ण् न् एते अनुनासिकाः उपलब्धाः। तेषु स्थानेऽन्तरतमः इति परिभाषया दकारेण अन्तरतमः आदेशः कर्तव्यः। अतः अत्र आन्तरतम्यपरीक्षा कर्तव्या। सा अत्र प्रदर्श्यते।

**आन्तरतम्यपरीक्षा -**

**प्रमाणकृदान्तर्यमस्ति न वा -** प्रमाणमत्र उच्चारणकालः। दकारः अर्धमात्रिकः, आदेशेषु एकाधिकाः अर्धमात्रिकाः। अतः कश्चिदेकः अपि प्रमाणतः अन्तरतमः नास्ति।

**अर्थकृदान्तर्यमस्ति न वा -** वर्णानां न कोऽपि अर्थः। समुदायो ह्यर्थवान् तस्यैकदेशोऽनर्थकः इति न्यायः। अतः अर्थतः आन्तर्यं न विचार्यते।

**गुणकृदान्तर्यमस्ति न वा -** गुणः अत्र बाह्ययत्नः। दकारस्य बाह्ययत्नाः संवारनादघोषाल्पप्राणाः। आदेशेषु अचं विहाय समेषाम् बाह्ययत्नाः संवारनादघोषाल्पप्राणाः। अतः कश्चिदेकः अपि गुणतः अन्तरतमः नास्ति।

**स्थानकृदान्तर्यमस्ति न वा -** दकारस्य उच्चारणस्थानं दन्ताः। आदेशेषु ऌतुलसानां दन्ताः इति वचनात् ऌँ लँ न् एषाम् उच्चारणस्थानमपि दन्ता एव। एषु नकार एव अन्तरतमः। अतः दकारस्य स्थाने नकारः भवेत्। तेन एतन्मुरारिः इति रूपं सिद्ध्यति।

## ८.१२.१) प्रत्यये भाषायां नित्यम्। (वार्तिकम्)

**वार्तिकार्थः -** पाणिनिमुनिः लौकिकसंस्कृतभाषाम् हि भाषा इति व्यपदिशति। लौकिकसंस्कृतभाषायाम् अनुनासिकादि-प्रत्यये परे पदान्तस्य यरः नित्यम् अनुनासिकः भवति। अत्र यः परत्वेन गृहीतः प्रत्ययः तस्य आद्यवर्णः अनुनासिकः अस्ति चेत् इदं वार्तिकं प्रवर्तते।

**उदाहरणम् -** तन्मात्रम्। चिन्मयम्।

**समन्वयः -** तत् प्रमाणं यस्य इति विग्रहः। तद् इति दकारन्तात् सर्वनाम्नः परम् मात्रच्-तद्धितप्रत्यये विहिते तद् मात्रम् इति स्थितिः उद्भवति। तत्र मात्रच् इति अनुनासिकादिप्रत्ययः। तद्धितप्रत्ययः सुबन्ताद् एव भवति। अतः तद् इति सुबन्तम् अस्ति। तत्र सुपः लुक् भवति। तथापि प्रत्ययलोपे प्रत्ययलक्षणम् इति परिभाषया प्रत्ययलक्षणं कृत्वा तद् इत्यस्य पदसंज्ञा सिद्ध्यति। अतः अत्र तद् इत्यस्य दकारः पदान्तः अस्ति। दकारस्य स्थाने यरोऽनुनासिकेऽनुनासिको वा इति सूत्रेण विकल्पेन



अनुनासिके प्राप्ते अनेन वार्तिकेन नित्यम् अनुनासिकः विधीयते। तदा दकारस्य स्थाने स्थानेऽन्तरतमः इति परिभाषया दकारेण अन्तरतमः नकारः एव आदेशः भवति। तेन तन्मात्रम् इति साधु रूपं निष्पद्यते।

चिद् एव इति विग्रहः। चित् इति सुबन्तपदात् परं स्वार्थे मयट् तद्धितप्रत्ययः विधीयते। तदा चित् मय इति स्थितिः उद्भवति। पूर्ववदेव चित् इत्यस्य पदसंज्ञा भवति। एवञ्च झलां जशोऽन्ते इति परिभाषया तकारस्य स्थाने स्थानत आन्तर्याद् दकारः भवति। तदा चिद् मय इति जायते। तदा दकारस्य स्थाने यरोऽनुनासिकेऽनुनासिको वा इति सूत्रेण विकल्पेन अनुनासिके प्राप्ते अनेन वार्तिकेन नित्यम् अनुनासिकः विधीयते। तदा दकारस्य स्थाने स्थानेऽन्तरतमः इति परिभाषया दकारेण अन्तरतमः नकारः एव आदेशः भवति। तेन तन्मय इति जाते प्रक्रियया तन्मयम् इति साधु रूपं निष्पद्यते।

## [ ८.१३] तोर्लि॥ (८.४.५९)

**सूत्रार्थः -** लकारे परे तवर्गस्य परसवर्णः भवति।

**सूत्रव्याख्या -** विधिसूत्रमिदम्। अस्मिन् सूत्रे पदद्वयमस्ति। तोः लि इति सूत्रे उपात्तानां पदानां सन्धिच्छेदः। तोः (६/१), लि (७/१)। अनुस्वारस्य ययि परसवर्णः इति सूत्रात् परसवर्णः इति प्रथमान्तं पदमनुवर्तते। परस्य सवर्णः परसवर्णः इति षष्ठीतत्पुरुषः समासः। सूत्रार्थो भवति - लकारे परे तवर्गस्य परसवर्णः भवति। अत्र तवर्गस्य स्थाने य आदेशः विधीयमानः स परस्य लकारस्य सवर्णः स्याद्। लकारस्य ल् लँ् इति द्वावेव सवर्णौ।

**उदाहरणम् -** तल्लयः। विद्वाल्ँलिखति।

**सूत्रार्थसमन्वयः -** तस्मिन् लयः इति सप्तमीतत्पुरुषः। तस्य लयः इति षष्ठीतत्पुरुषः वा। समासे कृते तद् लयः इति स्थितिः उद्भवति। तवर्गाद् दकारात् परः लकारः अस्ति। अतः तोर्लि इति सूत्रेण दकारस्य स्थाने लकारस्य सवर्णः विधेयः अस्ति। स्थानी दकारः अननुनासिकः। स्थानेऽन्तरतमः इति परिभाषया अननुनासिकेन दकारेण अन्तरतमः अननुनासिकः लकार एव आदेशः स्यात्। तेन तल्लयः इति साधु रूपं निष्पद्यते।

विद्वान् लिखति इति वाक्यम्। वाक्ये संहितायाः विवक्षा अस्ति चेत् अत्र तोः नकारात् परं लिखति इति शब्दस्य लकारः अस्ति। अतः तोर्लि इति सूत्रेण नकारस्य स्थाने परस्य लकारस्य सवर्णः विधेयः अस्ति। स्थानी नकारः अनुनासिकः। अतः स्थानेऽन्तरतमः इति परिभाषया अनुनासिकेन नकारेण अन्तरतमः अनुनासिकः लँकार एव स्यात्। तेन विद्वाल्ँलिखति इति साधु रूपं निष्पद्यते।

**इदमत्रावधेयं** यत् विद्वाँल्लिखति विद्वाल्ँलिखति इति द्वयोः भेदः अस्ति। विद्वाँल्लिखति इति रूपे अनुनासिकः आकारः अस्ति न तु लकारः। विद्वाल्ँलिखति इति रूपे तु लँ् अनुनासिकः अस्ति। अतः इदमेव इष्टं रूपम्, न तु विद्वाँल्लिखति इति।





## पाठगतप्रश्नाः-३

२२. एतन्मुरारिः इत्यत्र दकारस्य नकारः केन सूत्रेण।

२३. तोर्लि इति सूत्रस्यार्थं लिखत।

२४. चित् मयम् इति स्थिते सन्धौ कति रूपाणि भवन्ति।

२५. प्रत्यये भाषायां नित्यम् इति सूत्रस्यार्थं लिखत।

२६. तोर्लि इति सूत्रस्योदाहरणं लिखत।

---

## [ ८.१४] उदः स्थास्तम्भोः पूर्वस्य॥ (८.४.६०)

**सूत्रार्थः** - उदः परयोः स्था-स्तम्भोः पूर्वसवर्णः भवति।

**सूत्रव्याख्या** - विधिसूत्रमिदम्। अस्मिन् सूत्रे त्रीणि पदानि सन्ति। उदः इति उद् इति उपसर्गस्य पञ्चम्येकवचनान्तं पदम्। स्थास्तम्भोः इति षष्ठीद्विवचनम्। पूर्वस्य इति षष्ठ्येकवचनम्। अनुस्वारस्य ययि परसवर्णः इति सूत्रात् सवर्णः इति प्रथमान्तं पदमनुवर्तते। पदयोजना - उदः स्थास्तम्भोः पूर्वस्य सवर्णः।

**सूत्रार्थनिष्पादनम्** - उदः इत्यत्र या पञ्चमी सा दिग्योगपञ्चमी इति कथ्यते। तस्यां सत्याम् तस्मादित्युत्तरस्य इति परिभाषासहकारेण उद् इत्यस्माद् अव्यवहितपरस्य कार्यं भवति। उदः इति पञ्चमीनिर्देशेन कार्यं विहितमस्ति। किञ्च स्थास्तम्भोः इति षष्ठी अस्ति। अतः उदः परस्य कार्यं विहितमिति स्पष्टम्। परस्य सम्पूर्णस्य स्था अथवा स्तम्भ् इति अनयोः स्थाने कार्यं प्राप्तम्। अथवा अलोऽन्त्यस्य इति परिभाषया स्थास्तम्भोः अन्त्यस्य अलः आदेशः प्राप्तः। तम् अपवादत्वेन प्रबाध्य आदेः परस्य इति परिभाषासहकारेण अर्थः भवति यत् स्था स्तम्भ् इत्यनयोः आद्यस्य अलः स्थाने आदेशः भवति।

कः आदेशः इत्यस्ति प्रश्नः। तत्रोच्यते पूर्वस्य सवर्णः आदेशः स्यात्। पूर्वं दकारः अस्ति। तस्य सवर्णः आदेशः स्यात्। दकारस्य त् थ् द् ध् न् इति पञ्च सवर्णाः सन्ति। तेषु कतमः स्यात्। तदा स्थानेऽन्तरतमः इति परिभाषया स्था स्तम्भ् इति अनयोः आदिवर्णः सकारः, तेन अन्तरतमः आदेशः स्यात्। अत एव आन्तरतम्यपरीक्षा इष्टा। सूत्रार्थो भवति - उदः परयोः स्था-स्तम्भोः आदेः पूर्वसवर्णः भवति। अत्र आन्तरतम्यपरीक्षा कर्तव्या। सा अत्र प्रदर्श्यते।

**आन्तरतम्यपरीक्षा -**

**स्थानकृदान्तर्यमस्ति न वा -** सकारस्य उच्चारणस्थानं दन्ताः। आदेशेषु लृतुलसानां दन्ताः इति वचनात् दकारस्य सवर्णानां त् थ् द् ध् न् एषाम् उच्चारणस्थानमपि दन्ता एव। अतः सकारेण सदृशतमः तेषु कश्चिदेकः न लभ्यते। सर्वे समानाः।



**प्रमाणकृदान्तर्यमस्ति न वा** - प्रमाणमत्र उच्चारणकालः। सकारः अर्धमात्रिकः, आदेशेषु त् थ् द् ध् न् एते समेऽपि अर्धमात्रिकाः। अतः कश्चिदेकः अपि प्रमाणतः अन्तरतमः नास्ति।

**अर्थकृदान्तर्यमस्ति न वा** - वर्णानां न कोऽपि अर्थः। समुदायो ह्यर्थवान् तस्यैकदेशोऽनर्थकः इति न्यायः। अतः अर्थतः आन्तर्यं न विचार्यते।

**गुणकृदान्तर्यमस्ति न वा** - गुणः अत्र बाह्ययत्नः।

| **वर्णः** | **बाह्ययत्नः** | | | |
|---|---|---|---|---|
| **स्** | **विवारः** | **श्वासः** | **अघोषः** | **महाप्राणः** |
| त् | विवारः | श्वासः | अघोषः | अल्पप्राणः |
| **थ्** | **विवारः** | **श्वासः** | **अघोषः** | **महाप्राणः** |
| द् | संवारः | नादः | घोषः | अल्पप्राणः |
| ध् | संवारः | नादः | घोषः | महाप्राणः |
| न् | संवारः | नादः | घोषः | अल्पप्राणः |

अतः सकारेण सदृशः बाह्यप्रयत्नः केवलम् थकारस्य एव अस्ति। अतः सकारस्य स्थाने दकारस्य सवर्णः थकार एव आदेशः भवितुमर्हति।

अतः उद् स्थानम् , उद् स्तम्भनम् इत्यत्र सकारस्य स्थाने थकारे उद् थ्थानम् , उद् थ्तम्भनम् इति स्थितिः जायते। तदा -

## [ ८.१५] झरो झरि सवर्णे॥ (८.४.६४)

**सूत्रार्थः** - हलः परस्य झरः वा लोपः सवर्णे झरि परे।

**सूत्रव्याख्या** - विधिसूत्रमिदम्। अस्मिन् सूत्रे त्रीणि पदानि सन्ति। झरः झरि सवर्णे इति सूत्रगतपदच्छेदः। झरः (६/१), झरि (७/१), सवर्णे (७/१)। हलो यमां यमि लोपः इति सूत्रात् हलः इति पञ्चम्यन्तं पदं , लोपः इति प्रथमान्तं च पदमनुवर्तते। झयो होऽन्यतरस्याम् इति सूत्रात् अन्यतरस्यामिति अव्ययपदमनुवर्तते। अन्यतरस्याम् इति अव्ययस्य विभाषा विकल्पः वा अर्थः। तदा पदयोजना - हलः झरः झरि सवर्णे लोपः अन्यतरस्याम्। सूत्रार्थे भवति - हलः परस्य झरः वा लोपः सवर्णे झरि परे। अर्थात् क्रमेण हल्+झर्+सवर्णझर् इति स्थितिः उद्भवति चेत् पूर्वझरः लोपः विकल्पेन भवति।

**उदाहरणम्** - उद् थ् थानम् , उद् थ् तम्भनम्। अत्र हल् दकारः अस्ति। ततः परम् थकारः झर् अस्ति। थकारात् परम् थकारः तकारः च सवर्णः झर् अस्ति। अतः झरो झरि सवर्णे इति सूत्रेण दकारात् परस्य थकारस्य विकल्पेन लोपः भवति। तदा -

लोपपक्षे लोपाभावपक्षे



उद् थानम् , उद् थ् थानम्

उद् तम्भनम् उद् थ् तम्भनम्

इति स्थितिः जायते। तत्राधुना खरि च इति सूत्रेण दकारात् परम् खर् चतुर्षु रूपेषु वर्तते। अतः सर्वत्र दकारस्य स्थाने स्थानेऽन्तरतमः इति परिभाषया स्थानतः अन्तरतमः चर् तकारः एव भवति तदा -

| लोपपक्षे | लोपाभावपक्षे |
|---|---|
| उत् थानम् - उत्थानम् | उत् थ् थानम् - उत्थ्थानम् |
| उत् तम्भनम् - उत्तम्भनम् | उत् थ् तम्भनम् - उत्थ्तम्भनम् |

इत्थम् लोपपक्षे उत्थानम् उत्तम्भनम् इति रूपद्वयम् भवति। लोपाभावपक्षे च उत्थ्थानम् उत्थ्तम्भनम् एतद्रूपद्वयं भवति।

[**विस्तारः - (परीक्षायाः कृते नास्ति)** - उद् थानम् इत्यादिस्थिते लोपे लोपाभावे च या स्थितिः उद्भवति तत्र खरि च ( ८.४.५४) इति सूत्रदृष्ट्या लोपविधायकं झरो झरि सवर्णे (८.४.६४) इति अपि च थकारविधायकं उदः स्थास्तम्भोः पूर्वस्य (८.४.६०) इति सूत्रद्वयमपि असिद्धम्। अतः खरि च (८.४.५४) इति सूत्रं तु मूलं सकारं दृष्ट्वा एव दकारस्य तकारं करोति। तथापि रूपाणि तानि एव स्युः। भाष्यकारमते तु खरि च (८.४.५४) इति सूत्रस्य अष्टाध्याय्यां स्थानं परिवर्त्य शश्छोऽटि (८.४.६२) इति सूत्रादनन्तरम् स्थाप्यते। तदा तु उपरि कृतः लोपः किञ्च सकारस्य कृतः थकारः द्वौ अपि सिद्धौ स्याताम्। परन्तु अयं सर्वोऽपि विषयः बालोपयोगी नास्ति इति मत्त्वा तथा अस्मिन् ग्रन्थे न उपन्यस्यते। इयं चर्चा विशिष्टानां विशिष्टजिज्ञासाप्रशमनाय प्रदत्ता इति आस्तां तावत्।]

## [ ८.१६] झयो होऽन्यतरस्याम्॥ (८.४.६१)

**सूत्रार्थः** - झयः परस्य हस्य पूर्वसवर्णः वा भवति।

**सूत्रव्याख्या** - विधिसूत्रमिदम्। अस्मिन् सूत्रे त्रीणि पदानि सन्ति। झयः (५/१), हः (६/१), अन्यतरस्याम् इति विभाषार्थकम् अव्ययम्। उदः स्थास्तम्भोः पूर्वस्य (८.४.६०) इति सूत्रात् पूर्वस्य इति षष्ठ्यन्तं पदमनुवर्तते। अनुस्वारस्य ययि परसवर्णः इति सूत्रात् सवर्णः इति प्रथमान्तं पदमनुवर्तते। तदा पदयोजना भवति - झयः हः पूर्वस्य सवर्णः अन्यतरस्याम्। सूत्रार्थो भवति - झयः परस्य हस्य पूर्वसवर्णः वा भवति।

**उदाहरणम्** - वाग्घरिः। वाग्हरिः।

**सूत्रार्थसमन्वयः** - वाचि हरिः इति सप्तमीतत्पुरुषः। वाणीविषये पटुः वाक्पटुः इति तदर्थः। समासे कृते वाक् हरिः इति स्थितिः उद्भवति। वाक् इति प्रत्ययलक्षणेन पदमस्ति। अतः झलां जशोऽन्ते इति सूत्रेण ककारस्य स्थानेऽन्तरतमः इति परिभाषया स्थानतः आन्तर्याद् जश् गकारः भवति। तेन वाग्



हरिः इति जाते तत्र झय् गकारः अस्ति, ततः परं हकारः अस्ति। अत्र प्रकृतसूत्रेण हकारस्य स्थाने आदेशः कर्तव्यः अस्ति। कः आदेशः। पूर्वस्य सवर्णः। कः पूर्वः। गकारः। के तस्य सवर्णाः क ख ग घ ङ एते पञ्च। एकः स्थानी, आदेशाः पञ्च। अतः स्थान्यादेशसंख्यावैषम्यम् अस्ति। अतः एव स्थानेऽन्तरतमः इति परिभाषा सञ्चारणीया। तेन आन्तरतम्यपरीक्षा कर्तव्या।

**आन्तरतम्यपरीक्षा -**

**स्थानकृदान्तर्यमस्ति न वा -** स्थानिनः हकारस्य उच्चारणस्थानं कण्ठः। आदेशेषु अकुहविसर्जनीयानां कण्ठः इति वचनात् गकारस्य सवर्णानां क ख ग घ ङ एषाम् उच्चारणस्थानमपि कण्ठः एव। अतः हकारेण सदृशतमः तेषु कश्चिदेकः न लभ्यते। सर्वे आदेशाः समानाः।

[अत्र एकं लौकिकमुदाहरणम् विषयस्य सुबोधाय दीयते - रामः दश जनान् वदति यत् मम हस्ते पञ्च आम्रफलानि सन्ति। भवत्सु यस्य हस्ते मम फलैः सदृशतमानि फलान्ति सन्ति, तस्मै अहं पुरस्कारं दास्यामि।

तत्र प्रथमः प्रसङ्गः - तत्र तेषु प्रत्येकं जनानाम् हस्ते पञ्च फलानि सन्ति। परन्तु कस्यचित् एकम् आम्रफलम्, कस्यचिद् द्वे, कस्यचित् त्रीणि कस्यचित् पुनः चत्वारि इति। कस्यचित् एकस्य मन्दारस्य हस्ते पञ्च आम्रफलानि सन्ति। तदा कः सदृशतमः। तदा यस्य हस्ते पञ्च फलानि सन्ति स एव सदृशतमः। अतः पुरस्कारः मन्दाराय दीयते।

द्वितीयः प्रसङ्गः - तेषु प्रत्येकं जनानाम् हस्ते पञ्च फलानि सन्ति। किञ्च सर्वेषां हस्ते पञ्च बदरफलानि सन्ति। एकस्यापि हस्ते आम्रफलानि न सन्ति। तदा कः सदृशतमः। तदा सर्वे समानाः। न कश्चन एकः सदृशतमः। अतः पुरस्कारः न दीयते।

अतः एव यदि आदेशे विद्यमानाः सर्वेऽपि समानाः सन्ति तर्हि तेषु न कोऽपि अन्तरतमः।]

**प्रमाणकृदान्तर्यमस्ति न वा -** प्रमाणमत्र उच्चारणकालः। हकारः अर्धमात्रिकः, आदेशाः क ख ग घ ङ एते समेऽपि अर्धमात्रिकाः। अतः तेषु कश्चिदेकः अपि प्रमाणतः अन्तरतमः नास्ति।

**अर्थकृदान्तर्यमस्ति न वा -** वर्णानां न कोऽपि अर्थः। समुदायो ह्यर्थवान् तस्यैकदेशोऽनर्थकः इति न्यायः। अतः अर्थतः आन्तर्यं न विचार्यते।

**गुणकृदान्तर्यमस्ति न वा -** गुणः अत्र बाह्ययत्नः।

| | **वर्णः** | **बाह्ययत्नः** | | | |
|---|---|---|---|---|---|
| **स्थानी** | **ह** | **संवारः** | **नादः** | **घोषः** | **महाप्राणः** |
| | क | विवारः | श्वासः | अघोषः | अल्पप्राणः |
| | ख | विवारः | श्वासः | अघोषः | महाप्राणः |



| | वर्णः | बाह्ययत्नः | | | |
|---|---|---|---|---|---|
| आदेशाः | ग | संवारः | नादः | घोषः | अल्पप्राणः |
| | **घ** | **संवारः** | **नादः** | **घोषः** | **महाप्राणः** |
| | ङ | संवारः | नादः | घोषः | अल्पप्राणः |

अतः हकारेण सदृशः बाह्यप्रयत्नः केवलम् घकारस्य एव अस्ति। अतः हकारस्य स्थाने गकारस्य सवर्णः घकार एव आदेशः भवितुमर्हिति। तेन पूर्वसवर्णपक्षे वाग् घरिः - वाग्घरिः इति रूपं निष्पद्यते। पूर्वसवर्णस्य वैकल्पिकत्वात् पक्षे वाग्हरिः इति द्वितीयं रूपं निष्पद्यते।

## [ ८.१७] शश्छोऽटि॥ (८.४.६२)

**सूत्रार्थः** - झयः परस्य शस्य छः वा अटि।

**सूत्रव्याख्या** - विधिसूत्रमिदम्। अस्मिन् सूत्रे त्रीणि पदानि सन्ति। शः छः अटि इति सूत्रगतपदच्छेदः। शः (६/१), छः (१/१), अटि (७/१)। झयो होऽन्यतरस्याम् इति सूत्राद् झयः इति पञ्चम्येकवचनान्तम् , अन्यतरस्याम् इति अव्ययम् इति पदद्वयमनुवर्तते। तदा पदयोजना भवति - झयः शः छः अटि अन्यतरस्याम्। सूत्रस्यार्थो भवति - झयः परस्य शस्य छः वा अटि। अर्थात् यदि झय् + श + अट् इति स्थितिः भवेत् तर्हि शकारस्य स्थाने विकल्पेन छकारः भवतीति।

**उदाहरणम्** - तच्छिवः तच्शिवः।

**सूत्रार्थसमन्वयः** - सः शिवः इति विग्रहः अथवा तस्य शिवः इति वा विग्रहः। समासे कृते सुपां च लुकि तद् शिवः इति स्थितिः उद्भवति। अत्र झय् दकारः अस्ति, ततः परं शिवशब्दस्य आदिमवर्णः शकारः अस्ति। शकारात् परम् अट् इकारः अपि अस्ति। अतः अत्र शश्छोऽटि इति सूत्रं प्रवृत्तिम् अर्हति। परन्तु स्तोः दकारस्य श्चुना शकारेण योगः अस्ति। अतः स्तोः श्चुना श्चुः सूत्रमपि अत्र प्रसक्तम् भाति। किञ्च झल् दकारः अस्ति, ततः परं खर् शकारः अस्ति। अतः खरि च (८.४.५४) इति सूत्रमपि प्रवृत्तिम् अर्हति। त्रिषु सूत्रेषु युगपत् प्राप्तेषु वस्तुतः विप्रतिषेधे परं कार्यम् इति परिभाषया निर्णयः अन्यत्र क्रियते। परन्तु असिद्धकाण्डे अर्थात् त्रिपाद्याम् तन्न सम्भवति। त्रिपाद्याम् तु पूर्वं प्रति परशास्त्रम् असिद्धम्। अतः सति सम्भवे पूर्वसूत्रम् आदौ प्रवर्तते। तत्पश्चात् ततः परवर्ति सूत्रम् इति क्रमः। अतः स्तोः श्चुना श्चुः इति सूत्रेण स्तोः दकारस्य स्थानतः आन्तर्यात् श्चुत्वे जकारे तज् शिवः इति स्थितिः भवति। तदा झल् जकारः झशः शकारात् अव्यवहितपूर्वः अस्ति। अतः खरि च इति सूत्रेण झलः जकारस्य स्थाने स्थानत आन्तर्याद् चर्त्वे चकारे कृते तच् शिवः इति स्थितिः उद्भवति। अधुनात्र झय् चकारः अस्ति, ततः परं शकारः अस्ति, शकारात् परम् अट् इकारः अस्ति। अत एव शश्छोऽटि इति सूत्रेण शकारस्य विकल्पेन छकारे कृते छत्वपक्षे तच् छिवः - तच्छिवः इति छत्वाभावपक्षे च तच् शिवः - तच्शिवः इति रूपे निष्पद्येते।



## ८.१७.१) छत्वममीति वाच्यम्। (वार्तिकम्)

**वार्तिकार्थः** - शश्छोऽटि इति सूत्रे अटि इति यदुक्तं तद् विहाय अमि इति वक्तव्यम् इति वार्तिकार्थः। अर्थात् झयः परस्य शकारस्य विकल्पेन छत्वम् भवति अमि परे इति। अट् इति प्रत्याहारस्य ञमङणनम् इति सूत्रस्य मकारं यावत् परिधिः वर्धनीयः इति।

**उदाहरणम्** - तच्छ्लोकः। तच्श्लोकः।

सः श्लोकः - तच्छ्लोकः इति कर्मधारयसमासः। समासे कृते सुपां लुकि च तद् श्लोकः इति स्थितिः उद्भवति।

अत्र स्तोः श्चुना श्चुः (८.४.३९) इति, खरि च (८.४.५४) इति, शश्छोऽटि (८.४.६२) इति त्रीणि सूत्राणि युगपत् प्राप्तानि। एतानि असिद्धकाण्डे अर्थात् त्रिपाद्याम् सन्ति। त्रिपाद्याम् पूर्वं प्रति परशास्त्रम् असिद्धम्। अतः सति सम्भवे पूर्वसूत्रम् आदौ प्रवर्तते।

तदा स्तोः श्चुना श्चुः इति सूत्रेण स्तोः दकारस्य स्थानतः आन्तर्यात् श्चुत्वे जकारे तज् श्लोकः इति स्थितिः भवति। तदा झल् जकारः झशः शकारात् अव्यवहितपूर्वः अस्ति। अतः खरि च इति सूत्रेण झलः जकारस्य स्थाने स्थानत आन्तर्याद् चर्त्वे चकारे कृते तच् श्लोकः इति स्थितिः उद्भवति। अधुनात्र झय् चकारः अस्ति, ततः परं शकारः अस्ति, शकारात् परम् अट् नास्ति। अत एव शश्छोऽटि इति सूत्रेण अत्र छत्वं न सम्भवति। अत एव इदं वार्तिकं प्रणीतम् कात्यायनमुनिना। तत्र शकारात् परं लकारः अस्ति। स च अटि नास्ति, अमि अस्ति। अतः प्रकृतवार्तिकेन शकारस्य विकल्पेन छकारे कृते छत्वपक्षे तच् छ्लोकः - तच्छ्लोकः इति छत्वाभावपक्षे च तच् श्लोकः - तच्श्लोकः इति रूपे निष्पद्येते।



## पाठगतप्रश्नाः-४

२७. उदः स्थास्तम्भोः पूर्वस्य इति सूत्रस्यार्थं लिखत।

२८. झरो झरि सवर्णे इति सूत्रस्यार्थं लिखत।

२९. झयो होऽन्यतरस्याम् इति सूत्रस्योदाहरणं किम्।

३०. शश्छोऽटि इति सूत्रस्योदहरणं किम्।



## पाठसारः

इदं सन्धिप्रकरणम् असिद्धकाण्डे अवस्थितम्। अतः अत्र पूर्वं प्रति परं सूत्रम् असिद्धमस्ति। तेन कदा कस्य सूत्रस्य प्रवृत्तिः भवतीति निर्णयाय सूत्राणां पौर्वापर्यक्रमः अवश्यम् ज्ञातव्यः। तदर्थम् असिद्धकाण्डस्य अष्टाध्यायीक्रमेण कण्ठस्थीकरणं बहु व्युत्पत्तिवर्धकमस्ति।



व्याकरणस्य कार्यं हि साधुशब्दनिर्माणम्। तत्र प्रकृत्या सह प्रत्ययः योज्यते। सुप् तिङ् च प्रत्ययः योज्यते चेत् समुदायः पदसंज्ञकः भवति। पदस्य अन्ते सकारः बहुत्र लभ्यते। यथा सु जस् शस् ऐस् भिस् भ्यस् ङसि ङस् ओस् इति सुपि, तस् सिप् थस् वस् मस् थास् इति तिङि सकारान्ताः प्रत्ययाः सन्ति। अन्येऽपि केचित् एतेषां स्थाने आदेशाः भवन्ति तदा पदान्ते सकारः लभ्यते। अस्य पदान्ते सकारस्य ससजुषो रुः इति सूत्रेण रुत्वं भवति।

रुत्वात् परं यदि खर् अवसानं वा स्यात् तर्हि खरवसानयोः विसर्जनीयः इति सूत्रेण रेफस्य विसर्गः भवति। यदि विसर्गात् परं खय् स्यात् तर्हि विसर्गस्य सकारः भवति। यदि शर् स्यात् तर्हि विकल्पेन विसर्गः सकारो वा वा शरि इति सूत्रेण भवति।

सकारस्य तवर्गस्य च शकारेण चवर्गेण च यथासंभवं योगे सकारतवर्गयोः स्थाने श्चुत्वं स्तोः श्चुना श्चुः इति सूत्रेण भवति।

पदान्ते झल् अस्ति चेत् तस्य स्थाने जश्त्वं झलां जशोऽन्ते इति सूत्रेण विधीयते। खरि परे झलां चर्त्वं खरि च इति सूत्रेण विधीयते।

शात् परस्य तवर्गस्य चवर्गो न भवति इति शात् इति सूत्रस्यार्थः। उत्सर्गसूत्रं कृत्वा अपवादः निषेधः वा क्रियते इति पाणिनिसरणी। तत्रेदं शात् इति सूत्रं निषेधसूत्रम्।

सकारतवर्गयोः षकारटवर्गाभ्यां योगे षकारटवर्गौ विधीयेते ष्टुना ष्टुः इति सूत्रेण। परन्तु पदान्तात् टवर्गात् परस्य स्तोः ष्टुत्वं निषिध्यते न पदान्ताट्टोरनाम् इति सूत्रेण। एवञ्च तवर्गस्य षकारे परे ष्टुत्वं निषिध्यते तोः षि इति सूत्रेण।

पदान्तस्य यरः अनुनासिके परे अनुनासिकः विकल्पेन विधीयते यरोऽनुनासिकेऽनुनासिको वा इति सूत्रेण। लकारे परे तवर्गस्य परसवर्णः विधीयते तोर्लि इति सूत्रेण।

हलः परस्य झरः विकल्पेन लोपः सवर्णे झरि परे विधीयते झरो झरि सवर्णे इति सूत्रेण। झयः परस्य हस्य पूर्वसवर्णः विकल्पेन विधीयते झयो होऽन्यतरस्याम् इति सूत्रेण।

यदि झय् + श + अम् इति स्थितिः भवेत् तर्हि शकारस्य स्थाने विकल्पेन छकारः विधीयते शश्छोऽटि इति सूत्रेण।



## पाठान्तप्रश्नाः

अधः केचित् प्रश्नाः दीयन्ते। तेषाम् उत्तराणि प्रामुख्येन दीर्घाणि एव सन्ति। सूत्रव्याख्यानं रूपसाधनं च इति द्वौ भवतः व्याकरणस्य प्रश्नस्य मुख्यौ प्रकारौ। अच्सन्धिप्रकरणे योग्यतावर्धनांशे एकस्य सूत्रस्य व्याख्यानं सविस्तरं प्रदर्शितम् अस्ति। तद् दृष्ट्वा बुद्ध्वा च एतेषामपि सूत्राणां व्याख्यानं कर्तव्यम्।



झलां जश् झशि इति सूत्रे रूपसाधनं कथं कर्तव्यमिति रूपसाधनस्य नैके प्रकाराः सविस्तरं प्रदर्शिताः सन्ति। अतः तत् स्थलं दृष्ट्वा बुद्ध्वा च अन्येषामपि रूपाणां साधने प्रयासः निष्ठया विधेयः। प्रथमं लघु रूपं साधनीयम्। ततः परं क्रमशः विस्तारः कर्तव्यः।

१. ससजुषो रुः इति सूत्रं व्याख्यात।

२. स्तोः श्चुना श्चुः इति सूत्रं व्याख्यात।

३. झलां जशोऽन्ते इति सूत्रं व्याख्यात।

४. ष्टुना ष्टुः इति सूत्रं व्याख्यात।

५. यरोऽनुनासिकेऽनुनासिको वा इति सूत्रं व्याख्यात।

६. अत्र अधः प्रारम्भस्थितिः दीयते। किञ्च यद्रूपं साधनीयं तदपि दीयते। ततः प्रदत्तानि रूपाणि ससूत्रं साधयत।

| प्रारम्भः | साध्यं रूपम् |
|---|---|
| तद् श्लोकः | तच्श्लोकः |
| तद् शिवः | तच्छिवः |
| अच् ह्रस्वः | अज्झ्रस्वः |
| उद् स्थानम् | उत्थानम् |
| षट् मासाः | षण्मासाः |
| सत् मार्गः | सन्मार्गः |
| मृद् मयम् | मृण्मयम् |
| कृष्णस् चपलः | कृष्णश्चपलः |
| सत् छात्रः | सच्छात्रः |
| एतद् तु | एतत्तु |
| उद् तिष्ठ | उत्तिष्ठ |

| प्रारम्भः | साध्यं रूपम् |
|---|---|
| मन्त्रान् लिख | मन्त्राल्ँलिख |
| तद् नाम | तन्नाम |
| तद् चयः | तच्चयः |
| शिवस् शंकरः | शिवश्शंकरः |
| तद् न | तन्न |
| मनाक् हसति | मनाग्घसति |
| ग्रामाद् चलितः | ग्रामाच्चलितः |
| उद् खननम् | उत्खननम् |
| वाच् माधुर्यम् | वाङ्माधुर्यम् |
| हृद् मण्डितः | हृन्मण्डितः |
| सुहृद् मित्रम् | सुहृन्मित्रम् |



## पाठगतप्रश्नानाम् उत्तराणि

**उत्तराणि-१**

१. सकारान्तपदस्य सजुषन्तपदस्य च अन्त्यस्य रुः भवति खरि परे।

२. पदान्तस्य रः इति अनयोः समानविभक्तिकत्वात् तदन्तविधिर्भवति।



३. अवसाने रेफस्य विसर्गः खरवसानयोर्विसर्जनीयः इति सूत्रेण।

४. विसर्गात् शरि परे विसर्गस्य विसर्गः विकल्पेन वा शरि इति सूत्रेण भवति।

५. स्तोः श्चुना श्चुः इति सूत्रे स्तोः स्थानिनः श्चुना आदेशेन यथासंख्यमस्ति।

६. स्तोः श्चुना श्चुः इति सूत्रे स्तोः स्थानिनः श्चुना निमित्तेन सह योगे यथासंख्यन्नास्ति।

७. सत् चित् स्थिते प्रथममेव स्तोः श्चुना श्चुः सूत्रं न प्रवर्तेत। यद्यपि स्तोः तकारस्य श्चुना चकारेण योगः दृश्यते तथापि झलां जशोऽन्ते इति सूत्रं प्रवर्तते। यतो हि - असिद्धकाण्डे पूर्वसूत्रं प्रति परसूत्रम् असिद्धम् अस्ति। अतः सत् चित् इति स्थिते सर्वादौ असिद्धकाण्डे झलां जशोऽन्ते (८.२.३९) इति सूत्रं प्रवर्तते। तेन तकारस्य जश् दकारः भवति। तदा सद् चित् इति स्थितिः भवति। अत्रापि आपाततः स्तोः श्चुना श्चुः (८.४.३९) इति किञ्च खरि च (८.४.५४) इति अनयोः युगपत् प्राप्तिः अस्ति। परन्तु स्तोः श्चुना श्चुः (८.४.३९) इति सूत्रम् असिद्धकाण्डे पूर्वम् अस्ति, खरि च (८.४.५४) इति परम् अस्ति। अतः पूर्वसूत्रस्य स्तोः श्चुना श्चुः (८.४.३९) इत्यस्य प्रवृत्तिः आदौ भवति। तेन स्तोः दकारस्य श्चुः जकारः भवति। तदा सज् चित् इति स्थितिः उपजायते।

८. शात् परस्य तोः चुना योगे चुत्वं न।

९. प्रश्नः इत्यत्र शकारात् परः स्तुः अस्ति। अतः शात् परस्य तोः चुत्वं शात् इति सूत्रेण निषिध्यते। अतः तत्र स्तोः श्चुना योगेऽपि श्चुत्वं न।

१०. 1)

११. 1)

१२. 4)

१३. 1)

**उत्तराणि-२**

१४. सकारतवर्गयोः षकारटवर्गाभ्यां योगे षकारटवर्गौ स्तः।

१५. ष्टुना ष्टुः इति सूत्रे स्तोः स्थानिनः ष्टुना आदेशेन यथासंख्यमस्ति।

१६. ष्टुना ष्टुः इति सूत्रे स्तोः स्थानिनः ष्टुना निमित्तेन योगे यथासंख्यन्नास्ति।

१७. पदान्तात् टवर्गात् परस्य नामवयवभिन्नस्य स्तोः ष्टुः न।

१८. षण्णाम् इत्यत्र पदान्तात् टवर्गात् परस्य स्तोः ष्टुत्वं निषेधसत्त्वेऽपि अनाम्नवति-नगरीणामिति वाच्यम् इति वार्तिकबलात् भवति।

१९. सन् षष्ठः इत्यत्र स्तोः ष्टुना योगेऽपि तवर्गात् नकारात् षकारे परे ष्टुत्वं तोः षि इति निषेधान्न।

२०. 1)

२१. 4)

-



२२. एतद् मुरारिः इति स्थिते दकारस्य नकारः यरोऽनुनासिकेऽनुनासिको वा इति सूत्रेण भवति।

२३. लकारे परे तवर्गस्य परसवर्णः भवति इति तोर्लि सूत्रस्यार्थः।

२४. चित् मयम् इति स्थिते सन्धौ चिन्मयम् इति एकमेव रूपम् भवति।

२५. प्रत्यये भाषायां नित्यम् इति सूत्रस्यार्थस्तावत् - लौकिकसंस्कृतभाषायाम् अनुनासिकादि-प्रत्यये परे पदान्तस्य यरः नित्यम् अनुनासिकः भवति।

२६. तोर्लि इति सूत्रस्योदाहरणं तावत् तल्लयः, विद्वाल्ँलिखति इत्येतानि।

**उत्तराणि-३**

२७. उदः स्थास्तम्भोः पूर्वस्य इति सूत्रस्यार्थस्तावत् - उदः परयोः स्था-स्तम्भोः पूर्वसवर्णः भवति।

२८. हलः परस्य झरः वा लोपः सवर्णे झरि परे इति झरो झरि सवर्णे इति सूत्रस्यार्थः।

२९. झयो होऽन्यतरस्याम् इति सूत्रस्योदाहरणं वाग्घरिः।

३०. शश्छोऽटि इति सूत्रस्य तच्छिवः तच्शिवः इति।

।।इति अष्टमः पाठः।।



# ९

# हल्सन्धौ अनुस्वारसन्धिः विसर्गसन्धिश्च

## प्रस्तावना

पूर्वेषु पाठेषु संज्ञा परिभाषा अच्सन्धिः प्रकृतिभावसन्धिः हल्सन्धिः एतानि प्रकरणानि क्रमशः परिशीलितानि। अनुस्वारसन्धिः वस्तुतः हल्सन्धिरेव अस्ति। बाहुल्येन मकारस्य नकारस्य वा अनुस्वारः भवति। एवञ्च अनुस्वारस्य बहुत्र परसवर्णः भवति। अतः इदं सर्वमपि हल्सन्धिकार्यमेव। तथापि बोधसौकर्याय पृथक् उपन्यस्तम्। अनुस्वारसन्धिप्रकरणे पदस्य इति अधिकृतमस्ति इति अवधेयम्।

विसर्गसन्धिरपि अस्मिन्नेव पाठे अन्तर्भावितः अस्ति। विसर्गसन्धेः कानिचन सूत्राणि पूर्वपाठे एव अतिक्रान्तानि। अवशिष्टानि एव सूत्राणि अत्र कानिचित् दीयन्ते। विसर्गसन्धिप्रकरणे अस्मिन् विसर्गात् पूर्वं विद्यमानः वर्णः परं च विद्यमानः वर्णः इति उभयम् अपि अवधानस्य विषयः अस्ति। एवञ्च विसर्गसन्धिप्रकरणे मूलस्थितौ अपि विसर्गः नास्ति, अन्तिमस्थितौ अपि विसर्गः नास्ति। रूपसाधनप्रक्रियायाम् मध्ये विसर्गः उद्भवति। पुनः तस्य परिवर्तनम् भवति। अतः अस्य प्रकरणस्य नाम विसर्गसन्धिप्रकरणम् इत्यपि केवलं परम्पराप्रभाव एव।

विसर्गसन्धिः इति नामकरणस्य तात्पर्यम् इदं यत् यदि पदान्वाख्यानपक्षः अस्ति तर्हि द्वयोः पदयोः मध्ये विसर्गः दृश्यते। यदि वाक्यान्वाख्यानपक्षः अस्ति तर्हि अस्मिन् प्रकरणे प्रदर्शिता स्थितिः भवतीति। अत्र केवलम् वाक्यान्वाख्यानपक्षः एव प्रदर्श्यते।



## उद्देश्यानि

इमं पाठं पठित्वा भवान् -

- पदान्तस्य मस्य अनुस्वारः कदा भवति इति ज्ञास्यति।
- अपदान्तस्य मस्य नस्य च कदा अनुस्वारः भवतीति ज्ञास्यति।
- संस्कृते यत्र तत्र अनुस्वारसन्धेः विच्छेदं कर्तुम् प्रभवेत्।
- वाक्यान्वाख्यानपक्षे विसर्गसन्धिः कः भवति इति ज्ञास्यति।
- विसर्गसन्धेः विविधान् प्रकारान् ससूत्रम् ज्ञास्यति।
- अनुस्वारसन्धेः विसर्गसन्धेः च सूत्राणि व्याख्यातुम् प्रभवेत्।
- अग्रिमप्रकरणेषु अस्य प्रकरणस्य सूत्राणि व्यवहर्तुं प्रभवेत्।
- स्वलेखेषु शुद्धं सन्धिं कर्तुम् समर्थो भविष्यति।



## [ ९.१] मोऽनुस्वारः॥ (८.३.२३)

**सूत्रार्थः** - मान्तस्य पदस्य अनुस्वारो हलि।

**सूत्रव्याख्या** - विधिसूत्रमिदम्। अस्मिन् सूत्रे द्वे पदे स्तः। मः अनुस्वारः इति सूत्रगतपदच्छेदः। मः (६/१), अनुस्वारः (१/१)। पदस्य इति अधिकृतम्। संहितायाम् इत्यधिकृतम्। हलि सर्वेषाम् इति सूत्रात् हलि इति सप्तम्यन्तं पदमनुवर्तते। पदयोजना - संहितायाम् पदस्य मः अनुस्वारः हलि।

**तदन्तविधिः** - अस्मिन् पदस्य मः इति पदद्वयमपि षष्ठ्यन्तम्। पदस्य इति विशेष्यम्। मः इति विशेषणम्। विशेषणं तदन्तस्य विशेष्यस्य संज्ञा भवति। अतः तदन्तविधिना तथा पदम् अत्र ग्राह्यं यस्य अन्ते मकारः अस्ति। अर्थात् मान्तपदस्य इति अर्थः लभ्यते। तत्रापि मान्तपदस्य इति षष्ठ्यन्तम्। तस्याः अर्थः सम्बन्धः। अस्मिन् सूत्रे अस्य सम्बन्धस्य प्रतियोगी पदम् इति परन्तु अनुयोगी तु नोल्लिखितः। नापि केनापि प्रकारेण लभ्यते। अतः इयं षष्ठी स्थानषष्ठी अनुयोगिविरहात्। पदस्य इत्यत्र षष्ठीप्रकृतिः पदशब्दः अल्समुदायबोधकः अस्ति। आदेशः अनुस्वारः एकाल् अस्ति। अतः अलोऽन्त्यस्य इति परिभाषाबलेन मान्तपदस्य अन्त्यस्य अलः स्थाने अनुस्वारः भवतीति अर्थो लभ्यते।

तदा सूत्रार्थो भवति - मान्तपदस्य अन्त्यस्य अलः स्थाने अनुस्वारः भवति हलि परे संहितायां सत्याम्। अस्य एव फलितार्थः बहुत्र - मान्तस्य पदस्य अनुस्वारो हलि इतिरूपेण प्रकट्यते। अर्थात् संहितायां विषयीभूतायाम् हलः अव्यवहितपूर्वम् मान्तं पदमस्ति चेत् मकारस्य अनुस्वारः भवतीति तात्पर्यार्थः।

**उदाहरणम्** - हरिं वन्दे।

हरिम् वन्दे इति वाक्यम्। वाक्ये संहिता विवक्षाधीना। तत्र हरिम् इति सुबन्तम् अस्ति, अतः तस्य सुप्तिङन्तं पदम् इति सूत्रेण पदसंज्ञा सुलभा। हरिम् वन्दे इत्यत्र हलः वकारात् अव्यवहितपूर्वम् मान्तं पदम् हरिम् इति अस्ति। यदि द्वयोः पदयोः मध्ये अर्धमात्रातः अधिककालस्य व्यवधानं नास्ति तर्हि मोऽनुस्वारः इति सूत्रेण मकारस्य अनुस्वारे कृते हरिं वन्दे इति साधु रूपं निष्पद्यते। यदि संहिता न विवक्षिता तर्हि हरिम् वन्दे इत्यपि प्रयोक्तुं शक्यते, न कश्चिद्दोषः।

**आक्षेपः** - 'वनम् अस्ति' इति उदाहरणे अनुस्वारस्य मकारः केन सूत्रेण इति नैके पृच्छन्ति। वस्तुतः 'वनम्' इति पदं पृथक् साधितम्। तस्य अन्ते अम्-प्रत्ययस्य मकारः स्वकीयः अस्ति। यदा 'वनम् अस्ति' इति वाक्यं व्यवह्रियते तदा तत्र मूलशब्दस्य मकारः अस्ति। तस्मात् परं हल् नास्ति। अतः तस्य अनुस्वारः नैव भवति। अनुस्वारः एव न भवति चेत् अनुस्वारस्य मकारः केन सूत्रेण इति प्रश्न एव युक्तिहीनः।

केचित् वाक्यस्य अन्ते अपि अनुस्वारं लिखन्ति यथा - 'अस्ति वनं।' परन्तु वाक्यस्य अन्ते वनं इति पदमस्ति। अर्थात् ततः परं हल् नास्ति, अथवा द्वितीयं वाक्यम् अस्ति। द्वितीयवाक्ये यद्यपि हल् प्रथमवर्णः भवितुम् अर्हति तथापि द्वयोः वाक्ययोः संहिता न भवति। अतः संहितायाः अभावे मस्य अनुस्वारः न भवति। अत एव वाक्यस्य अन्ते अनुस्वारः कदापि समर्थयितुं न शक्यते। अत एव अस्ति वनं। इति असाधु। तत्र अस्ति वनम्। इति साधु।



## [ ९.२] नश्चापदान्तस्य झलि॥ (८.३.२४)

**सूत्रार्थः** - अपदान्तस्य नस्य मस्य च स्थाने झलि अनुस्वारः भवति।

**सूत्रव्याख्या** - विधिसूत्रमिदम्। अस्मिन् सूत्रे चत्वारि पदानि सन्ति। नः च पदान्तस्य झलि इति सूत्रे उपात्तानां पदानां सन्धेः विच्छेदः। नः (६/१), च इत्यव्ययम्। अपदान्तस्य (६/१), झलि (७/१)। मोऽनुस्वारः इति सूत्राद् मः इति षष्ठ्येकवचनम्, अनुस्वारः इति प्रथमान्तं पदं चानुवर्तते। पदयोजना - अपदान्तस्य नः मः च अनुस्वारः झलि। सूत्रार्थो भवति - अपदान्तस्य नस्य मस्य च स्थाने झलि परे अनुस्वारः भवति। अर्थात् अपदान्ते विद्यमानस्य नकारस्य मकारस्य च अनुस्वारः भवति झलि परे।

**उदाहरणम्** - यशांसि। आक्रंस्यते। शान्तः।

**सूत्रार्थसमन्वयः** - यशांसि इति यशस्-शब्दस्य नपुंसकलिङ्गिनः प्रथमाबहुवचनम्। तस्य रूपसाधनप्रक्रियायाम् यशान् सि इति स्थितिः उद्भवति। तत्र विद्यमानः नकारः पदान्ते नास्ति। अतः सः अपदान्तः नकारः। तस्मात् परं झल् सकारः अस्ति। अत एव प्रकृतसूत्रेण नकारस्य अनुस्वारः भवति। तेन यशांसि इति रूपं निष्पद्यते। सूत्रे मस्य नस्य च अनुस्वारः इत्युक्तम्। इदं तावत् नकारस्य उदाहरणम्।

[यशान् सि इति स्थितिः कथं जायते - अत्र यानि सूत्राणि आवश्यकानि तानि सर्वाणि सुबन्तप्रकरणस्य सन्ति। अतः तेषां ज्ञानं विना सम्पूर्णप्रक्रियाप्रदर्शनं वृथा।]

आक्रंस्यते - आङ्-उपसर्गः, क्रमु पादविक्षेपे इति धातुः, ततः परं लृट् लकारे कृते स्यविकरणस्य विधानेन आ क्रम् स्य ते इति स्थितिः उद्भवति। तस्मिन् मकारः पदान्ते नास्ति। मकारात् परं च स्य इत्यस्य झल् सकारः अस्ति। अत एव प्रकृतसूत्रेण मकारस्य अनुस्वारः भवति। तेन आक्रंस्यते इति रूपं निष्पद्यते। सूत्रे मस्य नस्य च अनुस्वारः इत्युक्तम्। इदं तावत् मकारस्य उदाहरणम्।

शमु उपशमे इति धातोः क्तप्रयये विहिते शान्त इति रूपं निष्पद्यते। तत्र प्रक्रियया शाम् त इति स्थितिः उद्भवति। अत्र मकारः अपदान्तः अस्ति, ततः परम् झल् तकारः अस्ति। अतः नश्चापदान्तस्य झलि इति सूत्रेण मकारस्य अनुस्वारे कृते शां त इति स्थितिः जायते। तदा -

## [ ९.३] अनुस्वारस्य ययि परसवर्णः॥ (८.४.५७)

**सूत्रार्थः** - अनुस्वारस्य ययि परे परसवर्णः भवति।

**सूत्रव्याख्या** - विधिसूत्रमिदम्। अस्मिन् सूत्रे त्रीणि पदानि सन्ति। अनुस्वारस्य (६/१), ययि (७/१), परसवर्णः (१/१)। परस्य सवर्णः परसवर्णः इति षष्ठीतत्पुरुषः समासः। संहितायामिति अधिकृतम्। सूत्रार्थो भवति - अनुस्वारस्य स्थाने ययि परे परसवर्णः भवति।

**उदाहरणम्** - शान्तः।

**सूत्रार्थसमन्वयः** - शां त इति स्थिते अयम् अनुस्वारः ययि परे अस्ति। अर्थात् ययः अव्यवहितपूर्वः अस्ति। अतः प्रकृतसूत्रेण अनुस्वारस्य स्थाने आदेशः भवति। कः आदेशः। परस्य



सवर्णः। परः तकारः। तस्य सवर्णाः के। त थ द ध न एते पञ्च। एकः स्थानी आदेशाः च पञ्च। स्थानिसंख्यातः आदेशसंख्या भिन्ना। अतः स्थानेऽन्तरतमः इति परिभाषया स्थानिना अन्तरतमः आदेशः स्यात्। स्थानेन अर्थेन गुणेन प्रमाणेन च आन्तर्यं भवति चतुर्विधम्। वर्णाः अनर्थकाः इति न अर्थकृतम् आन्तर्यम्। आदेशानाम् प्रमाणम् अर्थात् उच्चारणकालः अर्धमात्रिकः। अतः न प्रमाणकृतम् आन्तर्यम् सम्भवति। स्थानिनः अनुस्वारस्य उच्चारणस्थानम् नासिका। आदेशेषु नकारस्य उच्चारणस्थानम् दन्ताः नासिका च। अन्येषां नासिका नास्ति एव। अतः स्थानतः आन्तर्येण अनुस्वारस्य स्थाने नकारः आदेशः भवति। तदा शान्त इति शब्दः निष्पद्यते। ततः परं सुप्रत्यययोगेन प्रक्रियया च शान्तः इति प्रथमान्तं रूपं सिद्ध्यति।

## [ १.४] वा पदान्तस्य॥ (८.४.५८)

**सूत्रार्थः** - पदान्तस्य अनुस्वारस्य यथि परे परसवर्णः वा भवति।

**सूत्रव्याख्या** - विधिसूत्रमिदम्। अस्मिन् सूत्रे द्वे पदे स्तः। वा इति विकल्पार्थे अव्ययम्। पदस्य अन्तः पदान्तः, तस्य इति षष्ठीतत्पुरुषः समासः। अनुस्वारस्य ययि परसवर्णः इति सम्पूर्णं सूत्रम् अनुवर्तते। तत्र अनुस्वारस्य (६/१), ययि (७/१), परसवर्णः (१/१)। परस्य सवर्णः परसवर्णः इति षष्ठीतत्पुरुषः समासः। संहितायामिति अधिकृतम्। सूत्रार्थो भवति - पदान्तस्य अनुस्वारस्य स्थाने ययि परे परसवर्णः वा भवति संहिता अस्ति चेत्।

**उदाहरणम्** - रामन्नमामि। रामं नमामि।

**सूत्रार्थसमन्वयः** - रामम् नमामि इति वाक्यम्। वाक्ये संहिता विवक्षाधीना। यदि संहिता विवक्षिता तर्हि सूत्राणि अत्र प्रवर्तन्ते। तत्र रामम् इति सुबन्तम् पदम्। तस्य पदान्ते मकारः अस्ति। नमामि इति द्वितीयं पदम् अस्ति। तस्य प्रथमवर्णः हल् नकारः अस्ति। अतः मकारस्य हलि परे अर्थात् हलः अव्यवहितपूर्वस्य मकारस्य मोऽनुस्वारः इति सूत्रेण अनुस्वारः भवति। तदा रामं नमामि इति स्थितिः जायते। तत्र अनुस्वारः पदान्ते अस्ति किञ्च ययि परे अस्ति। अर्थात् पदान्तः अनुस्वारः ययः अव्यवहितपूर्वः अस्ति। अनुस्वारस्य ययि परसवर्णः इति सूत्रेण नित्यम् परसवर्णः प्राप्तः। तत्राधुना वा पदान्तस्य इति सूत्रेण विकल्पेन परसवर्णः विधीयते। परसवर्णः न भवति चेत् रामं नमामि इति साधु वाक्यं निष्पद्यते। परसवर्णः भवति चेत् स्थानी अनुस्वारः, आदेशाः परस्य नकारस्य सवर्णाः। के सवर्णाः। त थ द ध न एते पञ्च। एकः स्थानी पञ्च आदेशाः। अतः स्थानेऽन्तरतमः इति परिभाषया अनुस्वारस्य स्थाने कः भवति। अनुस्वारस्य उच्चारणस्थानम् नासिका। आदेशेषु नकारस्य उच्चारणस्थानं दन्ताः नासिका च। अतः नासिका इति स्थानसाम्यम् लभ्यते। अन्यत् आन्तर्यं न सम्भवति। अतः अनुस्वारस्य स्थाने नकारे कृते रामन्नमामि इति साधु वाक्यम् सिध्यति। एवं रामं नमामि, रामन्नमामि इति द्वयमपि साधु।



**अयमत्र संग्रहः -**

अनुस्वारस्य ययि परसवर्णः इति वा पदान्तस्य इति च सूत्रयोः प्रवत्तिक्षेत्रम् पर्यालोच्य अयं फलितार्थः वक्तुं शक्यः - अनुस्वारस्य ययि परसवर्णः इति सूत्रम् अपदान्तस्य अनुस्वारस्य ययि परसवर्णं नित्यं करोति। पदान्तस्य अनुस्वारस्य ययि विकल्पेन परसवर्णं वा पदान्तस्य इति सूत्रं करोति।

अनुस्वारस्य कदा कः वर्णः भवतीति अधः संक्षेपेण दीयते।

अनुस्वारात् परं कवर्गः अस्ति चेत् परसर्वणः ङकारः भवति। यथा शङ्कर इति।

अनुस्वारात् परं चवर्गः अस्ति चेत् परसर्वणः ञकारः भवति। यथा सञ्चयः इति।

अनुस्वारात् परं टवर्गः अस्ति चेत् परसर्वणः णकारः भवति। यथा त्वण्टीकसे इति।

अनुस्वारात् परं तवर्गः अस्ति चेत् परसर्वणः नकारः भवति। यथा परन्तु इति।

अनुस्वारात् परं पवर्गः अस्ति चेत् परसर्वणः मकारः भवति। यथा रामम्पश्य इति।



## पाठगतप्रश्नाः-१

१. मोऽनुस्वारः इत्यत्र कस्य मस्य अनुस्वारः।

२. अपदान्तस्य मस्यानुस्वारः केन सूत्रेण।

३. अपदान्तस्य मस्य यमि अनुस्वारः केन सूत्रेण।

४. त्वम् रामः इत्यत्र मस्यानुस्वारः केन सूत्रेण।

५. त्वम् हरिः इत्यत्र मस्यानुस्वारः केन सूत्रेण।

६. फलम् रोचते इत्यत्र किं सन्धिसूत्रं प्रवर्तेत।

७. हरिं वन्दे इत्यत्र किं सन्धिसूत्रं प्रवर्तेत।

८. अपदान्तस्यानुस्वारस्य परसवर्णः केन सूत्रेण।

९. जलं हरति इत्यत्र अनुस्वारः केन सूत्रेण।

१) नश्चापदान्तस्य झलि २) वा पदान्तस्य

३) मोऽनुस्वारः ४) अनुस्वारस्य ययि परसवर्णः

१०. शाम् त इति स्थिते शान्त इति परिवर्तनम् अनेन क्रमेण भवति।

१) मस्य नः २) मस्य अनुस्वारः, तस्य नः

३) मस्य जश्, तस्य नः ४) नस्य मः, तस्य मकारः

११. जलम् नयति इत्यत्र सन्धिः क्रियते चेत् कानि रूपाणि सम्भवन्ति।

१) जलं नयति, जलन्नयति

२) जलम् नयति, जलन्नयति



३) जलं नयति, जलन्नयति, जलम् नयति

४) जलम् नयति, जलं नयति

१२. जलम् नयति इत्यत्र संहिता नास्ति चेत् कः प्रयोगः साधुः।

१) जलं नयति, जलन्नयति  २) जलम् नयति

३) जलं नयति  ४) जलम् नयति, जलं नयति

।।इति हल्सन्धौ अनुस्वारसन्धिः।।

॥अथ विसर्गसन्धिः॥

## [ ९.५] अतो रोरप्लुतादप्लुते॥ (६.१.१०९)

**सूत्रार्थः** - अप्लुताद् अतः परस्य रोः स्थाने उत् भवति अप्लुते अति परे।

**सूत्रव्याख्या** - विधिसूत्रमिदम्। अस्मिन् सूत्रे चत्वारि पदानि सन्ति। अतः रोः अप्लुताद् अप्लुते इति सूत्रगतपदच्छेदः। अत् इति तपरः, तस्य रूपम् अतः इति पञ्चम्येकवचनान्तम्। संहितायाम् इति अधिकृतम्। रोः (६/१), अप्लुताद् (५/१), अप्लुते (७/१)। न प्लुतः अल्पुतः, तस्मात् अप्लुताद्। तस्मिन् अप्लुते। इति उभयत्रापि नञ्-तत्पुरुषः समासः। ऋत उत् इति सूत्रात् उत् इति प्रथमान्तम् पदमनुवर्तते। एङः पदान्तादति इति सूत्राद् अति इति सप्तम्येकवचनान्तम् पदमनुवर्तते। वाक्ययोजना भवति - अल्पुताद् अतः रोः उत् अप्लुते अति। अतः इति दिग्योगे पञ्चमी। अतः तस्मादित्युत्तरस्य इति परिभाषया अतः (ह्रस्वाद् अकाराद्) अव्यहितपरस्य कार्यं विधीयते। रोः इति स्थानषष्ठी। तेन षष्ठी स्थानेयोगा इति सूत्रेण स्थाने इति पदं लभ्यते। अप्लुते अति इति परसप्तमी अस्ति। तेन तस्मिन्निति निर्दिष्टे पूर्वस्य इति परिभाषाबलेन अप्लुताद् अकारात् अव्यवहितपूर्वस्य कार्यं भवतीति अर्थो लभ्यते। उत् तपरः अस्ति। अतः तपरस्तत्कालस्य इति परिभाषया उत् ह्रस्वानां षण्णाम् उकाराणां ग्रहणं करोति। सर्वासाम् परिभाषाणां बलेन सूत्रार्थो भवति - अप्लुताद् अतः परस्य रोः स्थाने उत् भवति अप्लुते अति परे संहितायाम् सत्याम्। अर्थात् यदि अप्लुताद् अतः (ह्रस्वाद् अकारात्) परः रुः अस्ति तर्हि तस्य स्थाने उत् (ह्रस्वः उकारः) भवति यदि परे अल्पुतः अत् (ह्रस्वः अकारः) अस्ति, किञ्च संहिता भवति चेत्।

**उदाहरणम्** - शिवोऽर्च्यः।

**सूत्रार्थसमन्वयः** - शिवशब्दात् प्रथमाविभक्तेः एकवचनस्य प्रत्ययः सुप् विधीयते तदा शिवस् इति स्थितिः भवति। एवञ्च अर्च्-धातोः कृत्यप्रत्यययोगेन अर्च्यः इति रूपं निष्पद्यते। द्वयोः मेलनेन शिवस् अर्च्यः इति स्थितिः उद्भवति। शिवस् इत्यस्य अन्ते सुप् अस्ति। अतः सुप्तिङन्तं पदम् इति सूत्रेण तस्य पदसंज्ञा भवति। तस्य अन्ते सकारः अस्ति। अतः पदान्तस्य सकारस्य ससजुषो रुँः इति सूत्रेण रुँः भवति। तस्य उँकारः अनुनासिकः अस्ति। अतः उपदेशेऽजनुनासिक इत् इति सूत्रेण तस्य इत्संज्ञा



भवति। ततः तस्य लोपः इति सूत्रेण उँकारस्य लोपः च भवति। इत्थम् इत्संज्ञाकरणं, तस्य लोपकरणं च लघुना इत्थम् प्रकट्यते - 'अनुबन्धलोपे' इति। एवं लोपे कृते शिवर् अर्च्यः इति जायते। तत्राधुना वकारात् परः अप्लुतः अत् (ह्रस्वः अकारः) अस्ति। ततः परम् रुः अस्ति। ततः परम् अप्लुतः अत् अस्ति। अतः प्रकृतसूत्रेण रोः उत् भवति। तदा शिव उ अर्च्यः इति स्थितिः भवति। अत्र वकारात् परः अवर्णः अस्ति। ततः परम् अच् उकारः अस्ति। अतः आद् गुणः इति सूत्रेण अकार-उकारयोः पूर्वपरयोः स्थाने स्थानतः आन्तर्याद् ओकारः भवति। तेन शिवो अर्च्यः इति स्थितिः भवति। अत्र एचः ओकारात् परम् अच् अस्ति। अतः एचोऽयवायावः इति सूत्रेण अवादेशः प्राप्तः। परन्तु शिवो इत्यस्य ओकारः पदान्ते अस्ति। ततः परम् अत् अस्ति। अतः एङः पदान्तादति इति सूत्रेण अकारस्य पूर्वरूपे कृते शिवोऽर्च्यः इति वाक्यं सम्पद्यते। शिवः महेश्वरः अर्च्यः पूज्यः इति तदर्थः।

[**व्युत्पत्तिः** - १) प्रकृतसूत्रम् इत्यस्य अर्थः - अधुना यत् सूत्रं व्याख्यानस्य विषयः अस्ति तद्। यथा अत्र - अतो रोरप्लुतादप्लुते इति प्रकृतं सूत्रम्।

२) ससजुषो रुँः (८.२.६६) इति असिद्धकाण्डीयं सूत्रम्। तेन रुँः विहितः। अतो रोरप्लुतादप्लुते (६.१.१०३) इति सूत्रं तु सिद्धकाण्डे अस्ति। अस्य दृष्ट्या रुँत्वं तु असिद्धमेव। तथापि यदि इदं रुत्वम् असिद्धं स्यात् तर्हि व्याकरणशास्त्रे अन्यत्र कुत्रापि सिद्धं रुत्वं नास्ति। तेन अतो रोरप्लुतादप्लुते इति सूत्रं व्यर्थं भवेत्। परन्तु पाणिनिमुनेः न किमपि वचनं व्यर्थम्। अतः वचनप्रामाण्यात् तद् असिद्धमपि सिद्धमिति गृह्यते।]

## [ ९.६] हशि च॥ (६.१.११०)

**सूत्रार्थः** - अप्लुताद् अतः परस्य रोः स्थाने उत् भवति हशि परे।

**सूत्रव्याख्या** - विधिसूत्रमिदम्। अस्मिन् सूत्रे द्वे पदे स्तः। हशि (७/१), च इत्यव्ययपदम्। संहितायाम् इति अधिकृतम्। अतो रोरप्लुतादप्लुते इति सूत्रात् अप्लुताद् (५/१), अतः (५/१), रोः (६/१) इति पदानि अनुवर्तन्ते। न प्लुतः अप्लुतः, तस्माद् अप्लुताद् इति नञ्-तत्पुरुषः समासः। ऋत उत् इति सूत्राद् उत् इति प्रथमान्तं पदमनुवर्तते। पदयोजना - संहितायाम् अप्लुताद् अतः रोः उत् हशि च। अतः इति दिग्योगपञ्चमी। तेन अतः परस्य इत्यर्थो लभ्यते। हशि इति परसप्तमी। तेन हशः अव्यवहितपूर्वस्य इत्यर्थः लभ्यते। तदेव उच्यते हशि परे इति। रोः इति स्थानषष्ठी। तेन अर्थः रोः स्थाने इत्यर्थो लभ्यते। सूत्रार्थो भवति - अप्लुताद् अतः परस्य रोः स्थाने उत् भवति हशि परे। अर्थाद् ह्रस्वाद् अकारात् परस्य रोः स्थाने ह्रस्वः उकारः भवति हशि परे इति।

**उदाहरणम्** - शिवो वन्द्यः।

**सूत्रार्थसमन्वयः** - शिवशब्दात् प्रथमाविभक्तेः एकवचनस्य प्रत्ययः सुप् विधीयते तदा शिवस् इति स्थितिः भवति। एवञ्च वन्द-धातोः कृत्यप्रत्यययोगेन वन्द्यः इति रूपं निष्पद्यते। द्वयोः मेलनेन शिवस् वन्द्यः इति स्थितिः उद्भवति। शिवस् इत्यस्य अन्ते सुप् अस्ति। अतः सुप्तिङन्तं पदम् इति सूत्रेण तस्य पदसंज्ञा भवति। तस्य अन्ते सकारः अस्ति। अतः पदान्तस्य सकारस्य ससजुषो रुँः इति सूत्रेण रुँः



भवति। तस्य उँकारः अनुनासिकः अस्ति। अतः उपदेशेऽजनुनासिक इत् इति सूत्रेण तस्य इत्संज्ञा भवति। ततः तस्य लोपः इति सूत्रेण उँकारस्य लोपः च भवति। इत्थम् इत्संज्ञाकरणं, तस्य लोपकरणं च लघुना इत्थम् प्रकट्यते - 'अनुबन्धलोपे' इति। एवं लोपे कृते शिवर् वन्द्यः इति जायते। तत्राधुना शिवशब्दस्य वकारात् परः अप्लुतः अत् (ह्रस्वः अकारः) अस्ति। ततः परं हश् वकारः अस्ति। अतः प्रकृतसूत्रेण रोः उत् भवति। तदा शिव उ वन्द्यः इति स्थितिः भवति। अत्र शिवशब्दस्य वकारात् परः अवर्णः अस्ति। ततः परम् अच् उकारः अस्ति। अतः आद् गुणः इति सूत्रेण अकार-उकारयोः पूर्वपरयोः स्थाने स्थानतः आन्तर्याद् ओकारः भवति। तेन शिवो वन्द्यः इति साधु वाक्यं सम्पद्यते।

[**प्रश्नः** - केचित् पृच्छन्ति यत् शिवः वन्द्यः इति स्थिते विसर्गस्य सकारः केन सूत्रेण। अथवा शिवः वन्द्यः इत्यस्य शिवो वन्द्यः इति सन्धिः केन सूत्रेण इति।

उत्तरम् - शिवः इति रूपं पृथक् साधितम् अस्ति। तस्मात् एकैकं पदं पृथक् पृथक् संस्कृतम्, निर्मितम् अस्ति। तानि निर्मितानि पदानि आदाय वाक्यं विरचितम् अस्ति। अतः इयं स्थितिः पदान्वाख्यानपक्षे एव सम्भवति न तु वाक्यान्वाख्यानपक्षे। स्यादेतत्। शिवः वन्द्यः इति स्थिते विसर्गस्य परिवर्तनाय सूत्रं नास्ति। विसर्जनीयस्य सः इति सूत्रेण विसर्गस्य सकारः खरि परे एव भवति। हशि परे विसर्गस्य परिवर्तनाय किमपि सूत्रं तावन्नास्ति। अतः शिवः वन्द्यः इति अस्ति चेत् शिवो वन्द्यः इति तस्यैव परिवर्तनम् नैव कर्तुं शक्यम्। परन्तु यथा शिवः वन्द्यः इति प्रयोक्तुं शक्यम् तथा शिवो वन्द्यः इत्यपि प्रयोक्तुं शक्यम्। परन्तु अस्य तत्र गमनम् , तस्य वा अत्र आगमनम् असम्भवम्। तस्मात् शिवो वन्द्यः इत्यस्य सन्धिविच्छेदः शिवस् वन्द्यः इति एव कर्तव्यः।]

## [ ९.७] भो-भगो-अघो-अपूर्वस्य योऽशि॥ (८.३.१७)

**सूत्रार्थः** - भो-भगो-अघो-अपूर्वस्य रोः यादेशः अशि परे भवति।

**सूत्रव्याख्या** - विधिसूत्रमिदम्। अस्मिन् सूत्रे त्रीणि पदानि सन्ति। भो-भगो-अघो-अपूर्वस्य यः अशि इति सूत्रे उपात्तेषु पदेषु विद्यमानस्य सन्धेः विच्छेदः। भोः च भगोः च अघोः च अः च इति भो-भगो-अघो-आः इति इतरेतरयोगद्वन्द्वसमासः। भो-भगो-अघो-आः पूर्वे यस्मात् सः भो-भगो-अघो-अपूर्वः इति बहुव्रीहिसमासः। भोस् भगोस् अघोस् एते चादिगणे पठिताः सकारान्तनिपाताः। यः इति प्रथमान्तं पदम्। अशि इति सप्तम्यन्तं पदम्। रोः सुपि इति सूत्रात् रोः इति षष्ठ्यन्तं पदमनुवर्तते। सूत्रार्थो भवति - भो-भगो-अघो-अपूर्वस्य रोः यादेशः अशि परे भवति। अर्थात् रोः पूर्वं यदि भो भगो अघो अवर्णः च अस्ति किञ्च रोः परं यदि अश् अस्ति तर्हि रोः स्थाने यकारः आदेशः भवति।

भोस् भगोस् अघोस् एते चादिगणे पठिताः सकारान्तनिपाताः इति उक्तमेव। साधारणानां सम्बोधने भोस् इत्यस्य प्रयोगः भवति। भगवतः सम्बोधने भगोस् इत्यस्य प्रयोगः भवति। पापिनः सम्बोधने अघोस् इत्यस्य प्रयोगः भवति।

**उदाहरणम्** - देवा इह। देवायिह।



**सूत्रार्थसमन्वयः -** (अवर्णपूर्वस्य उदाहरणमिदम्।) देवशब्दात् सम्बोधने अर्थे प्रथमाबहुवचनस्य जस्-प्रत्ययस्य विधाने प्रक्रियया देवास् इति लभ्यते। ततः परम् इह इति अव्ययस्य प्रयोगेन देवास् इह इति स्थितिः उद्भवति। देवास् इत्यस्य अन्ते सुप् अस्ति। अतः सुप्तिङन्तं पदम् इति सूत्रेण तस्य पदसंज्ञा भवति। तस्य अन्ते सकारः अस्ति। अतः पदान्तस्य सकारस्य ससजुषो रुँः इति सूत्रेण रुँः भवति। तस्य उँकारः अनुनासिकः अस्ति। अतः उपदेशेऽजनुनासिक इत् इति सूत्रेण तस्य इत्संज्ञा भवति। ततः तस्य लोपः इति सूत्रेण उँकारस्य लोपः च भवति। एवं लोपे कृते देवार् इह इति जायते। तत्राधुना यः रुः तस्मात् पूर्वम् अवर्णः आकारः अस्ति। तस्मात् परम् अश् इकारः अस्ति। अतः प्रकृतसूत्रेण रोः स्थाने यकारः भवति। तेन देवाय् इह इति स्थितिः जायते। तदा लोपः शाकल्यस्य इति सूत्रेण अवर्णपूर्वस्य यकारस्य विकल्पेन लोपः भवति। लोपपक्षे देवा इह, लोपाभावपक्षे च देवायिह इति रूपद्वयं सिद्ध्यति।

भोस् देवाः। भगोस् नमस्ते। अघोस् याहि। इति एषु त्रिषु उदाहरणेषु पदान्ते सकारः अस्ति। अतः ससजुषो रुः इति सूत्रेण रुत्वे अनुबन्धलोपे च कृते भोर् देवाः। भगोर् नमस्ते। अघोर् याहि। इति स्थितिः उद्भवति। तत्राधुना रेफवर्णः रुः अस्ति। तस्मात् पूर्वं भो भगो अघो इति शब्दाः सन्ति। तस्मात् परं अश् दकारः, नकारः, यकारः च सन्ति। अतः प्रकृतसूत्रेण रोः स्थाने यकारः विधीयते। तेन भोय् देवाः। भगोय् नमस्ते। अघोय् याहि। इति स्थितिः जायते। तदा -

## [ १.८] हलि सर्वेषाम्॥ (८.३.२२)

**सूत्रार्थः -** भो-भगो-अघो-अपूर्वस्य यस्य लोपः हलि परे।

**सूत्रव्याख्या -** विधिसूत्रमिदम्। अस्मिन् द्वे पदे स्तः। हलि (७/१), सर्वेषाम् इति सर्व इति सर्वनाम्नः षष्ठीबहुवचनम्। भो-भगो-अघो-अपूर्वस्य योऽशि इति सूत्रात् भो-भगो-अघो-अपूर्वस्य इति पदमनुवर्तते। भोः च भगोः च अघोः च अः च इति भो-भगो-अघो-आः इति इतरेतरयोगद्वन्द्वसमासः। भो-भगो-अघो-आः पूर्वे यस्मात् सः भो-भगो-अघो-अपूर्वः इति बहुव्रीहिसमासः। भोस् भगोस् अघोस् एते चादिगणे पठिताः सकारान्तनिपाताः। व्योर्लघुप्रयत्नतरः शाकटायनस्य इति सूत्रस्थात् व्योः इति पदात् यस्य इति एकांशः अनुवर्तते। लोपः शाकल्यस्य इति सूत्रात् लोपः इति प्रथमान्तं पदमनुवर्तते। पदयोजना - भो-भगो-अघो-अपूर्वस्य यस्य लोपः हलि सर्वेषाम्। सूत्रार्थो भवति - भो-भगो-अघो-अपूर्वस्य यस्य लोपः भवति हलि परे। अर्थात् यकारात् पूर्वं यदि भो भगो अघो अवर्णः च अस्ति किञ्च यकारात् परं यदि हल् अस्ति तर्हि यकारस्य लोपः आदेशः भवति। सर्वेषाम् इत्यस्य तात्पर्यं यत् सर्वेषाम् व्याकरणाचार्याणाम् एतद्विषये सम्मतिः अस्ति यत् लोपः भवति एव। लोपः नित्यः।

**उदाहरणम् -** भो देवाः। भगो नमस्ते। अघो याहि।

**सूत्रार्थसमन्वयः -** उपरितनसूत्रे भोय् देवाः। भगोय् नमस्ते। अघोय् याहि। इति स्थितिः उद्भूता। अत्राधुना यकारात् पूर्वं भो भगो अघो इति शब्दाः सन्ति। तस्मादेव यकारात् परम् हलः दकारः, नकारः, यकारः च सन्ति। अतः प्रकृतसूत्रेण यकारस्य नित्यं लोपे कृते भो देवाः। भगो नमस्ते। अघो याहि। इति साधुवाक्यानि सिद्ध्यन्ति।



**अयमत्र संग्रहः**

पदान्तस्य सकारस्य रुत्वं ससजुषो रुः इति एकेनैव सूत्रेण प्राधान्येन विधीयते। सकारात् परं किमस्तीति अत्र चिन्ता नास्ति। यदा सस्य रुत्वं भवति तदा रोः पूर्वं परं च कः वर्णः, कः शब्दः वा अस्ति इति गुरुत्वमावहति।

१) रोः पूर्वम् अत्, परम् अत् (अ + र् + अ ) तदा रोः उत् भवति - (अ + उ + अ)। ततः परम् प्रथमाकारेण सह उकारस्य गुणः भवति - (ओ + अ)। ततः परम् पूर्वरूपम् भवति - (ओऽ)। (उदा. - देवर् अपि, रामर् अपि। - देव उ अपि, राम उ अपि। देवो अपि, रामो अपि। देवोऽपि, रामोऽपि)

२) रोः पूर्वम् भो भगो अघो आ, परम् अश् अस्ति (भो भगो अघो आ + र् + अश् ) तदा रोः यकारः भवति - (भो भगो अघो आ + य् + अश्)। (उदा. - देवार् आस्तिकाः। दानवार् नास्तिकाः। - देवाय् आस्तिकाः। दानवाय् नास्तिकाः।)

३) पदान्तात् यकारात् पूर्वम् भो भगो अघो आ, परम् अच् अस्ति (भो भगो अघो आ + य् + अच् ) तदा यकारस्य विकल्पेन लोपः भवति - (भो भगो अघो आ + य् + अच्) / (भो भगो अघो आ + ... + अच्)। एवञ्च इयमेव अन्तिमा स्थितिः। अस्मात् परं केनापि सूत्रेण किमपि कार्यं न विधीयते। (उदा. - देवाय् आस्तिकाः। - देवायास्तिकाः / देवा आस्तिकाः।)

४) पदान्तात् यकारात् पूर्वम् भो भगो अघो आ, परम् हल् (वस्तुतः हश्) अस्ति (भो भगो अघो आ + य् + हश्) तदा यकारस्य नित्यं लोपः भवति - (भो भगो अघो आ + ... + हल्) (उदा. - दानवाय् नास्तिकाः। - दानवा नास्तिकाः।)

५) रोः पूर्वम् इच् , परम् अश् अस्ति (इर् अ, इर् आ, उर् इ, एर् इ, ... ) तदा रोः स्थाने किमपि परिवर्तनं न भवति। हरिर् अत्र – हरिरत्र इत्यादिषु स्थलेषु।

६) लोपः शाकल्यस्य इति सूत्रेण अशि परे यवयोः विकल्पेन लोपः क्रियते। परन्तु हलि सर्वेषाम् इति सूत्रेण यकारस्य हलि नित्यम् लोपः विधीयते। अश्-मध्ये हश् अस्ति। हल्-मध्ये हश् अस्ति। उभयत्र हश् साधारणः। लोपः शाकल्यस्य इति सूत्रेण हशि यलोपः विकल्पेन प्राप्तः, हलि सर्वेषाम् इति सूत्रेण नित्यं प्राप्तः। परन्तु हलि सर्वेषाम् इति सूत्रे सर्वेषामिति उक्तमस्ति। अतः शाकल्यमते अपि हशि लोपः एव भवति न तु लोपाभावः अपि। परन्तु हशि वकारस्य लोपः विकल्पेन इत्यपि अवधेयम्।

**पट्टिकायां प्रदर्शितानि उदाहरणानि निरीक्ष्यन्ताम्।**

| १ | २ | ३ | ४ |
|---|---|---|---|



| | | | |
|---|---|---|---|
| देवस् अपि | देवस् इह | देवास् एव | देवास् वन्द्याः |
| देवर् अपि | देवर् इह | देवार् एव | देवार् वन्द्याः |
| देव उ अपि | देवय् इह | देवाय् एव | देवाय् वन्द्याः |
| देवो अपि | **देवयिह** √ | **देवायेव** √ | **देवा वन्द्याः** |
| देवोऽपि | **देव इह** √ | **देवा एव** √ | |
| | | | |
| ५ | ६ | ७ | ८ |
| कविस् अपि | कविस् याति | विष्णुस् आयाति | विष्णुस् जयतु |
| कविर् अपि | कविर् याति | विष्णुर् आयाति | विष्णुर् जयतु |
| **कविरपि** | **कविर्याति** | **विष्णुरायाति** | **विष्णुर्जयतु** |
| | | | |
| ९ | १० | ११ | १२ |
| हरेस् इव | हरेस् नाम | विष्णोस् इच्छा | विष्णोस् दया |
| हरेर् इव | हरेर् नाम | विष्णोर् इच्छा | विष्णोर् दया |
| **हरेरिव** | **हरेर्नाम** | **विष्णोरिच्छा** | **विष्णोर्दया** |
| | | | |
| १३ | १४ | १५ | १६ |
| देवैस् अपि | देवैस् गीतम् | गौस् एव | गौस् गच्छति |
| देवैर् अपि | देवैर् गीतम् | गौर् एव | गौर् गच्छति |
| **देवैरपि** | **देवैर्गीतम्** | **गौरेव** | **गौर्गच्छति** |

## [ ९.९] रो रि॥ (८.३.१४)

**सूत्रार्थः** - रेफे परे रेफस्य लोपः भवति।

**सूत्रव्याख्या** - विधिसूत्रमिदम्। अस्मिन् सूत्रे द्वे पदे स्तः। रः रि इति सूत्रस्थसन्धेः विच्छेदः। रः (६/१), रि (७/१)। ढो ढे लोपः इति सूत्रात् लोपः इति प्रथमान्तं पदमनुवर्तते। तदा सूत्रार्थो भवति - रेफे परे रेफस्य लोपः भवति।

उदाहरणम् अग्रिमसूत्रे प्रदर्श्यते।

## [ ९.१०] ढ्रलोपे पूर्वस्य दीर्घोऽणः॥ (६.३.११०)

**सूत्रार्थः** - लोपनिमित्तयोः ढरेफयोः परयोः पूर्वस्य अणः दीर्घः भवति।



**सूत्रव्याख्या** - विधिसूत्रमिदम्। अस्मिन् सूत्रे चत्वारि पदानि सन्ति। ढ्रलोपे (७/१), पूर्वस्य (६/१), दीर्घः (१/१), अणः (६/१)। अत्र अण् पूर्वणकारेण। तत्र समासः - ढ् च रः च ढ्रौ इति इतरेतरयोगद्वन्द्वसमासः। ढ्रौ लोपयति इति ढ्रलोपः इति उपपदसमासः। ढकार-रेफयोः लोपस्य निमित्तभूतौ परौ यदि स्याताम् इति ढ्रलोपे इति पदस्यार्थः। तदा सूत्रार्थो भवति - ढलोपस्य रेफलोपस्य च निमित्तभूतयोः पूर्वस्य अणः दीर्घः। ढकारस्य लोपस्य निमित्तम् अपरः ढकारः एव भवति इति ढो ढे लोपः इति सूत्राद् ज्ञायते। रेफस्य लोपस्य निमित्तम् अपरः रेफः एव भवति इति रो रि इति सूत्राद् ज्ञायते। अण् - अ इ उ इति त्रयः। सूत्रस्य सुबोधार्थः भवति - यस्मिन् ढकारे ढकारस्य लोपः, यस्मिन् रेफे परे रेफस्य लोपः अभवत्, स ढकारः रेफः वा यदि परे स्यात् तर्हि ततः पूर्वस्य अणः - अ इ उ एषां दीर्घः भवति।

**उदाहरणम्** - पुना रमते। हरी रम्यः। शम्भू राजते।

**सूत्रार्थसमन्वयः** - पुनर् इति रेफान्तम् अव्ययम्। पुनर् रमते इति वाक्ये स्थिते रेफे परे रेफः अस्ति। अतः रो रि इति सूत्रेण पूर्वरेफस्य लोपः भवति। तदा पुन रमते इति स्थितिः जायते। अत्राधुना रेफस्य लोपस्य निमित्तीभूतः रेफः अस्ति। तस्मिन् रेफे परे सति ततः पूर्वस्य अणः अकारस्य प्रकृतसूत्रेण दीर्घः भवति। अतः पुना रमते इति साधु वाक्यं निष्पद्यते।

हरिस् रम्यः इति स्थिते ससजुषो रुः इति सूत्रेण पदान्तस्य हरिस्-शब्दस्य सकारस्य रुत्वे कृते हरिर् रम्यः इति स्थितिः जायते। तत्र रेफे परे रेफः अस्ति। अतः रो रि इति सूत्रेण प्रथमरेफस्य लोपः भवति। तदा हरि रम्यः इति स्थितिः जायते। अत्राधुना रेफस्य लोपस्य कारणं रेफः अस्ति। अतः प्रकृतसूत्रेण ततः पूर्वस्य अणः इकारस्य दीर्घः भवति। तदा हरी रम्यः इति साधु वाक्यं लभ्यते।

शम्भुस् राजते इति स्थिते ससजुषो रुः इति सूत्रेण पदान्तस्य शम्भुस्-शब्दस्य सकारस्य रुत्वे कृते शम्भुर् राजते इति स्थितिः जायते। तत्र रेफे परे रेफः अस्ति। अतः रो रि इति सूत्रेण प्रथमरेफस्य लोपः भवति। तदा शम्भु राजते इति स्थितिः जायते। अत्राधुना रेफस्य लोपस्य कारणं रेफः अस्ति। अतः प्रकृतसूत्रेण ततः पूर्वस्य अणः उकारस्य दीर्घः भवति। तदा शम्भू राजते इति साधु वाक्यं लभ्यते।

## [ ९.११] एतत्तदोः सुलोपोऽकोरनञ्समासे हलि॥ (६.१.१२८)

**सूत्रार्थः** - ककाररहितयोः एतत्तदोः यः सुः तस्य लोपः हलि परे, न तु नञ्समासे।

**सूत्रव्याख्या** - विधिसूत्रमिदम्। अस्मिन् सूत्रे पञ्च पदानि सन्ति। एतत्तदोः (६/२), सुलोपः (१/१), अकोः (६/२), अनञ्समासे (७/१), हलि (७/१)। समासः - एतत् च तत् च एतत्तदौ इति इतरेतरयोगद्वन्द्वसमासः। तयोः एतत्तदोः। सोः लोपः सुलोपः इति षष्ठीतत्पुरुषः। न नञ्समासः अनञ्समासः इति नञ्तत्पुरुषः समासः। तस्मिन् अनञ्समासे। अविद्यमानः क् ययोः तौ अकौ इति बहुव्रीहिसमासः। तयोः अकोः। सूत्रार्थो भवति - ककाररहितयोः एतत्तदोः यः सुः तस्य लोपः हलि परे भवति, न तु नञ्समासे। अर्थात् ककाररहितस्य एतत्-सर्वनाम्नः तत्-सर्वनाम्नः च यः सुः तस्य लोपः भवति हलि परे। परन्तु नञ्समासे सुलोपः न भवति।

**उदाहरणम्** - स शम्भुः। एष विष्णुः।



**सूत्रार्थसमन्वयः -** तत्-सर्वनाम्नः सुप्रत्यययोगेन प्रक्रियया च सस् शम्भुः इति स्थितिः उद्भवति। तत्र तदः सुप्रत्ययः हलि शकारे परे अस्ति। अतः प्रकृतसूत्रेण तदः सुलोपे कृते स शम्भुः इति साधु वाक्यं निष्पद्यते।

एतत्-सर्वनाम्नः सुप्रत्यययोगेन प्रक्रियया च एषस् विष्णुः इति स्थितिः उद्भवति। एतदः सुप्रत्ययः हलि वकारे परे अस्ति। अतः प्रकृतसूत्रेण एतदः सुलोपे कृते एष विष्णुः इति साधु वाक्यं निष्पद्यते।



## पाठगतप्रश्नाः-२

१३. अतो रोरप्लुतादप्लुते इति सूत्रस्यार्थं लिखत।

१४. अतो रोरप्लुतादप्लुते इति सूत्रे स्थानी कः। आदेशश्च कः।

१५. रोः पूर्वम् अत् , परम् अत् अस्ति चेत् किं सूत्रं प्रवर्तेत।

१६. रोः पूर्वम् आकारः, परम् आकारः अस्ति चेत् किं सूत्रं प्रवर्तते।

१७. हलि सर्वेषाम् इति सूत्रेण किं भवति।



## पाठसारः

अस्मिन् पाठे हल्सन्धिप्रकरणस्य अङ्गभूतम् अनुस्वारसन्धिप्रकरणम् सविस्तरम् उपन्यस्तमस्ति। संहितायां विषयीभूतायाम् हलः अव्यवहितपूर्वम् मान्तं पदमस्ति चेत् मकारस्य अनुस्वारः भवति मोऽनुस्वारः इति सूत्रेण। इदं बोध्यम् यत् अनेन सूत्रेण पदान्तस्य मस्य अनुस्वारः भवति।

नश्चापदान्तस्य झलि इति सूत्रेण अपदान्ते विद्यमानस्य नकारस्य मकारस्य च अनुस्वारः भवति झलि परे। अतः मोऽनुस्वारः इति नश्चापदान्तस्य झलि इत्यनयोः सूत्रयोः कार्यक्षेत्रं सम्यक् स्मर्तव्यम्।

आभ्यां सूत्राभ्याम् यः अनुस्वारः विधीयते तस्य पुनः अग्रे उक्तानि कार्याणि भवन्ति।

अनुस्वारस्य ययि परसवर्णः इति सूत्रम् अपदान्तस्य अनुस्वारस्य ययि परसवर्णं नित्यं करोति। पदान्तस्य अनुस्वारस्य ययि विकल्पेन परसवर्णं वा पदान्तस्य इति सूत्रं करोति।

विसर्गस्य विविधा गतिः। तत्र पदान्तस्य सकारस्य रुत्वं ससजुषो रुः इति एकेनैव सूत्रेण प्राधान्येन विधीयते। सकारात् परं किमस्तीति अत्र चिन्ता नास्ति। यदा सस्य रुत्वं भवति तदा रोः पूर्वं परं च कः वर्णः, कः शब्दः वा अस्ति इति गुरुत्वमावहति। अतः तत्र सूत्रे अयं विषयः स्पष्टम् प्रतिपादितः अस्ति।



## पाठान्तप्रश्नाः

अधः केचित् प्रश्नाः दीयन्ते। तेषाम् उत्तराणि प्रामुख्येन दीर्घाणि एव सन्ति। सूत्रव्याख्यानं रूपसाधनं च इति द्वौ भवतः व्याकरणस्य प्रश्नस्य मुख्यौ प्रकारौ। अच्सन्धिप्रकरणे योग्यतावर्धनांशे एकस्य सूत्रस्य व्याख्यानं सविस्तरं प्रदर्शितम् अस्ति। तद् दृष्ट्वा बुद्ध्वा च एतेषामपि सूत्राणां व्याख्यानं कर्तव्यम्।

झलां जश् झशि इति सूत्रे रूपसाधनं कथं कर्तव्यमिति रूपसाधनस्य नैके प्रकाराः सविस्तरं प्रदर्शिताः सन्ति। अतः तत् स्थलं दृष्ट्वा बुद्ध्वा च अन्येषामपि रूपाणां साधने प्रयासः निष्ठया विधेयः। प्रथमं लघु रूपं साधनीयम्। ततः परं क्रमशः विस्तारः कर्तव्यः।

१. मोऽनुस्वारः इति सूत्रं व्याख्यात।

२. अनुस्वारस्य ययि परसवर्णः इति सूत्रं व्याख्यात।

३. अतो रोरप्लुतादप्लुते इति सूत्रं व्याख्यात।

४. हशि च इति सूत्रं व्याख्यात।

५. हलि सर्वेषाम् इति सूत्रं व्याख्यात।

६. स्तम्भयोः स्थितान् परस्परसम्बद्धान् मेलयत। क-स्तम्भे सूत्राणि सन्ति। ख-स्तम्भे स्थितयः सन्ति। केन सूत्रेण का स्थितिः भवतीति मेलनीयम्।

| क-स्तम्भः | | ख-स्तम्भः |
|---|---|---|
| १) मोऽनुस्वारः | क) | पुना रमते |
| २) नश्चापदान्तस्य झलि | ख) | त्वं रामः |
| ३) वा पदान्तस्य | ग) | पुन रमते |
| ४) अनुस्वारस्य ययि परसवर्णः | घ) | देवा गच्छन्ति |
| ५) अतो रोरप्लुतादप्लुते | ङ) | शान्तः |
| ६) हशि च | च) | शिवं प्रणमामि |
| ७) हलि सर्वेषाम् | छ) | रामउ हसति |
| ८) रो रि | ज) | रामउ अस्ति |
| ९) ढ्रलोपे पूर्वस्य दीर्घोऽणः | झ) | आक्रंस्यते |

७. स्तम्भयोः स्थितान् परस्परसम्बद्धान् मेलयत। क-स्तम्भे सूत्राणि सन्ति। ख-स्तम्भे तेषाम् सूत्राणाम् विधेयानि सन्ति। कस्य सूत्रस्य किं विधेयमिति मेलनीयम्।

| क-स्तम्भः | ख-स्तम्भः |
|---|---|



| | | | |
|---|---|---|---|
| १) | खरि च | क) | परसवर्णः |
| २) | नश्चापदान्तस्य झलि | ख) | यलोपः |
| ३) | तोः षि | ग) | रलोपः |
| ४) | ससजुषो रुः | घ) | अनुस्वारः |
| ५) | वा पदान्तस्य | ङ) | चर् |
| ६) | अतो रोरप्लुतादप्लुते | च) | दीर्घः |
| ७) | वा शरि | छ) | उत् |
| ८) | रो रि | ज) | रुः |
| ९) | ढ्रलोपे पूर्वस्य दीर्घोऽणः | झ) | विसर्जनीयः |
| १०) | हलि सर्वेषाम् | ञ) | ष्टुत्वनिषेधः |

८. अत्र अधः प्रारम्भस्थितिः दीयते। किञ्च यद्रूपं साधनीयं तदपि दीयते। ततः प्रदत्तानि रूपाणि ससूत्रं साधयत।

| प्रारम्भः | साध्यं रूपम् | प्रारम्भः | साध्यं रूपम् |
|---|---|---|---|
| भूमिम् खनति | भूमिङ्खनति | तस्यास् मतिः | तस्या मतिः |
| आम्रम् चूषति | आम्रञ्चूषति | गौस् गतः | गौर्गतः |
| नदीम् तरति | नदीन्तरति | कास् धावन्ति | का धावन्ति |
| रामम् भज | रामं भज | सस् अस्ति | सोऽस्ति |
| रामस् हसति | रामो हसति | सस् पश्यति | स पश्यति |
| रामस् अत्र | रामोऽत्र | एषस् अस्ति | एषोऽस्ति |
| रामस् आगतः | राम आगतः | एषस् पश्यति | एष पश्यति |
| मन्दस् बद्धः | मन्दो बद्धः | कस् अयम् | कोऽयम् |
| बालास् हि | बाला हि | काकस् रौति | काको रौति |
| बालास् अत्र | बाला अत्र | शम्भुस् राजा | शम्भू राजा |
| मनस् रथः | मनोरथ | मनस् मोदनम् | मनोमोदनम् |





## पाठगतप्रश्नानाम् उत्तराणि

**उत्तराणि-१**

१. मोऽनुस्वारः इत्यत्र पदान्तस्य मस्य अनुस्वारः हलि परे।

२. अपदान्तस्य मस्यानुस्वारः नश्चापदान्तस्य झलि इति सूत्रेण।

३. अपदान्तस्य मस्य यमि अनुस्वारः मोऽनुस्वारः इति सूत्रेण।

४. त्वम् रामः इत्यत्र मस्यानुस्वारः मोऽनुस्वारः इति सूत्रेण।

५. त्वम् हरिः इत्यत्र मस्यानुस्वारः मोऽनुस्वारः इति सूत्रेण।

६. फलम् रोचते इत्यत्र मोऽनुस्वारः इति सन्धिसूत्रं प्रवर्तेत।

७. हरिं वन्दे इत्यत्र वा पदान्तस्य इति सन्धिसूत्रं प्रवर्तेत।

८. अपदान्तस्यानुस्वारस्य ययि परसवर्णः भवति। सूत्रं हि अनुस्वारस्य ययि परसर्वणः इति।

९. ३)

१०. २)

११. १)

१२. २)

**उत्तराणि-२**

१३. अतो रोरप्लुतादप्लुते इति सूत्रस्यार्थस्तावत् - अप्लुताद् अतः परस्य रोः स्थाने उत् भवति अप्लुते अति परे।

१४. अतो रोरप्लुतादप्लुते इति सूत्रे स्थानी हि अप्लुताद् अतः परः रेफः यः अप्लुताद् अतः अव्यवहितपूर्वः अस्ति। आदेशश्च उत्।

१५. रोः पूर्वम् अत् , परम् अत् अस्ति चेत् अतो रोरप्लुतादप्लुते इति सूत्रं प्रवर्तेत।

१६. रोः पूर्वम् आकारः, परम् आकारः अस्ति चेत् भो-भगो-अघो-अपूर्वस्य योऽशि इति सूत्रं प्रवर्तेत।

१७. हलि सर्वेषाम् इति सूत्रेण भो-भगो-अघो-अपूर्वस्य यस्य लोपः भवति हलि परे।

।।इति नवमपाठः सन्धिप्रकरणं च।।





# प्रथमपुस्तकस्थसूत्राणां सूची

## (अकारादिक्रमेण)

**पाठे स्थानम् - सूत्रम् - अष्टाध्ययीक्रमः**

[७.८] अकः सवर्णे दीर्घः॥ (६.१.९७)
[५.१३] अचश्च॥ (१.२.२८)
[६.४] अचो रहाभ्यां द्वे॥ (८.४.४६)
[४.१३] अचोऽन्त्यादि टि॥ (१.१.६४)
[३.२] अणुँदित् सवर्णस्य o॥ (१.१.६९)
[९.५] अतो रोरप्लुताद o॥ (६.१.१०९)
[२.१०] अदर्शनं लोपः॥ (१.१.९)
[७.१४] अदसो मात्॥ (१.१.१२)
[४.२] अदेङ् गुणः॥ (१.१.२)
[६.६] अनचि चा॥ (८.४.४७)
[९.३] अनुस्वारस्य ययिo॥ (८.४.५७)
[५.६] अनेकाल्शित् सर्वस्य॥ (१.१.५५)
[४.११] अपृक्त एकाल्o॥ (१.२.४१)
[५.४] अलोऽन्त्यस्य॥ (१.१.५२)
[४.१४] अलोऽन्त्यात्o॥ (१.१.६५)
[२.१] आदिरन्त्येन सहिता॥ (१.१.७१)
[२.५] आदिर्ञिटुडवः॥ (१.३.५)
[५.७] आदेः परस्य॥ (१.१.५४)
[७.२] आद् गुणः॥ (६.१.८४)
[५.१] आद्यन्तौ टकितौ॥ (१.१.४६)
[५.१२] इको गुणवृद्धी॥ (१.१.३)
[६.२] इको यणचि॥ (६.१.७७)
[४.२३] इग्यणः सम्प्रसारणम्॥ (१.१.४४)
[७.१३] ईदूदेद् द्विवचनंo॥ (१.१.११)
[२.१२] उच्चैरुदात्तः॥ (१.२.२९)
[८.१४] उदः स्थास्तम्भोः॥ (८.४.६०)
[२.२] उपदेशेऽजनुनासिक o॥ (१.३.२)
[४.१८] उपसर्गाः क्रियायोगे॥ (१.४.५९)
[७.६] उपसर्गाद् ऋतिo॥ (६.१.८८)
[७.३] उरण् रँपरः॥ (१.१.५०)
[२.११] ऊकालोऽज्o॥ (१.२.२७)
[७.१] एकः पूर्वपरयोः॥ (६.१.८१)
[७.९] एङः पदान्तादति॥ (६.१.१०५)
[७.७] एङि पररूपम्॥ (६.१.९१)
[६.८] एचोऽयवायावः॥ (६.१.७५)
[९.११] एतत्तदोः सुलोपोo॥ (६.१.१२८)
[७.५] एत्येधत्यूठ्सु॥ (६.१.८६)
[८.२] खरवसानयोo॥ (८.३.१५)
[८.७] खरि चा॥ (८.४.५४)
[४.१९] गतिश्च॥ (१.४.६०)
[५.५] ङिच्च॥ (१.१.५३)
[४.१६] चादयोऽसत्त्वे॥ (१.४.५७)
[२.७] चुटू॥ (१.३.७)
[८.१६] झयो होऽन्यतरस्याम्॥ (८.४.६१)
[८.१५] झरो झरि सवर्णे॥ (८.४.६४)
[८.६] झलां जशोऽन्ते॥ (८.२.३९)
[६.७] झलां जश् झशि॥ (८.४.५३)
[९.१०] ढ्रलोपे पूर्वस्य o॥ (६.३.११०)
[३.३] तपरस्तत्कालस्य॥ (१.१.७०)
[५.९] तस्मादित्युत्तरस्य॥ (१.१.६७)
[५.८] तस्मिन्निति निर्दिष्टेo॥ (१.१.६६)
[२.९] तस्य लोपः॥ (१.३.९)
[३.१] तुल्यास्यप्रयत्नंo॥ (१.१.९)
[८.११] तोः षि॥ (८.४.४२)
[८.१३] तोर्लि॥ (८.४.५९)
[४.१०] दीर्घं चा॥ (१.४.१२)
[७.१२] दूराद्धूते चा॥ (८.२.८४)
[८.१०] न पदान्ताट्टोरनाम्॥ (८.४.४१)
[२.४] न विभक्तौ तुस्माः॥ (१.३.४)
[९.२] नश्चापदान्तस्य o॥ (८.३.२४)
[७.१५] निपात एकाजनाङ्॥ (१.१.१४)
[२.१३] नीचैरनुदात्तः॥ (१.२.३०)

टिप्पणी




[४.६] परः सन्निकर्षः०॥ (१.४.१०९)
[७.११] पूर्वत्रासिद्धम्॥ (८.२.१)
[४.१५] प्राग्रीश्वरान्निपाताः॥ (१.४.५६)
[४.१७] प्रादयः॥ (१.४.५८)
[७.१६] प्लुतप्रगृह्या०॥ (६.१.१२१)
[४.३] भूवादयो धातवः॥ (१.३.१)
[९.७] भो-भगो-अघो०॥ (८.३.१७)
[५.२] मिदचोऽन्त्यात् परः॥ (१.१.४७)
[२.१५] मुखनासिकावचनो०॥ (१.१.८)
[९.१] मोऽनुस्वारः॥ (८.३.२३)
[५.१०] यथासंख्यमनुदेशः०॥ (१.३.१०)
[८.१२] यरोऽनुनासिके०॥ (८.४.४४)
[४.२४] यस्मात् प्रत्यय ०॥ (१.४.१३)
[४.२१] यू स्त्र्याख्यौ नदी॥ (१.४.३)
[३.५] येन विधिस्तदन्तस्य॥ (१.१.७२)
[९.९] रो रि॥ (८.३.१४)
[२.८] लशक्वतद्धिते॥ (१.३.८)
[७.१०] लोपः शाकल्यस्य॥ (८.३.१९)
[९.४] वा पदान्तस्य॥ (८.४.५८)
[८.४] वा शरि॥ (८.३.३५)
[६.९] वान्तो यि प्रत्यये॥ (६.१.७६)
[५.१४] विप्रतिषेधे परं०॥ (१.४.२)
[४.५] विरामोऽवसानम्॥ (१.४.११०)
[८.३] विसर्जनीयस्य सः॥ (८.३.३४)
[४.१] वृद्धिरादैच्॥ (१.१.१)
[७.४] वृद्धिरेचि॥ (६.१.८५)
[८.१७] शश्छोऽटि॥ (८.४.६२)
[८.८] शात्॥ (८.४.४३)
[४.२२] शेषो घ्यसखि॥ (१.४.७)
[२.६] षः प्रत्ययस्य॥ (१.३.६)
[५.३] षष्ठी स्थानेयोगा॥ (१.१.४९)
[८.९] ष्टुना ष्टुः॥ (८.४.४०)
[४.४] सनाद्यन्ता धातवः॥ (३.१.३२)
[२.१४] समाहारः स्वरितः॥ (१.२.३१)
[६.३] संयोगान्तस्य लोपः॥ (८.२.२३)
[४.९] संयोगे गुरु॥ (१.४.११)
[८.१] ससजुषो रुः॥ (८.२.६६)
[६.१] संहितायाम्॥ (६.१.७२)
[४.१२] सुप्तिङन्तं पदम्॥ (१.४.१४)
[८.५] स्तोः श्चुना श्चुः॥ (८.४.३९)
[५.११] स्थानेऽन्तरतमः॥ (१.१.५०)
[३.४] स्वं रूपं शब्दस्या०॥ (१.१.६८)
[४.२०] स्वरादिनिपातमव्ययम्॥ (१.१.३७)
[२.३] हलन्त्यम्॥ (१.३.३)
[९.८] हलि सर्वेषाम्॥ (८.३.२२)
[६.५] हलो यमां यमि०॥ (८.४.६४)
[४.७] हलोऽनन्तराः०॥ (१.१.७)
[९.६] हशि च॥ (६.१.११०)
[४.८] ह्रस्वं लघु॥ (१.४.१०)